# मल्लिकामारुतम् ।

नाम प्रकरणम् ।

श्रीमदुद्दण्डि कवीश्वरकृतम् ।

बि, ए, उपाधिधारिणः

श्रीजीवानन्द विद्यासागर भट्टाचार्य्यस्याज्ञया

पण्डितवरेण

श्रीरङ्गनाथाचार्य्येण

विरचितया व्याख्ययानुगतम् ।

---

कलिकाता नगरे

सरस्वती यन्त्रे मुद्रितम् ।

इं १८७८ ।

# मल्लिकामारुतम् ।

नाम प्रकरणम् ।

श्रीमदुद्दण्ड कवीश्वरकृतम् ।

बि, ए, उपाधिधारिणः

श्रीजीवानन्द विद्यासागर भट्टाचार्य्यस्याज्ञया

पण्डितवरेण

श्रीरङ्गनाथाचार्य्येण

विरचितया व्याख्ययानुगतम् ।

---

कलिकाता नगरे

सरस्वती यन्त्रे मुद्रितम् ।

---

इं १८७८ ।

# भूमिका ।

जयति श्रीविक्रमतः प्राप्तोद्दण्डाभिधः सबहुमानात् ।
श्रीभोजसदसि गिरा त्रिवारं स्तुतः कविर्दण्डी ।

अथात्रेममितिहासं पेठुः । यथा पुरा खलु श्रीविक्रमार्कराज-राज्यादनन्तरं श्रीभोजराजराज्यकाले तत्सभायां कदाचिन्मिलितेषु कालिदासभवभूतिबाणदण्डिप्रभृतिषु कविजनेषु मध्ये च तेषां महा-कविपदप्राप्त्यनिर्णयाय कौतुकिना श्रीभोजभूपेन भगवती सरस्वती देवी पूर्णकुम्भे समावाह्य साञ्जलिबन्धमम्ब ! कः कविरित्यपृच्छ्यत । तदा तत्र तया कविर्दण्डीति प्रतिवाक्यमुदपादि एवं प्रामाण्यसिद्धये तेन त्रिवारं परिपृष्टया कविर्दण्डी कविर्दण्डी न संशयः इत्येकमर्द्धमगादि । तदा पुनः परमरुष्टेन मेधा रुद्रेण कोऽहं इति प्रश्ने त्रिवारं क्रियमाणे पुनस्तया त्वमेवाहं त्वमेवाहं त्वमेवाहं न संशय इत्यपरमर्द्धं न्त्विति । अतएव तस्य कालिदासस्य सरस्वत्यवतार इति प्रथितेति च । अस्य कवेरभिजननिवासप्रदेशादिप्रपञ्चः तथा श्रीविक्रमार्कान्नाम प्राप्ति-प्रकारः प्रकरणनिर्माणकारणञ्च प्रकरणप्रस्तावनायां विशदमुपलभ्यते । प्रकरणनिर्माणकालस्तु श्रीविक्रमनिदेशबहुमतिजन्यत्वेन तद्राजराज्य-काल इति स्पष्टम् । किञ्च कविशिखामणाविस्मिन् भोजसभां प्रथम-प्रविष्टे तेन राज्ञा पुनरस्य परीक्षायै इन्दुदण्डश्च चन्द्रश्च भारतश्चेह पर्यय इत्युक्ते । अत दण्डी कविर्ब्रूते सारं पर्वणि पर्वणि इत्यनेन कविना प्रतिवाक्यं दत्तम् । तदाकर्ण्य परं आनन्दपरवशेन तेन भोजेन । जाते जगति वाल्मीकौ कविरित्यभिधाभवत् । कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि इतीदं पद्यं पठितमिति इतिहासः श्रूयते । अनेन कविना च छन्दोविचितिकाव्यादर्श मल्लिकामारुतदशकुमारचरि-तादयो लोकोत्तराः प्रबन्धा निर्मिताः । केचित्तु उद्दण्डदण्डिनामानौ भिन्नावेव कवी तयोरुद्दण्डनाम्ना मारुतमिदं प्रकरणं दण्डिना तु काव्यदर्शादीनि इति प्राहुः । तत्र तथा भिन्नत्वोक्तौ बीजप्रश्ने सदार-व्यभिचारयिव तूष्णीं भावं तमेवोत्तरमन्वक्ता एव प्रष्टव्याः ।

उद्दण्डदण्डिशब्दयोरेककविवाचकत्वे विनिगमना तु । किञ्चिदि
प्रतिपाद्यते । तथाहि । उत् महान् दण्डो गर्वः यस्य सः उद्दण्डः उद्धत
इत्यर्थः । दण्डो गर्वः अस्य अस्तीति दण्डी । प्रशंसायां मतुप् । उद्धत
इत्यर्थः । दण्डो स्त्री लगुडे पुमान् इत्यारभ्य दमे यमेऽभिमाने चेति
मेदिनी । तथाच बहुव्रीहिमतुपोः उभयत्र अतिमात्रौद्धत्यशालीत्वे
बोधस्य तुल्यत्वात् उद्दण्डपदवाच्यस्यास्य दण्डीत्यपि नाम प्रथितमासीत् ।
अथवा उत् महान् दण्डो दमः (शिक्षा) पापानामित्यर्थः । यस्मिन्
स उद्दण्डः तथा दण्डः शिक्षा पापानामित्येव अस्मिन्नस्तीति दण्डी
प्रशंसायां मतुप् । इत्थं मानुषपापशिक्षकत्वाभिप्रायबोधकत्वेन उद्दण्ड
दण्डिशब्दौ समर्थाचिनौ । पुरा किलास्य कवेरसदृशपाण्डित्यालोकजा
नन्दपरवशेन श्रीविक्रमेण तत्काले अतिचतुरकवे इत्याकारणे कर्त्तव्ये
कविनिवहनिर्भरकम्पप्रदायकपाण्डित्यशालित्वाभिप्रायेण । समकवे इत्यर्थ
बोधकं उद्दण्डविद्वन् सर्वोद्दण्डकविप्रकाण्ड इति संबुद्धिपदद्वयं सिंह
माणवक इत्यादिकप्रशंसाकालप्रयुज्यमानलौकिकव्यवहारानुसारेण प्रायो
जि । सिंहमाणवकेत्यत्रेव उद्दण्डविद्वन्नित्यत्रापि उद्दण्डपदस्य विद्वत्पदे
कर्म्मधारयसमासाश्रयणादभेदसंसर्गेणान्वयः । इत्थं महाराजविक्रमा
ऽऽकारितत्वेन लोकेऽप्युद्दण्ड इत्येवास्य नामासीत् । तथा उद्दण्डपद
समानार्थकत्वेन लोके दण्डीति च नामास्यासीत् । दण्डिकविरित्यत्र
तु दण्डी यमः । दण्डी द्वास्थे यमे इति नामार्थमाला । तस्यापि अभे
देनैव कविपदेऽन्वयः । सर्वोद्दण्डकविप्रकाण्डेत्यत्र । सर्वेषां सर्वकवीनां
इत्यर्थः । उद्दण्डकविप्रकाण्डसमाभिन्नकविश्रेष्ठेत्यर्थः एवञ्च समप्राय
त्वार्थवाचिनोरुद्दण्डदण्डिशब्दयोरेककविवाचकत्वे न कापि क्षतिः ।
अपि च एतत्प्रकरणप्रस्तावनायां नटीकृतप्रकरणकर्तृभिज्ञनप्रश्नप्रतिवाक्य
भूत सूत्रधारवाक्ये उद्दण्डो पर नामा कविर्दण्डी सेऽयं दण्डिकवीश्वरः
। उद्दण्डं रङ्गनाथः सुतमलभत
कविता काचित् सुधावाहिनी
इति प्रकरणगतैरेव वाक्यैरुद्दण्ड ण्डदण्डिशब्दयोरेककविवाचकत्वेनको
सवर्णैः असङ्कुलमधिगमयदातम् ।

इह पुनरेतत्प्रकरणकर्त्ता कविर्दण्डी । काव्यादर्शकृतः कवे-
र्दण्डिनो भिन्न इति ये केचित् । तथा तावदनयोः पृथक्त्वपक्षे एतत्प्रकरण-
कर्त्तुः विक्रमादित्यसभाजितत्वेन महाकवित्वमखिलैरविप्रतिपन्नम् । तथा
काव्यदर्शकृतोऽपि महाकवित्वं सुप्रसिद्धम् । एवं सति उभयकर्तृकप्रबन्धयोः
बहुषु स्थलेषु वर्णनप्रकाराः परस्परमेकजातीया दृश्यन्ते । यथा अस्मिन्
प्रकरणे । स्पर्श एष हृदयङ्गमः सुधार्णववद्वपुषि को विभाव्यते । चन्द्र
चन्द्रमणिहार मालती गन्धसार घनसारशीतलः । इति । एवमेव काव्या
दर्शे । चन्दनोदकचन्द्रांशु चन्द्रकान्तादिशीतलः। स्पर्शस्तवेत्यतिशयं बोध-
यन्ती वपुरुपमेति । तथा एतत्प्रकरणे सञ्चरन्ति मृगनाभिचर्चिता मे-
चकाम्बरकृतावगुण्ठनाः । प्राणनाथमभिसर्त्तुमुद्यताः सुभ्रुवस्तिमिरदे-
हता इवेति । एवं काव्यादर्शे अतिशयोक्तिस्थले । मल्लिकामालभारिण्यः
सर्वाङ्गीणार्द्रचन्दनाः। क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः
इति अत्र पद्यद्वये क्रमात् वर्णनीयतया प्रस्तुतयोः तमोज्योत्स्नयोः ।
मल्लिकामाल्य मृगनाभ्यादिकृतनायिकाकान्तिमन्वेतिमा भिन्नतया वर्णना-
र्तिमात्रत्वं सुतरां प्रतीययतीति वर्णनीयवस्तु[illegible]मात्रम् । तथा प्रकरणे
मध्योऽस्ति वा नास्ति वा इति । एवं काव्यादर्शे संशयातिशयोक्तिस्थले
स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव अस्ति नास्तीति सन्देहः इति
त्युक्तप्रबन्धद्वये तत्र तत्र वर्णनप्रकाराणां परस्पराभेदसंवादितया
दृशवर्णनप्रकाराणां एतत्प्रबन्धद्वयादन्यत्र प्रायशो दृष्टचरत्वा भावाच्च
तत्प्रबन्धद्वयनिर्मात्रोरन्यतरस्य चोरकवित्वापातः । तथा सेयं दण्डि-
कवीश्वरस्य कवितेत्युक्तिविरोधादि प्राक् प्रपञ्चितदोषापातश्चेत्यतो मह-
सामञ्जस्यम् । किञ्च तत्तादृशमहाकविदण्डिरचितत्वेन रूपकान्तरस्य
र्शनाभावश्च । तस्मात् छद्मदण्डि तत्पर्याय दण्ड्यादिपदैश्च वाच्यः
विरेक एवेत्ययमेव पक्षः क्षमः सयुक्तिकस्सम्भूतश्च इति ।

अथ तत्र भवान् महाकविरहृदण्डापरनामा दण्ड्याचार्य्यः। काव
यशसेऽर्थकृते**करोति कीर्त्तिं प्रीतिं च साधुकाव्यनिषेवणम्। नायको य
सर्वैरत्र लोकोत्तरगुणोत्तरः। इत्याद्यनेकवचनप्रकारेण उत्तमनायकप
स्यैव काव्यस्य निखिलश्रेयःसाधनतामनुचिन्त्य भगवतः सकललोकप्रा
नाथस्य वायोरवतारभूतं धीरशान्तत्वाद्यखिलगुणविशिष्टं मारुतनामा
अमात्यकुमारं नायकमुपनिबध्य तस्य मल्लिकाख्य नायिका परिणयाव
ध्वयोः सखित्वेन कलकण्ठरमयन्तिकाभिधावुपनायकौ परिकल्प्य तयो
परिणयात्मकं च वृत्तमुत्पाद्य तन्मूलकमिदं श्रीविक्रमार्कसत्कारभू
मल्लिकामारुताख्यं प्रकरणरत्नं शृङ्गाररसप्रधानं दृश्यप्रबन्धभेदमका
र्षीत्। प्रकरणलक्षणं तु दशरूपे। अथ प्रकरणे वृत्तमुत्पाद्यं लोक
संश्रयम्। अमात्य विप्रवणिजामेकं कुर्य्याच्च नायकम्। धीरप्रशान्
सापायं धर्मकामार्थतत्परं शेषं नाटकवत् सन्धिप्रवेशकरसादि
कम्। इति एतत्प्रकरणनायकस्य वाय्ववतारत्वं तु ग्रन्थे स्फुटि
भविष्यति।

---

# मल्लिकामारुतं

## नाम प्रकरणम्।

कल्याणं वः क्रियासु मिलदटनियुगस्थास्नु गीर्वाण भोगि
स्त्रैणव्यत्यस्त कल्पद्रुम नवसु मनोनागहारावलीनि।
नालीकाश्लिष्ट लक्ष्मीकरचल नलिनोद्गीत माध्वीकधारा
तिम्यत् फालेक्षणानि त्रिपुर हरधनुर्ज्या लताकर्षणानि ॥१॥

---

कल्याणमिति। त्रिपुरहरधनुर्ज्यालताकर्षणानि ज्या मौर्व्वीलतेव ज्यालतेत्युपमितसमासः। धनुषो ज्यालता धनुर्ज्यालता तस्याः आकर्षणानि बाणमोचनाय कर्णोपान्त समानयनानि धनुर्ज्यालताकर्षणानि त्रिपुरहरस्य पुरत्रयसंहारोद्यत श्रीशङ्करस्य धनुर्ज्यालताकर्षणानि त्रिपुरहरधनुर्ज्यालताकर्षणानि कर्त्तृणि धनुर्ज्यालताकर्षणानां विशेषणसामञ्जस्याय त्रिपुरहरेत्युक्तं नतु केवलं शङ्करेति। त्रिपुरसंहार समयं विना अन्यदा शङ्करधनुर्ज्यालताकर्षणानां वक्ष्यमाणमिलदटनीत्यादिविशेषण बैयर्थ्यापातात्। वः कल्याणं क्रियासुः विधासन्तु डुकृञ्करणे इति धातोः कर्त्तरि परस्मैपदादाशिषि लिङ्। तानि कथम्भूतानि मिलन्त्योः चक्राकारेण कर्षणवशात् संयुञ्जन्त्योः अटन्योः धनुष्कोट्योः (सुरलोक नागलोकात्मिकयोः) कोटिरस्याटनीत्यमरः। यत् युगं युगलं तत्र स्थास्नुनी स्थिरतरे स्थास्नु-स्थिरतर स्थेयानित्यमरः। गीर्वाणाश्च भोगिनश्च एषां स्त्रैणे स्त्रीसमूहौ गीर्वाणस्त्रैणं भोगिस्त्रैणञ्चेत्यर्थः। ताभ्यां व्यत्यस्ताः विपर्यस्ता क्रमात् गृहीता इति यावत् कल्पद्रुम नवसुमनांसि च नागा भुजङ्गाश्च एषां हारावलयः नागाभरणस्य त्रिपुरहरस्य कण्ठगता कल्पद्रुम नवसुमनोहारावलयः नागहारावलयश्चेत्यर्थः येषु तानि तथा भूतानि। त्रिपुरसंहरणकाले मूलाग्रभूत नागलोक देवलोकस्य महामेरोस्तच्चापत्वेन परिणामात् तच्चापकोटिद्वयगत सुरस्त्रैण नागस्त्रैणाभ्यां चापकोटिद्वयस्य मेलनकाले समीपवर्त्तितामापन्ने त्रिपुरहरोरसि स्थिताः कल्पप्रसून-

हारवलयो नागहारावलयश्च स्वस्वोपयोगानुगुण्येन क्रमात् गृहीता इति भावः । अथवा मिलदटनियुगस्याभ्यु गीर्वाणभोगिस्त्रैणाभ्यां व्यत्यस्ताः परस्परं विनिमयत्वेन व्यत्यासं प्रापिताः कल्पद्रुम नवकुसुमनो नागहारावलयः येषु तानि तथा भूतानि अस्मिंश्चार्थे मञ्चाः क्रोशन्तीति वत् नागहारावलय इत्यत्र नागपदस्य लक्षणया नागसम्बन्धिरत्नपरता देवलोक नागलोकभूताऽटनिद्वयमेलनकाले क्रमात् गीर्वाणस्त्रैणेन समीपवर्त्तितामापन्नाय भोगिस्त्रैणाय कल्पद्रुम नवकुसुमनोहारावलिदानेन । तथा भोगिस्त्रैणेन समीपवर्त्तितामापन्नाय गीर्वाणस्त्रैणाय नागरत्नहारावलिदानेन च स्वस्वस्थितोत्कृष्टवस्तु विनिमयो व्यरचीति भावः । नालीकं श्रीरमानाघात्मकं शर आश्लिष्टायाः स्तुतायाः गत्यर्थकर्मक श्लिषशीङित्यादिना कर्त्तरि क्तः । लक्ष्म्याः करयोः चलेज्याकर्षणवशात् चञ्चले ये नलिने सरसिजे ताभ्यामुद्भ्रान्ताभिः उद्गीर्णाभिः माध्वीकानां पुष्परसानां धाराभिः तिम्यत् तिमष्टिमष्टीम आर्द्रीभावे इति धातोर्निष्पन्नम् । आर्द्रीभवदित्यर्थः । शाम्यदिति यावत् । फालेक्षणं वज्राात्मकं तृतीयलोचनं येषु तानि तथा भूतानि इति पूर्वेण सम्बन्धः । स्वभावोक्ति रलङ्कारः । स्वभावोक्ति रसौ चारु यथावत् वस्तुवर्णनम् इति लक्षणात् । इह मिलदटनियुगेत्युक्त्या नायिकाद्वैविध्यं सूच्यते । गीर्वाणभोगीत्युक्त्या नायकद्वित्वं सूच्यते । केचित्तु अत्र प्रकरणे नायकोपनायकौ प्रतिनायकप्रत्युपनायकौ इति नायकबाहुल्यसद्भावात् ज्याकलाकर्षणानीत्यनेन गम्यं कर्त्तृबहुत्वं नायकबाहुल्यसूचकमिति । तत्पक्षे अर्थतः सूचितं भवति नतु शब्दतः इति बोध्यं क्लीबलिङ्गत्वात् । व्यत्यस्त कल्पद्रुम नवकुसुमनोनागहारावलीनीत्युक्त्या हारविनिमय स्वीकारप्रतीतेः विवाहः सूच्यते । तिम्यत् फालेक्षणानीत्युक्त्या वह्नि प्रशमप्रतीतेः महान् विरोधापातस्तत्परिहारश्च सूच्यते । (इह फालेक्षणपदगम्यविरोधापातेनैव प्रतिनायकसूचनसम्भवात् पूर्वमुपन्यस्तं नायकबाहुल्यसूचकमिति पक्षान्तरं किञ्चिच्चिन्त्यं) महतो विरोधापातस्य परिहारस्तु लक्ष्मीकरचलनलिनोद्भ्रान्तमाध्वीकधारेत्युक्त्या कस्याश्चिद्भगवत्याः नयप्रवाहप्रसारवशादिति सूच्यते । इत्यमर्थतः शब्दतश्च मनाक् काव्यार्थः सूचित

नान्द्यन्ते सूत्रधारः ।

चूड़ाशीत करस्तनन्धय सुधा नीरन्ध्र गन्धस्पृशः
क्रीड़ा कङ्कणपन्नगेश्वर फणा पीतावशिष्टा मुहुः ।
अङ्कासीन गिरीन्द्रजास्तनतटीहारावलीलोलना:
सन्तापं शमयन्तु वो हरजटागङ्गातरङ्गानिलाः ॥ (२)

---

इत्यूह्यः । इयमेव नान्दीत्युच्यते । यदुक्तं अर्थतः शब्दतो वापि मनाक् काव्यार्थसूचनमिति । अत्र कविना पदनियमो न विवक्षितः । आशीर्नमस्क्रियारूपः श्लोकः काव्यमुखादितः । नान्दीति कथ्यते तस्यां पदानां नियमोऽपि वा इत्युक्तेः । उक्तञ्च विद्यानाथेन कैश्चिन्नान्द्यां पदनियमो नाभ्युपगत इति । नलिनोद्वान्तेत्यादिना नलिनपदप्रयोगात् मङ्गलं सूचितम् । मङ्गल्या मङ्गचकाञ्ज कोककैरव शंसिनीत्युक्तेः । त्रिपुरसंहारसमये सुरेन्द्राद्भुतीनां चापादिकत्वेन परिणाम इत्युपन्यस्ते व्यर्थेषु सुप्रसिद्धतया विस्तरभिया च प्रमाणवचनं न लिख्यते । अथाप्यत्रेयं श्रुतिः सतिस्रः पुरोभित्वैभ्यो लोकेभ्योऽसुरान् प्राणुदत इति ।

चूडेति । हरजटागङ्गातरङ्गानिलाः वः सन्तापं शमयन्तु । ते कीदृग् भूताः । चूडा शीतकरस्तनन्धय सुधानीरन्ध्रगन्ध स्पृशः । चूडायां विद्यमानो यः शीतकरस्तनन्धयः बालचन्द्रः चन्द्रकला शेखरत्वादिति भावः । तस्य सुधायाः अमृतस्य सुधांशुत्वादिति भावः । नीरन्ध्रगन्ध स्पृशः निविडकणवाहिनः इत्यर्थः । शेखर सुधांशु सुधा सान्द्रशीकरवाहिनः इति भावः । गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोरिति विश्वः । अनेन शैत्यं नाम गुण उक्तः । पुनः कीदृशाः मुहुः पुनः पुनः क्रीडाकङ्कणपन्नगेश्वर फणा पीतावशिष्टाः क्रीडाकङ्कणभूतो यः पन्नगेश्वरः वासुकिः वलयीकृत वासुकित्वादिति भावः । तेन फणया पीतेभ्य वाताशनत्वादिति भावः । अवशिष्टाः शेषभूताः अनेन मान्द्यं नाम गुण उक्तः । पुनः कीदृशाः अङ्कासीन गिरीन्द्रजास्तन तटीहारावलीलोलनाः । अनेन सौरभ्यं नाम गुण उक्तः । अत्र तु गङ्गातरङ्गानिला इत्य-

अपिच,

कण्ठालङ्कार घण्टाघणघण रणिताध्मात रोदः कटाहः ।
कण्ठे कालाधिरोहोचित घनसुभगं भावुक स्निग्धपृष्ठः ॥
साक्षात् धर्मो वपुष्मान् धवलककुद्निर्धूत कैलासकूटः ॥
कूटस्थोवःककुद्मान् निविड़तरतमः स्तोमलक्ष्मीं विलक्ष्यात्॥(२)

---

नेन शैत्यगुणस्योक्तत्वात् सुधानीरन्ध्रगन्ध स्पृश इत्यत्र गन्धशब्दस्य परिमलमर्थं निधाय विशेषणद्वयेनापि सौरभ्यमेवोक्तमिति केचित् । तदसारं अमृतस्य दुग्धादिवत् विलक्षण जलविशेषत्वेन गन्धाभावात् सौरभ्यवाचकविशेषणान्तर सद्भावाच्च हरजटा गङ्गातरङ्गसम्बन्धित्वविशेषणन्तु अनिलानां माहात्म्यविशेष सिद्ध्यर्थम् । तथा च अनिलानां गुणत्रयविशिष्टत्वेन सन्तापशमनसामर्थ्यमभ्यधिकमिति भावः । इह विशेषणत्रयस्य साभिप्रायत्वात् परिकरोऽलङ्कारः । अलङ्कारः परिकरः साभिप्रायविशेषणैरिति लक्षणात् ।

(२)कण्ठालङ्कारेति । रुदन्त्यस्मिन्निति रोदः भूद्यावावित्यर्थः । रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् । सहक् प्रयोगेऽप्यनयोः रोदः स्यादपि रोदसी । इति विश्वः । तत् कटाह इव रोदः कटाहः । कण्ठालङ्कार घण्टा घणघणरणितैः आध्मातः पूरितः रोदः कटाहोयेन स तथोक्तः कण्ठभूषण घण्टारावपूरित भूम्याकाश इति भावः । कण्ठे कालो यस्य स कण्ठेकालः श्रीशङ्कर इत्यर्थः । सप्तमीविशेषणे बहुव्रीहाविति कण्ठपदस्य पूर्वनिपातः । अमूर्द्धमस्तकात् स्वाङ्गादकामे इति सप्तम्या अलुक् । तस्य अधिरोहोचितं घनं विस्तारं घनं स्यात् कांस्यतालादीत्यारभ्य विस्तारे लोहमुद्गरे इति मेदिनी । असुभगं सुभगं भवतीति सुभगं भावुकम् । कर्त्तरि भुवः खिष्णुच् खुकञौ इति खुकञ् । मनोहरीभवत् इत्यर्थः । स्निग्धं मसृणं पृष्ठं चरमशरीरं यस्य स तथोक्तः वपुष्मान् शरीरी साक्षात् प्रत्यक्षभूतः धर्मः उपनिषत् स्वरूप इत्यर्थः । पुण्यस्वरूप इति केचित् । धर्मोऽस्त्रीपुण्य आचारे इति मेदिनी ।

किञ्च

शर्व्वाणी पाणितालैश्चलवलय झणत्कारिभिः श्लाघ्यमानम्
स्थाने संभाव्यमानं पुलकित वपुषा शम्भुना प्रेक्षकेण ।
खेलत् पिञ्छालिकेका कलकल कलितं क्रौञ्चभिद् वर्हियूनो
हेरम्बाकाण्ड वृंहातरलित मनसस्ताण्डवं त्वां धिनोतु ॥ ४

---

धर्म्मोऽहिंसोपमार्गेणोपनिषत्सु धनुष्यपीति शेषः । उक्तञ्चायमर्थः स्कान्दे-शङ्करसंहितायां द्वारदेशे न तं श्वेतं कलधौताचलप्रभम् । क्वणत् किङ्किणिसन्नादैः वधिरीकृत दिङ्मुखं साक्षात् धर्म्मं वपुष्मन्तमित्यादिना आरुरोहाद्रि सङ्काशं महोक्षं रक्षकः सतामिति । धवलो यः ककुदः वृषभाणां स्कन्धसमीपदेशवर्त्ती मांसपिण्डविशेषः । वृषाङ्के ककुदोऽस्त्रियामित्यमरः । तेन निर्धूत कैलासकूटः परिभूतराजताद्रिः कूटेन निश्चलत्वेन तिष्ठतीति कूटस्थः निर्विकारतया चिरजीवीत्यर्थः । एकरूपतया तु यः कालव्यापी स कूटस्थ इत्यमरः । ककुद्मान् श्रीशङ्करवाहनभूतो महोक्षः प्रबलतर तमस्तोमतृण्यां प्रबलतरो यः तमस्तोमः अज्ञाननिवहः तमोगुणप्राचुर्य्यं वा शोकसमूहो वा तमः शोकेऽपीति शेषः । सएव तृण्या तृणसमूहः तां इत्यर्थः । तृण्या तृणसमूहे स्यात् इत्यभिधानम् । विलक्ष्यात् । खादतु । तृणु अदने इत्यस्माद्धातो कर्त्तरि परस्मैपदाशीर्लिङ् । वृषभाणां तृणभक्षणस्य स्वाभाविकत्वाभिप्रायेणेयमुक्तिः ।

(४)शर्व्वाणीति । स्थाने उचितं इत्यर्थः । स्थाने स्यादुचितेऽव्ययं इति नानार्थ रत्नमाला ; अथवा स्थाने सादृश्ये साम्ये इत्यर्थः । गीतवाद्यलयसमय नृत्ये इति यावत् । लक्षणन्तु भावेऽस्तं समावेश्य नृत्यं साम्यं प्रकीर्त्तितमिति स्थानं सादृश्येऽवकाशे इति मेदिनी । शम्भुना स्थाने सम्भाव्यमानमित्यत्र शम्भो र्हर्षातिशयस्ताण्डवपदेन सूच्यते । वीर रौद्ररसाधारमुद्धतं शङ्करप्रियमित्युक्तेः किञ्चोक्तं उद्धतन्तु महेशस्य शासनात्तण्डुनोदितम् । भरताय ततः ख्यातं लोके ताण्डव संज्ञया इति । खेलन्त्यो विलसन्त्यः पिञ्छालयः वर्हं पङ्क्तयः यस्मिन्

आनन्दम्। नेपथ्याभिमुखमवलोक्य। आर्य्ये! इतस्तावत्।

प्रविश्य नटी। समयासं पुष्पाञ्जलिं विकीर्य्य। अय्य! ये म्हि॥

सूत्र (५)। आर्य्ये रङ्गवल्लि! साधीयसी खलु परिषदः कुतूहलादव धानवत्ता। पश्य

आताम्रेण कराब्ज पल्लव पुटे नारात् प्रसूनाञ्जलौ
व्याकीर्णे स्तनकुम्भकोरक भरस्तोका नताङ्ग्या त्वया।
वेगादापतितं प्रिये! प्रथमतः केनेति न ज्ञायते
किं सामाजिक चक्षुषा कुतुकिना किं वा गणेनालिनाम्॥(६)

---

कर्मणि तद्यथा भवति तथा खेलत् पिच्छालिः। केका कलकलकलितः केकारव कोलाहलविधायिनः। केकावाणी 'मयूरस्येत्यमरः। हेरम्बाकाण्ड इंहातरलित मनसः गजाननाऽकालगर्ज्जित क्षुब्ध चेतसो मेघनिर्घोष भ्रान्त्येति भावः। धिनोतु प्रीणयतु सन्तोषयत्वित्यर्थः। धिवि प्रीणनार्थ इति धातोः कर्त्तरि परस्मैपदाल्लोट्।

(५) अये रङ्गवल्लीति। रङ्गवल्लि! इति नटीसम्बोधनम्।

(६)आताम्रेणेति। स्तनकुम्भौ कोरकाविवेत्युपमित समासः। तयोः भरः तेन स्तोकानतं अङ्गं यस्याः इति विग्रहः। अङ्ग गात्र कण्ठेभ्यो वक्तव्यमिति ङीष्। तथा भूतया त्वया आसमन्तात् ताम्रेण अरुणेन कराब्जपल्लवपुटेन प्रसूनाञ्जलौ आरात् समीपे व्याकीर्णे सति हे प्रिये! प्रथमतः वेगात् केन आपतितं आधावितं इति न ज्ञायते तर्हि समापतितस्य विशेषज्ञानं विना यत् किञ्चित् वस्तुमात्रत्वेन ज्ञानं किमित्यतो वस्तुविशेष ज्ञानेऽपि सदृशवस्तुद्वयकोटिकं तदिति प्राह। किं सामाजिकेति। कुतुकिना प्रेक्षण कौतूहलिना सामाजिक चक्षुषा किं किंवा यद्वा अलिनां भ्रमराणां गणेन समूहेनेत्यर्थः। इह उभयतोऽपि आपतितमित्याद्यनुषज्यते। नयनभ्रमरयोः सादृश्यं तु अने-

तदहमुपसृत्य विज्ञापयामि परिषदम् । कृताञ्जलिरुपसृत्य । अये ! निखिलद्वीपविख्यात (७) गुणगणविमल यशो वितानित विष्टपाः सकलशास्त्रार्णवोत्तरण कर्णधाराः (८) सकलभूपाल सभाजिताः सभासदः शृण्वन्तु मम प्रश्रयवतीमिमां विज्ञापनाम्।

अहमस्मि सकलहरिदन्तर नगरसंसदाराधन ज्ञातसार प्रयोगपाटवो विष्टपत्रितय प्रख्यातं कुक्कुट क्रोड़ नगरमुपसृत्य कुतूहलादस्यागतो रङ्गचन्द्रो नाम शैलूष किशोरः। अद्य खलु प्रायेण सर्व्वतः(९)कलिकाल विधुन्तुदकवलित विवेकचन्द्रमसस् सुमनसस् पौरोभाग्य पौरुषेषु परिषदन्त-

---

नैव कविना अन्यत्र दर्शितं यथा न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे इति ॥

(७)निखिलद्वीपविख्यातेति । निखिलद्वीपेषु विख्याता ये गुणगणाः तेषां विमलयशांसि वितानानि येषां इति बहुव्रीहिः । तानि कृतानि विमलयशोवितानितानि तत् करोति इति णयन्तात् कर्मणि क्तः तानि विष्टपानि यैः तेषां सम्बोधनम् । इह वितानं उल्लोच इत्यर्थः । न च वितानितेत्यत्र इतजिति वाच्यम् । तदस्य सञ्जात तारकादिभ्य इतच् इति प्रवृत्तेः वितानपदस्य गणे पाठाभावात् ।

(८)कर्णधारा नाविका इत्यर्थः ।

(९)अद्य खल्विति । सुमनःसु सज्जनेषु कलिकाल एव विधुन्तुदः राहुः तेन कवलितः ग्रस्तः विवेक एव चन्द्रमाः येषां तेषु तथा भूतेषु सत्सु प्रायेन कलिना सतां विवेके दूषिते सति इति भावः । पुरोभागिनो भावः पौरोभाग्यं दोषैक दर्शित्वमित्यर्थः । तस्मिन् तद्वा । पौरुषं पुंस्त्वं येषां तेषु तथा भूतेषु परिषदन्तरेषु सभान्तरेष्वित्यर्थः । अन्तरपदमिह तादर्थ्ये । अन्तरमवकाशावधि परिधानान्तर्धिभेद तादर्थ्ये इत्यभिधानात् । सामाजिकेष्विति यावत् ।

रेषु (१०) लवणापणेष्विव घनसारं अकिञ्चित्करमभिनयसारं अखिलभुवन घस्मर कराल कालकूटकवलन प्रभाव प्रकटित कारुण्यावष्टम्भस्य पुरत्रय नितम्बिनी कपोलपत्राङ्कुर कर्त्तनलवित्रस्य (११) कङ्कणक्वणित स्थिरीकृत शब्दब्रह्म व्यवस्थस्य भगवतः श्रीस्थलीश्वरस्य सन्निधानात् उद्भूत तत्तादृश निर्म्मलधिषणायां अशेषकला कमलिनी विकसन बालार्कप्रभायां सभायां प्रयुञ्जन् सफलयितुं अभिलषामि । अत्र च तत्रभवन्तःप्रमाणम् । आकाशे कर्णं दत्त्वा । किं ब्रूथ? यद्येवमुद्दामशब्दार्थ सन्निवेश शिल्पाकल्पेन शृङ्गाररस गर्भेण नातिसंक्षिप्त विस्तृत विचित्रवृत्त क्लृप्त निर्व्वहणेन केनापि रूपकेण विनोदनीया वयमिति । आर्य्ये ! श्रुतः परिषदादेशः ।

---

(१०)लवणापणेषु लवणविक्रयस्थानेषु लवणविक्रेतृष्विति यावत् । घनसारमिव कर्पूरमिव अकिञ्चित्करं प्रयोजनाऽनापादकं अभिनयसारं कर्म अस्योत्तरत्र सभायां प्रयुञ्जन् इत्यत्र अन्वयः । यथा किल लवणविक्रेतृषु विक्रयायोपनीतं कर्पूरं अप्रयोजनकरं तथा दोषैकदृष्टिषु सामाजिकेषु परितोषाय प्रयोजितोऽभिनयसारोऽप्यप्रयोजनापादक एवेति भावः । पुरत्रयनितम्बिनीनां त्रिपुरसुन्दरीणां कपोलेषु ये पत्राङ्कुरा मकरिकाः तेषां कर्त्तने लवित्रस्य लुनाति अनेनेति लवित्रं लूङ् छेदने इति धातोः अर्त्तिलूधूसूखनसहचर इत्रः इति इत्र प्रत्ययः । शाखादिच्छेदनसाधन क्षुरविशेषः तथा भूतस्येत्यर्थः त्रिपुरान्तकत्वादिति भावः ।

(११)कङ्कण क्वणितेति । कङ्कणस्य श्रीशेषस्य क्वणितेन शब्देन वचनेनेति यावत् । इह श्रीशेषस्य कङ्कणपदेन ग्रहणात् तद्वचसः क्वणितत्वेनोक्तिः । स्थिरीकृता शब्दब्रह्मव्यवस्था यस्येति विग्रहः । श्रीभगवता शेषेणैव पतञ्जलिरूपिणा श्रीमहाभाष्यनिर्माणेन शब्दब्रह्मव्यवस्था विहि

नटी। णं सुणीअदि को उण तारिसोपबंधो।

सूत्रः। स्मरणमभिनीय। हन्त! हस्तगत माणिक्यमापणे मृग्यते। ननु निर्दिष्ट गुणविशिष्टं उद्दण्डकविनिबद्धं मल्लिकामारुतनाम प्रकरण रत्नं अस्मद्वशएव।

नटी। सानुशयं। अध दाणिं तणेसु पबन्धेषु सावहेलाक्खु, लो आहोंदि।

सूत्रः। सोपहासं। शृणु मुग्धे!

(१२) प्रादुष्यात् पण्डितानां कविवचसि कथं प्रत्ननूत्नत्वचिन्ता विद्येरन् यद्यवद्यान्यभि जहति तथा गृह्णते स्यु, गुणास्सेत्।

---

नेति वैयाकरणसमयमनुसृत्य इत्युक्तिरिति बोध्यम्। निर्वहणं सन्धिविशेषः नातिसंक्षिप्तविस्तृतविचित्रवृत्त क्लृप्तानि निर्वहणानि यस्मिन्निति विग्रहः।

(१२)प्रादुष्यादिति। नव्यत्वेन हेतुना काव्ये विदुषां सावहेलतां निरूप्य मूढानां सावहेलत्वेऽपि तत् काव्यस्य दोषाभावं समर्थयन्नाह प्रादुष्यादिति। पण्डितानां कविवचसि काव्ये इत्यर्थः। प्रत्न नूत्नत्वचिन्ता पुरातननवीनत्वेन विमर्शः कथं प्रादुष्यात् प्रादुर्भवेत् इत्यर्थः। नैवेति भावः। उपसर्गप्रादुर्भ्यामस्तिर्यच्परः इति प्रादुसः षत्वम्। ननु प्रत्न नूत्नत्वयोरेव काव्योपादेयानुपादेयत्व विवेकहेतुत्वात् कुत एतच्चिन्ता न स्यादित्यत आह। अवद्यानि दोषाः विद्येरन् यदि अभिजहति त्यजन्ति। तथा गुणा स्युस्सेत् गृह्णते आदास्यन्ति। उभयत्र सन्तः काव्यं इति कर्तृकर्मणोर्गम्यमानत्वादप्रयोगः। तथा च पण्डितानां गुणदोषज्ञानादेव काव्योपादेयानुपादेयत्वविवेकसम्भवात् प्राक्तन नूत्नत्वचिन्ता प्रादुर्भावो नेति भावः। अन्यः पण्डितेतरो मूढस्तु अन्यप्रमाणः अन्यः स्वेतरपुरुषः पण्डितेतरो मूढो वा प्रमाणं सत्यवादी यस्य स तथाभूतः सन् प्रमाणं नित्यमर्यादा शास्त्रेषु सत्यवादिनि इयत्तायाञ्च हेतौ च इति मेदिनी। स्वात्मनः अविवेकितया अन्यप्रामाण्येन स्वत्तिकापिण्डबुद्धिः सन् इति

अन्यस्त्वन्यप्रमाणः परमवमनुते छिद्यते तावता किं
नायं रत्नस्य दोषो दृषदिति यदिदं चिप्रमन्धाः चिपन्ति ॥
अपिच। ये के विचित्ररसशालिषु सत्कवीनाम्

---

प्रथमार्थे भावः। द्वितीयेतु। लोके सतां सत्सु असतां असत्सु च प्रीतिदर्शनात्। प्रकृते मूढस्य मूढे स्वानुगुणत्वात् तत् प्रमाणः सन् इति भावः। परं केवलं नूतनकाव्यमिति शेषः। अथवा परं उत्तमं काव्यं इत्यर्थः। यद्वा अन्यत् प्रथमोदितं प्रत्नकाव्यमित्यर्थः। परमित्यनुपदं वक्ष्य-माणत्वादिति बोध्यम्। तत्प्रमाणं हेतुः उत्तमत्वप्रमाजनकमिति यावत् यस्येति विग्रहः प्राक्तनकाव्यमेव उत्तमं मन्यमानः सन् इत्यर्थः। किंवा अन्यस्मिन् प्रत्नकाव्ये प्रमाणं मर्य्यादा बहुमानमिति यावत्। यस्य स तथा भूतः सन्। परं उत्तरभूतं नूतनकाव्यमित्यर्थः। इह प्रत्ननूत-त्वचिन्तायत्र प्रत्ननूतनकाव्ययोः क्रमात् पूर्वोत्तरत्वेन पाठादिति बोध्यम्। अवमनुते तिरस्कुरुते। छेदते इति पाठे छेदते अन्यकर्तृकच्छेदन जातीयं छेदनं कुरुते। म्लेच्छादियोग्यं काव्यं छेदनं स्वयं करोतीत्यर्थः। तथा च न केवलं काव्यस्य तिरस्कारणं अपि तु म्लेच्छादिवत् छेदनमपि करो-तीति भावः। छेद द्वैधीकरणे इति परस्मैपदिनः। चुरादिगणीयात् धातोर्विभाषया णिजभाववतः। कर्त्तरि कर्मव्यतिहारे इति सूत्रात् कर्मव्यतिहारे आत्मनेपदिनः कर्त्तरि लटिच्छेदते इति रूपं सिद्धं तावता मूढकर्तृकावमननच्छेदनमात्रेणेत्यर्थः। दोष इत्यनुकृष्यते। दोषः किं नास्य दोष इति भावः। छिद्यते इति पाठे। अवमनुते इत्यन-न्तरं तत् इत्यध्याहारः। तत् उत्तमं नूतनकाव्यमित्यर्थः। तावता मूढकर्तृकावमननमात्रेण हेतुना छिद्यते किं हीयते किं हान्याश्रयं भवति किं इत्यर्थः। नेति भावः। अवछिदेर्लक्षणया हानिरर्थः छिदिर्भेदे इति धातोः काव्यस्य कर्मणः कर्तृत्वविवक्षया कर्त्तरि लटि कर्मवत् कर्मणा तुल्यक्रिय इति सूत्रात् कार्य्यातिदेशेन यदात्मने पदादि-सिद्ध्या छिद्यते इति रूपे पच्यते ओदनो भिद्यते काष्ठं इति वत् प्रयोगः। तथा च मूढकर्तृकानादरमात्रेण नूतनकाव्यस्य न हानिरिति भावः।

सूक्तिषु कर्णपथगामिषु नाद्रियन्ते ।
ते मालती परिमलेष्वपि कन्दलत्सु
नासापुटं करतलेन पिदध्युरेव ॥

कथितञ्च तेन कवितुरासाह्वा (१३)

(१४) सन्तश्चेदिह गुणबिन्दवो बुधस्तान्
सन्तुष्टः कवलयति स्फुटेऽपि दोषे ।
संयुक्तानपि पयसः कणान् विचिन्वन्
अम्भस्तो ग्रसति हि मंजु मल्लिकाक्षः ॥

नटी । सश्लाघम् । ता कोरिसाइ सुणिज्जन्ति तस्स देवस्स गीसाइ ।

---

तथा हि यस्याः दृषत् शिलेति इदं रत्नं कर्म छिन्नं क्षिपन्तीति यत् अयं शिलात्वज्ञानेन अन्यकर्तृको रत्नत्यागः । रत्नस्य दोषो न भवतीत्यर्थः । इह छेदते इति पाठेनान्वये तावता न काव्यस्य दोष इति सामान्यं निर्दिश्य तेन सह नायं रत्नस्य दोष इत्यादिना अप्रस्तुत विशेषस्य न्यसनात् सामान्येन विशेष समर्थनरूपोऽर्थान्तर न्यासः । उक्तिरर्थान्तरन्यासस्स्यात्सामान्यविशेषयोरिति लक्षणात् । छिद्यते इति पाठे मान्वये तु नूतनकाव्यरत्नयो रुपमेयोपमान वाक्ययोः भिन्नयोरपि रपि धर्मयोर्दोषभावदोषाभावयोर्विम्बप्रति विम्बभावेन दृष्टान्तोऽलङ्कारः । चेद्बिम्ब प्रतिविम्बत्वं दृष्टान्तस्तदलङ्कृतिरिति लक्षणात् ।

(१३)कवि तुरासाह्वा कवीन्द्रेण तुरासाण् मेघवाहन इत्यमरः ।

(१४) सन्त इति इह काव्ये गुणबिन्दवः सन्तश्चेत् वर्त्तमाना यदि तान् गुणकणान् बुधः पण्डितः । दोषे स्फुटेऽपि सन्तुष्टः सन् कवलयति स्वीकरोति । अथवा इह दोषे स्फुटेऽपि गुणबिन्दवः सन्तश्चेत् इति योजना तथा हि मल्लिकाक्षः हंसविशेषः । संश्लिष्टान् मिलिता नपि पयसः क्षीरस्य कणान् अम्भस्तः सलिलात् मंजु भृशं विविञ्चन् पृथक् त्वेन कुर्वन् सन् ग्रसति इति योजना ।

स्रवः। (१५) अस्ति दक्षिणापथे दयमानःकामाक्षी कटाक्षताण्डवित कविगिखण्डि मण्डलेषु तुण्डीरेषु क्षीरनदी तरङ्गितोपशल्यो लाट पुरनामा महानग्रहारः। तत्र च

तपश्चरणचुञ्चवःसकलशास्त्रमुष्टिन्धयाः
स्वनुष्ठित महाध्वराः श्रुति परायणाः श्रोत्रियाः।
महाभिजनशालिनो वदनवर्त्ति वाग्देवता
वसन्त्यतिथि सत्कृति क्षपित वासरा भूसुराः। (१६)

तत्र च आमुष्यायणस्य आपस्तम्ब शाखाध्यायिनो वाधूल कुलतरु पल्लवस्य कवितावल्लभस्य पञ्चमोच्चित कीर्त्ते रुपाध्याय गोकुलनाथ पौत्रस्य श्रीकृष्णसूनोः भट्टरङ्गनाथस्य प्रियनन्दन इरुगुपनाथापरपर्य्यायो दण्डिकविर्नाम।

---

(१५)अस्ति दक्षिणापथेति। तुण्डीरेषु काञ्चीप्रदेशेष्वित्यर्थः। क्षीरनदीतरङ्गितोपशल्यः तरङ्गाः अस्य सञ्जाताः तरङ्गितं तदस्य सञ्जातमिति तारकादित्वादि तच्। क्षीरनद्या तरङ्गितं उपशल्यं ग्रामसमीपप्रदेशः यस्येत्यग्रहारस्य विशेषणं ग्रामान्तमुपशल्य स्यादित्यमरः। तपश्चरणचुञ्चव इत्यादि पद्ये। तपश्चरणेन वित्ताः तपश्चरण चुञ्चवः तेन वित्त इत्यादिना चुञ्चु प्रत्ययः। महातपस्विन इत्यर्थः। सकलशास्त्रमुष्टिन्धया इत्यत्र धेट् पाने। धयन्तीति धयाः पाघ्राध्मेत्यादिना धेटः शः। मुष्टीनां धयाः मुष्टिन्धयाः नाड़ीमुष्ट्योश्चेति खश्। अरुर्द्विषदजन्तस्य मुम् इति मुम्। सकलशास्त्राणां मुष्टिन्धयाः सकलशास्त्रमुष्टिन्धयाः मुष्टिग्राहं गृहीत सकलशास्त्रा इति भावः। महाभिजनशालिनः उत्तमकुलप्रसूता इत्यर्थः गोत्रञ्चाभिजनःकुलं इति हलायुधः।

(१६)तत्र च आमुष्यायणस्येति। आमुष्यायणस्य अमुष्य अपत्यमित्यर्थः। आमुष्यायणा अमुष्यपुत्रिका अमुष्य कुलिकेति चेत्यनेन सिद्धः।

नटी। सलग्घणिज्जाक्ख, सवम सुद्धी अहंदेण पसंसणिज्जेसु सिरिराम सुहाणं महापुरुसाणं चरिरासु चिठ्ठियेसु कीस उव्वादणिज्जं वत्थु गहणविसंट्ठुल सघघ्मणां आरद्धं।

सूत्रः। कतूहलिनि! महानयं प्रसक्तानुप्रसक्तः प्रस्तावः संक्षिप्य तु ब्रवीमि। स किल विधिवदुपासितात् तीर्थात् अधिगतसकलविद्यो दिदृक्षु दिगन्तराणि आन्ध्र कर्णाट कलिङ्ग चोलकेरलान् अवतीर्णः मज्जन् महानदीषु पश्यन् देवतास्थानानि सेवमानःसज्जनान् अभिनन्दन् अन्तर्वाणीन् दूरमेव ताम्रचूड़क्रोड़ नगर माढौकत आढौक्य च।

(१७) आस्थान मध्यगतमुन्नत सौविदल्ल
भ्रूक्षेप चोदित नमच्चतुरन्त वीरम्।
श्रीविक्रमश्चतुरवारवधू कराब्ज
व्याधूत चामरमलोकत लोकनाथम्।

अस्तौष्ट च।

प्रत्यर्थि भूमिपाल प्रतापघर्मांशु पुष्करावर्त्त!
विश्वम्भरा कुटुम्बिन्! विक्रमविश्वैकवीर! विजयस्व।

---

आन्ध्रकलिङ्गकर्णाटचोलकेरलान् उक्त नामदेशविशेषानित्यर्थः। ताम्रचूड़क्रोड़नगरं विक्रमार्कस्थानभूतं कुक्कुट क्रोड़नगरं आढौकत आगमत्।

(१७)आस्थानमध्यगतमित्यस्मिन् पद्ये आस्थानं नृपसभा। आस्थानं नृपतेः सभेति हलायुधः। उन्नताः ये सौविदल्लाः कञ्चुकिनः तैः भ्रुवोः उत्क्षेपेण उर्द्धचालनेन चोदिता प्रणामाय प्रेरिताः अतएव नमन्तः चतुरन्तवीराः यस्मै तं तथोक्तम्। इह चोदित नमच्चतुरन्तवीरं इत्यनेन

नटी। सअलकद्दमण्डल सिहण्डरअणेण महा राअ विक्कमेण किं आणत्तम्।

सूत्र:। देवोऽपि परिसरवर्त्तिकोविदकविवदनाकृष्टेन विघटमान कमलदल शीतलेन कटाक्षेण सम्भावयन् एवं सादरमिद मादिशत्

(१८)श्रीमन् उद्दण्डविद्वन्! निशमय वचनं मामकं कामदोगधी वाणी नाणीयसी ते ननु वरकविता भूषिता वागविलासे। तस्मादज्ञाय सम्यक् प्रकरणमतुलं मल्लिकामारुताख्यं किञ्चिद्रसार्द्रं विरचय विधिना सत्कवे! सत्क्रियां मे।

नटी। इमस्स कद्दणोपबन्ध स्स वि णामहेयं महाराएण सअं एव्व किअम्।

---

प्रणामेऽपि राजापराध शङ्कया प्रणामाज्ञाकालप्रतीक्षकत्वं चतुरन्तवीरेषु प्रदर्शितम्। भ्रूक्षेपेत्यनेन वचनाऽनर्हसमयत्वप्रतिपादनात् महासन्निधानत्वं सौविदल्लानां चतुरन्तवीरानुनीतत्वं व्यज्यते। तथा च निरुपमं प्राभवं श्रीविक्रमस्येति भावः।

प्रत्यर्थिभूमिपालेत्यस्मिन् पद्ये। प्रत्यर्थिभूमिपालानां शत्रुन्नृपाणां प्रतापः प्रभाव एव प्रतापः सन्ताप इति श्लिष्टरूपकम्। स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजं इत्यमरः। तस्य घर्मोस्थ्यः गीष्मसमुद्भतः यः पुष्कलावर्त्तः श्रेष्ठो मेघविशेषः तथाभूत इति विक्रमार्कस्य सम्बुद्धिः। घर्मः स्यादातपे ग्रीष्मे इति मेदिनी। पुष्कलावर्त्तानां मेघश्रेष्ठत्वं तु अभिहितं महाकविना। जातं वंशे भुवनविदिते पुष्कलावर्त्तकानामिति। इत्यत्र यथा प्रजानां सन्तापं शमयति ग्रीष्मोत्थः पुष्कलावर्त्तः तथा शत्रुभूपानामपि प्रभावं भवान् शमयतीति भावः।

(१८) श्रीमन्! उद्दण्डविद्वन्! निशमयेति पद्ये। मे मह्यं सत्क्रियां सत्काररूपमित्यर्थः।

सूत्रः। अथ किम्?।

नटी। अच्चरीयं येदं जं इमस्सिं राअत्तणं कइ-त्तणन्ति।

सूत्रः। सत्यमाश्चर्य्यकरमेव।

(१९) कविहृदयेषु अनसूया कस्तूरी कर्दमेषु अमालिन्यम्।
अक्षारता पयोधौ अवनौ पालेषु पाण्डित्यम्॥

नटी। होदु अदो वरं जाणिदं एव्व। राअद्देसेण किअं पअरण रयणं त्ति।

सूत्रः। (२०) कथितमपि।तन्मीमांसक चक्रवर्त्तिना महर्षिपुत्रेण परमेश्वरेण।

(२१)वेदे सादरबुद्धिरुद्धततरे तर्के परं कर्कशः
शास्त्रे शान्तमतिः कलासु कुशलः काव्येषु भव्योदयः।
श्लाघ्यः सत् कवितासु षट्स्वपि पटुर्भाषासु सत्वं चितौ
सर्वोद्दण्डकविः प्रकाण्डदृदसे कस्मै न विस्मेरताम्॥

---

(१९) कविहृदयेष्विति। अस्य पद्यस्य सत्यमाश्चर्यकरमेवेत्यनेन पूर्ववाक्येन सम्बन्धः।

(२०) कथितमिति। मीमांसकचक्रवर्त्तिना पण्डितोत्तमेन महर्षिपुत्रेण गोविन्दनामक महर्षेस्तनयेन इत्यर्थः। तदुक्तं ततो गोविन्दनामाभूत् द्विजो विद्याविशारदः स चतुर्वर्णजाः कन्या उद्वा पुत्रानजीनत्॥ शवरो विक्रमादित्यः हरिश्चन्द्रोऽथ भर्तृहा। इत्येते कोविदा आसन् छतवर्णाश्रमव्रताः॥ इति परमेश्वरेण महाराजविक्रमेण इत्यर्थः।

(२१) वेदे सादरबुद्धिरुद्धततरे इत्यस्मिन् पद्ये। षट्सु भाषास्वपि संस्कृतप्राकृतापभ्रंशपैशाचमागधसौरसेनलक्षणासु इत्यर्थः।

नटी। ता फलम्मुहत्र जम्मं तर सहस्सु यिया अह्माणं पुण्णाण रिं चोली।

सूत्र:। क: संशय:। पश्य।

(२२) विद्याशाणाट्टषत् समस्तपरिषच्चित्रा कथा प्रस्तुता
वोढ़ारश्च चतुर्विधेऽप्यनुनये प्रौढ़ां प्रतिष्ठां वयम्।
सेयं दण्डिकवोश्वरस्य कविता काचित् सुधावाहिनो
सर्वं तिष्ठतु संसदः पतिरसौ मञ्ध्यास्त्रकुंसो हर:॥

[परिषदं प्रति]

---

(२२) विद्येति। समस्तपरिषत् निखिल: सामाजिकजनः विद्याशाणदृषत् विद्यानां शाणदृषत् उत्तेजनशिला समस्तविद्याप्रकाशिकेति भावः। चित्रा चमत्कृतिजनका कथा प्रस्तुता प्रस्तावविषयीकृता। वयञ्च चतुर्विधे आङ्गिकवाचिकसात्त्विकाऽऽहार्य्यकलक्षणे अभिनयेऽपि अभिनयति अभिव्यनक्ति पदार्थान् इतिअभिनयः पचाद्यजन्तः तस्मिन् व्यञ्जके इत्यर्थः। तदुक्तं अभिपूर्वस्तु नीङ् धातुराभिमुख्यार्थनिर्णये यस्मात् पदार्थान्नयति तस्मादभिनयः स्मृत इति। तल्लक्षणन्तु सङ्गीतचूड़ामणौ। अभिव्यञ्जन् विभावानुभावादीन्नाटकाश्रयान्। उत्पादयन् सहृदये रसज्ञानं निरन्तरम्। अनुकर्तृस्थितो योऽर्थोऽभिनयः सोऽभिधीयते॥ आङ्गिको वाचिकश्चैव सात्त्विकाहार्य्यकाविति। स चतुर्द्धाकृतस्तज्ज्ञैरिति। प्रौढां प्रतिष्ठां कार्य्यनिर्वाहसामर्थ्यम्। प्रतिष्ठा तु समाप्तौ गौरवेऽपि च कार्य्यनिर्वाहसामर्थ्ये इति नानार्थरत्नमाला। वोढारः वोढुमर्हाः सा विक्रमादित्यश्लाघितत्वेन प्रसिद्धा दण्डिकवीश्वरस्य इयं कविता इदं प्रकरणरत्नमित्यर्थः। काचित् अनिर्वचनीया सुधावाहिनी पीयूषतरङ्गिणी। सर्वं तिष्ठतु इदमखिलमास्तामित्यर्थः। एकैकं उत्तमं दुर्ल्लभञ्च इहेदमखिलं मिलितमपि प्रबलाश्चर्य्यान्तरसद्भावात् नाश्चर्यकरमिति भावः। किन्तदाह। असौ संसदः पतिः अयं सभानाथः असाविति

(२३)मल्लिकामारुतं नाम मनःसम्वननं नवं
प्रयुञ्ज्महे प्रकरणं प्रसीदन्तु सभासदः ।

इति परिक्रम्यावलोक्य । हन्त ! प्रवृत्तैव कलमुग्धकोकिल-संलापिनी वसन्तलक्ष्मीः । तथाहि

(२४) अमी पुनरुदञ्चिता मधुरगुञ्जदिन्दिराः
सुगन्धि मलयानिला मदनगर्वनाडिन्धमाः ।
अशोकतरुताड़नक्वणित कामिनी नूपुरा
हसत् वकुलधूलिका पटलधूसरा वासराः ॥

निर्वर्ण्य । (२५)अयमपरस्मदनुगुण मेव व्यापार मुपलभ्यते कालः । तथाहि ।

---

श्रीस्थलीश्वरस्य हस्ततो निर्द्देशः । सन्ध्याभङ्गंसः सन्ध्यानटो हरः । सन्ध्यानटत्वेन नाट्यविद्याचार्यस्य त्रिलोकेश्वरस्य शम्भोः एतत् सभानायकत्वमितीदं खलुप्रबलतरमङ्गुर्तमिति भावः ।

(२३) मल्लिकामारुतं नाम इति पद्ये मनःसंवननं चित्तवशङ्करं वशक्रिया संवननमित्यमरः । प्रकरणं रूपकविशेषम् । यथोक्तं नाटकं सप्रकरणं इत्यादि तल्लक्षणन्तु । अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् । अमात्यविप्रवणिजामेकं कुर्य्याच्च नायकम् । धीरप्रशान्तं सापायं धर्मकामार्थतत्परम् । शेषं नाटकवदित्यादि ।

(२४) अमी पुनरुदञ्चितेति । मधुरं गुञ्जन्तः इन्दिराः भ्रमराः येषु ते तथोक्ताः मदनगर्वनाडिन्धमाः मदनस्य गर्वनाड्या धमाः पूरका मदनगर्वोद्रेककरा इति भावः । शखशुमः सुष्टिन्धया इत्यत्रेव ।

(२५) अयमपरस्मदनुगुणमेव व्यापारमुपलभ्यते कालः इत्यत्र अस्मदनुगुणमेव अस्माकं अभिनयप्रयोगप्रवृत्तानां इत्याशयः । अनुगुणं सहायभूतमेव व्यापारं सङ्गीतकं इत्यर्थः ।

(२६) आरब्धे तानकल्पे परभृतनिनदैः पञ्चमस्निग्धकण्ठैः
आरक्ताभिः प्रवालाङ्गुलिभिरभिमृशंश्चूतशाखाविपञ्चीम्।
युञ्जानो मञ्जुरावां मधुकरपटलीतन्त्रिकां पञ्चबाण-
प्रख्यातिं गातुकामो जगति विजयते वैणिकेन्द्रो वसन्तः॥
तदमुमेव समयमधिकृत्य प्रवर्त्ततां संगीतकम्।

---

(२६)आरब्धे तानकल्पे परभृतनिनदैरिति पद्ये। कालस्य सङ्गीतव्यापारोपलम्बित्वमेव वर्णयन्नाह। आरब्धे इति पञ्चमेन षड्जादिसप्तस्वरान्यतमेन स्निग्धः कण्ठो येषामिति विग्रहः। परभृतां निनदैरेव निनदैः ध्वनिभिरेव ध्वनिभिः इति श्लिष्टरूपकं तानकल्पे गानक्रमविशेषे आत्मनेति शेषः। आरब्धे उपक्रान्ते सति आरक्ताभिः समन्तादरुणाभिः प्रवालाः किसलया एव अङ्गुलयः ताभिश्चूतशाखैव विपञ्ची वीणा तां अभिमृशन् आद्यन्ततः संस्पृशन् मञ्जुरावां मनोहरस्वनां मधुकरपटलीभ्रमरपङ्क्तिरेव तन्त्रिका तां युञ्जानः संयोजयन् वसन्तो वैणिकेन्द्र इति व्यस्तरूपकं वीणावादनं शिल्पमेषामिति वैणिकाः तेषामिन्द्रः वैणिकश्रेष्ठ इत्यर्थः। (शिल्पं)इति ठन्। जगति पञ्चबाणप्रख्यातिं मदनदेवप्रसिद्धिं गातुकामः सन् गातुं कामोऽभिलाषो यस्येति विग्रहः। तुं काममनसोरिति मकारलोपः। विजयते सर्वोत्कर्षेण वर्त्तते। यथा च लोके वैणिकेन्द्रः प्रथमं कण्ठशुद्धिविधानादिसम्प्रदायक्रमेण पञ्चमस्वरमनोहरं कण्ठनादः तानकल्पमारभ्य स्वाङ्गुलिभिराद्यन्ततो वीणामभिमृशन् तत्र तन्त्रिकां संयोज्य पुण्यश्लोकादिकयशोगानौत्सुक्यमवगाहते तथा सम्प्रति वसन्तवैणिकेन्द्रोऽपि तात्कालिकपरभृतमिनदादिरूपतानकल्पादि गानसामग्रीसम्पत्त्या श्रीमदनदेवमहिमागानोद्योगमालम्बते इत्यर्थः। यथा च नवप्रवृत्ते वसन्तसमये सर्वतः सम्प्रसृतैः कोकिलकूजितैः आद्यन्ततः किशलयिताभिश्चूतशाखाभिर्गुञ्जद्भिर्मधुकरैश्च सर्वत्र श्रीमदनदेवस्य महिमा वितस्तारेति भावः।

नटी। तह। इति गायति।

(२७) मलआदो णिलयादो मअण महिं दस्स वल्लहोम्मित्ति
एसोकल अंठ सहो मरुअ कुमारो उवइ वास ंदो ॥ ११ ॥

सूत्र:।

(२८) किं कूजितं कोकिल सुन्दरीणां
किं वा निनादः परिवादिनीनाम्।
ज्ञातं चकोराक्षि! मनोज्ञ रागं
गीतं तदेतन्मधुरं भवत्याः॥ ततश्च।

---

(२७) मलयानिलयात् मदनमहीन्द्रस्य वल्लभोऽस्मीति।
एष कलकण्ठसखः मारुतकुमार उपैति वासन्तः॥

मलयेति। मदनमहीन्द्रस्य स्मरमहीभुजः भूभुजश्च वल्लभः प्रीति-विषयः अस्मि इति हेतोः मलयात् मलयाख्यात् निलयात् निवासस्थानात् निवासगृहाच्च कलकण्ठः कोकिलः अन्यत्र कलकण्ठनामा कुमारश्च सखा यस्य स तथोक्तः वासन्तः एष मारुतकुमारः मन्दमारुतः मारुत-नामा कुमारश्च उपैति इति योजना। इह वासन्तमारुतवर्णनप्रस्तावेन कलकण्ठनामकमित्रसंयुतो मारुतनामा कुमारः महाराजवल्लभत्वेन स्वकीयात् निवासादागच्छतीत्येवंरूपः काव्यार्थः सूचितो भवति।

(२८) किं कूजितमिति। कोकिलसुन्दरीणां कूजितं किं किंवा परिवादिनीनां सप्ततन्त्रीवीणानां निनादः इति सन्देहः। ज्ञातं बुद्धं किं तदित्यत आह हे चकोराक्षि! मनोज्ञरागं मनोहरगान्धारादि-स्वरं गीतं गानमित्यर्थः। कस्याश्चिदिति भावः। पुनर्निरूपयन्नाह। मधुरं तदेतत् गीतं भवत्याः तव तदीयमिति यावत्। अथवा हे चकोराक्षि! ज्ञातं बुद्धं मनोज्ञरागं मधुरं तदेतत् श्रूयमाणो ध्वनिविशेषः इत्यर्थः। भवत्या गीतं इति योजना।

(२६) विभ्रमैर्विश्वहृद्यै स्त्वं विद्ययाप्यनवद्यया ।

केनापि हेतुना मन्ये प्राप्ता विद्याधरी चितिम् ॥ १२ ॥

तदद्य वह्नोः कालादुचिताभीष्ट सकलाभीष्टवस्तु सन्निधान-लाभेन देशाद्देशान्तर गमनप्रयासोऽपि महते सन्तोषाय ।

(३०) वस्तुनि चिराभिलषिते कथमपि दैवात् प्रसक्तसंघटने ।

प्राक् प्राप्तान्यपि वहुशो दुःखानि परं सुखानि जायन्ते ॥

नेपथ्ये । भद्र ! भरत पुत्र ! सम्यगुपन्यस्तम् । वस्तुनि चिराभिलषित इत्यादि पुनःपठति ।

सूत्रः विलोक्य । इयं खलु कुसुम पुरोपशल्याश्रमनि-वासिनी, महायोगीश्वरी मन्दाकिनी सह शिष्यया मारसिकया इत एव सन्निधत्ते । तदावां उचित सन्निधानाय गच्छावः

[इति निष्क्रान्तौ ।]

प्रस्तावना ।

---

(२६)विभ्रमैरिति । विश्वहृद्यैः विभ्रमैः अनवद्यया विद्ययापि हेतु-भिरिति भावः । त्वं केनापि हेतुना शापादिरूपेणेति यावत् । चिति प्राप्ता विद्याधरी इति मन्ये । इह अनुमानमलङ्कारः । अनुमानं तदुक्तं यत् साध्यसाधनयोर्वच इति लक्षणात् ।

(३०)वस्तुनि चिराभिलषिते इति । प्राक् अभिलषितवस्तुसङ्घटनात् पूर्वं बहुशः अनेक प्रकारेण प्राप्तानि अनुभूतान्यपि इत्यर्थः । अनेन एतत्-प्रबन्धनायकाननुरागेण अन्योन्यप्राप्तैत्र सुचिरमुद्दामं खेदमनुभूय तदुत्तरं कथमपि भाग्यवशात् समीहितलाभे तद्धेतुत्वात् प्रागनुभूतः खेदोऽपि तयोः सुखरूपतामेषत्रतीत्येवं रूपः काव्यार्थः सूचितो भवति ।

[इति प्रस्तावना । ]

ततः प्रविशति यथोद्दिष्टा मन्दाकिनी ।

मन्दाकिनी । वत्से ! सारसिके ! सत्यमेतत् वस्तुनि इत्यादि पुनःपठति ।

सारसिका । भअवदि ! अज्ज कोउण चिरकं खि यत्थ संघटणो वल्लहो । जेण दुःखं पि सुखं होदि ।

मन्दा । स्वगतम् । इयं खलु देवार्चन कुसुमापचयाय गता न जानात्यद्यतन मुदन्तम । प्रकाशम् । जानास्येव विश्वावसु-नन्दनायां मल्लिकायां मम तादृशं वात्सल्य भावम् । यत प्रयुक्तः कुसुमपुरोपशल्य वासः चिरविस्मृतदेश विरहश्च । मया खलु प्राक् ।

(२१) गौरीविवर्द्धित कुरङ्गकिशोरकाणि
हेरम्ब गण्डकषण त्रुटितद्रुमाणि ।
विद्याधरीभिरभिगीत हरावदाना-
न्यध्यासितानि हिमशैलतटीवनानि ॥

योगविद्या सतीर्थस्य विद्याधरामात्यचक्रवर्त्तिनः विश्वा-वसोरपि विरहाधिः अनेनैव तिरोधीयते ।

सार । कहं ण जाणामि भअवदी ए अं तरंगभिं-गो मल्लियायं एव्व अहिरमइ त्ति ।

मन्दा । (२२)इदञ्च सुप्रसिद्धम । यत् पुनः कुन्तलेश्वरा-

---

(२१)गौरीति । अभिगीतानि हरस्य अवदानानि पूर्वानुष्ठितकर्माणि चरितानीति यावत् । येषु तानि इति हिमशैलतटीवनविशेषणं अव-दानन्तु वृत्तकर्माणि खण्डने इति नानार्थरत्नमाला ।

(२२)इदञ्च सुप्रसिद्धमिति । ब्रह्मदत्तस्य मारुतो नाम मारुतत्वेन

मात्यस्य ब्रह्मदत्तस्य कुमारो मारुतो नाम चतुर्दशविद्या-पारदृश्वा शिक्षितशस्त्रः प्रेषितः पित्रा महान्तं स्कन्धावारं उपहृत्य परमाप्तबन्धोः मङ्गलेश्वरस्य चन्द्रवर्म्मणः सन्दर्शनाय। स मया कुसुमपुरोद्याने दृष्टः।

सार। (२२)अत्थि। जेण रायरच्छागएण तणुलच्छोख-ण्डिअ कुसुम कोअंडसोहग्गविब्भमेण दंशण पधाविअ विलासिणी विह्मय विअसिआ विह्मल सिणिड्डविसाललो-अण कुवलयप्पासादवादायणं सअलं विरइ अदि कुसुम उरं।

मन्दा। तस्मिन्नपि मल्लिकानिर्विशेष पक्षपातं विद्धि मे हृदयम्।

सार। णं णंदीयदि देसु देसु समएसु मारुदो मारुदो त्ति भयवदीए।

मन्दा। तदनयोः परस्पर सदृश गुणशीलरूपाभि-जात्योः चिरकाङ्क्षित पाणिग्रहणयोरद्य दैवादत्रैवा श्मि इतरेतर दर्शनमघटोति बहुला ममानन्दकाष्ठा।

सार। किं दं सणमेत्तेण।

मन्दा। न केवलं दर्शनमात्रं लक्षोकृतौ च तत्क्षण

---

प्रसिद्धः कुमारः महान्तं स्कन्धावारं सेनां स्कन्धावारः स्यात् कटकः इति अमरकोषः। उपहृत्य उपायनीकृत्य चन्द्रवर्म्मणः सन्दर्शनाय पित्रा प्रेषित इति। पुनः इदञ्च सुप्रसिद्धं इति योजना।

(२२) अस्ति येन राजरथ्यागतेन तनुलक्ष्मीखण्डितकुसुमको-दण्डसौभाग्यविभ्रमेण दर्शनप्रधावितविलासिनीविस्मयविकसिता विह्वल-स्निग्धविशाललोचनकुवलयप्रासादवातायनं सकलं विरच्यते कुसुमपुरम्।

लब्धावकाशेन मकरध्वजेन (२४)निज कलम्बानाम्। मल्लि-
कायान्तु व्रीड़ाविस्मय मन्थरैर्विदग्धजनग्राह्यैराकारैः कथित
एव गाढ़कठोरस्मरविकारः। तथाहि।

(२५)स्निग्धस्मेर विलोलमुग्ध मधुरा यन्नेत्रयोर्विभ्रमा
यद्व्यामृष्ट विलासपत्र लतिका घर्म्मोद्गमाद्गण्डयोः।
यच्च प्रौढ़कदम्बकुड्मल सखी कापयङ्गके विक्रिया
तत्तस्यां किमपि स्फुटं रतिपतेर्दोर्दण्ड विस्फूर्जितम्॥

---

(२४) निजकलम्बानां स्वकीयशराणां इत्यर्थः। कलम्बी शाकभेदे स्यात् कदम्बशरयोः पुमान् इति मेदिनी।

(२५)स्निग्धस्मेरविलोलमुग्धमधुरा इत्यत्र। यत् यस्मात् कारणात् नेत्रयोः स्निग्धस्मेरविलोलमुग्धमधुराः स्निग्धाः स्नेहपर्यायरतिभावानु-विद्धाः। स्नेहो यथा। विस्रम्भे परमां काष्ठां आरूढे दर्शनादिभिः। येना-न्तरङ्गं द्रवति स स्नेह इति कथ्यते। स्मेराः स्फुरत् पक्ष्म पङ्क्तुरत्-फल्लताराः। स्मेरो यथा। प्रस्फुरत् पक्ष्मतारं यत् तत् स्मेरमिति कथ्यते इति। विलोलाः धारा वाहनन्यायेन सञ्चारशीलाः लोलं यथा। धारावाहिकसञ्चारो यस्य तल्लोलमुच्यते इति। मुग्धाः अव्याजभावगर्भस्वभावाः यथा। स्वभावालोकितं मुग्धं भावगर्भमपि छलात् इति। मधुराः सन्तापहराः यथा। कटाक्षैर्हासगर्भैस्तु सम्भोगैवत्सुकाभावनात्। शीतलीक्रियते तापो येन तन्मधुरं स्मृतमिति। इह सर्व्वत्र भवन्तीत्यध्याहारेणान्वयः। यत् यस्मात् गण्डयोः व्यामृ-ष्टविलासपत्रलतिकाः घर्म्मोद्गमाः स्वेदजलप्रादुर्भावाः धर्म्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्बुनोरपि इति मेदिनी। यत् यस्मात् अङ्गके शरीरे प्रौढ़ानां कदम्बकुट्मलानां सखी तत्सदृशीति भावः। कापि विक्रिया च रोमाञ्च इति भावः। तत्तस्मात्कारणात् तस्यां मल्लिकायां किमपि अनिर्व्वचनीयं रतिपतेः दोर्दण्डविस्फूर्जितं स्फुटं व्यक्तमित्यर्थः। अथवा

सार। कीरिसी उण मारुदस्स अवत्था।

मन्दा। (२६)आमोद मन्थरदरस्मित लोभनीयां

तां मल्लिकां तरलयंश्च मारुतोऽपि।

प्राभूत् प्रभूत सुषमामकरन्द मग्ना

नाक्रष्टु मन्य विमुखान्न कटाक्ष भृङ्गान्।

सार। तारमणिज्जं क्खु आरड्ढं उहूयसंजोयण विणि-
विसिय सुहेण विहिणा।

---

विभ्रमा इति यत् घर्मोद्गमा इति यत् विक्रिया इति यत् तत्सर्व्वमिति शेषः। तदखिलं इत्यर्थः। तस्यां किमपि स्फुटं स्पष्टतयोपलभ्यमानं रतिपतेः दोर्दण्डविस्फूर्जितं इति निदर्शना। शृङ्गारानुभावानां रोमाञ्चादिसात्विकानां दर्शनात् तस्यां मदनबाधाप्राबल्यं स्पष्टमिति भावः। (२६)आमोदमन्थरदरस्मिते इति। आमोदमन्थरेण हर्षस्तब्धेन दरस्मितेन मन्दहसितेन लोभनीयां स्पृहणीयां अन्यत्र आमोदमन्थरेण परिमलपृथुलेन दरस्मितेन तदुपमेयभूतेन कुसुमेनेत्यर्थः। इह निगीर्य्याध्यवसानाद्रूपकातिशयोक्तिः। लोभनीयां स्पृहणीयां मन्थरःकोशफलयोरित्यादिना पृथौ वक्रेऽभिधेयवत् इति मेदिनी। तां मल्लिकां विश्वावसुनन्दिनीं अन्यत्र तदाह्वयां लतां तरलयन् चञ्चलयन् कम्पयंश्च मारुतोऽपि प्रकृतः कुमारोऽपीत्यर्थः। वायुश्च ध्वन्यते अथ कात्स्न्र्येनेत्यर्थः। अथाथो संशये स्यातां मित्यादिना कात्स्न्र्यारम्भ समुच्चये इति मेदिनी। प्रभूतसुषमा प्रचुर परमशोभा मकरन्द इव प्रभूतसुषमा मकरन्दः तत्र मग्नान् अन्यत्र प्रभूतसुषमया सह मकरन्दमग्नान् अन्यस्मिन् प्रभूतसुषमेतरगोचर वस्तुनि मकरन्देतरवस्तुनि च विमुखान् पराङ्मुखान्। कटाक्षाः भृङ्गा इव कटाक्षा इव भृङ्गाश्च तान् आक्रष्टुं वहिष्कर्त्तुं न प्राभूत् न समर्थोऽभूत्। मल्लिकां मोहयन् मारुतः स्वयमपि तस्यां ररञ्जेति भावः। अत्र कुसुममनोहरां मल्लिकालतां कम्पयन्नपि वायुः तत् कुसुम-

मन्दा। किं बहुना।

(२७)वत्सयोः सुचिरवाञ्छितं मया
पाणिपीड़नफलं फलिष्यतः।
वेधमाद्य विविधं प्रयोक्ष्यते
वीजगुप्तमिव राग शाखिनः॥

सार। सानुशयं। भअवदि! णं मल्लिअं राअ सुद्देण पत्थेदि आरट्टेस्सरस्स सिप्पवम्मस्स अमच्चो संवरओ।

मन्दा। सावज्ञं। ईषत्करस्तस्य तिरस्कारः।

सार। किं एदं भअवदीए णअप्पवाहस्स।

मन्दा। वत्से! पश्य।

विश्वोत्तरं मारुतमाश्रयन्ती न मल्लिका शम्वरके प्रदेया
को नाम कल्पद्रुमुपघ्नयन्तीं कारस्करे कर्षति बालवल्लीम्॥

सानन्दं। श्लाघ्यः परस्परमसावनुरागबन्धः।

सनिर्वेदं। वाक्ये स्थिता जनयितुः किल कन्यका सा।

---

रसमम्लान् भ्रमरान् तस्मादुच्चाटितुं असमर्थोऽभूदिति ध्वनिः। समासोक्तिरलङ्कारः। समासोक्तिः परिस्फूर्त्तिः प्रस्तुतेऽप्रस्तुतस्य चेदिति लक्षणात्।

(२७)वत्सयोरिति। मया सुचिरवाञ्छितं वत्सयोः मल्लिकामारुतयोः पाणिपीड़नमेव फलं पाणिपीड़नफलं फलिष्यतः उत्पादयिष्यतः रागशाखिनः रागः अनुरागः स एव शाखी वृक्षः तस्य वीजगुप्तं वीजगोपनं कर्म्म अद्य वेधसा विधिना कर्त्रा विविधं अनेकप्रकारं यथा तथा प्रयोक्ष्यते इवेत्युत्प्रेक्षा। प्रयोक्ष्यता वीजं गुप्तमिव इति पाठे। अद्य विविधं यथा तथा प्रयोक्ष्यता विधिना मया सुचिरवाञ्छितं पाणिपीड़नफलं फलिष्यतो रागशाखिनः वीजगुप्तमिवेति योज्यम्।

सवितर्कम् । स्यात् कीदृगेतत् ? । सोच्छ्रासम् ।
अथवा पुनरीदृशेषु ।

साक्षात् स एव खलु पुष्पशरः प्रमाणम् ।

सार । भअवदि ! वाल त्तण सुलह चावलपेरिज्ज 'त जोहा किं वि विण्णवेमि ।

मन्दा । वत्से ! विस्रब्धं ब्रूहि ।

सार । तह साय' तण विसयभोयतिसम । विस्सावसु मुहेसु दिव्वलोय पुरुसेसु सोलिअ सिणेहं भविअ कहं माणुसेसु पक्खवाद परवस भअवदीए हि अअं ।

मन्दा । पुत्रि । अनावेद्यं रहस्यं पृच्छसि । भवतु कर्णे एवमिव ।

सार । करतलविनिह्नितवदना सविनयमाकर्ण्य । हत्थि मह- प्पहावासिं मलिया । मए उण मणुअसामणं विणादा । अस हा कहं सअल लोअ लोअणासे अणसो भग्गा तारिसी लाअसलेहा । ईरिसं ण तारिसे सा वा कहं भअवदी दीसे सिणेह सारम् ।

मन्दा । पुनः श्रोत्रान्तर माहृतत्र श्रयमुदन्तः ।

सार । अहद्द णक्खु अहं पल्लत्थ जीहा म्हि ।

मन्दा । (२८)तदुपस्थिता स्नानवेला त्वमष्ट पुष्पिकासाध- नानि सज्जी कुरु कालिन्दी पुनरिती गृहान् गच्छन्त्या मल्लिकया सह नीता न पुनः प्रतिनिवृत्ता ।

---

(२८)तदुपस्थिता स्नानवेलेति । अष्टपुष्पिकासाधनानि पुष्पाष्टक- रूपाणि पूजोपकरणानीत्यर्थः । अष्टपुष्पपूजनं तन्त्रं शिवरहस्ये ।

सार । तह । इति निष्क्रान्ते ।

मिश्र विष्कम्भः ।

ततः प्रविशति कामयमानावस्थः पटमण्डपस्थो मारुतः ।

मारुतः ।

(२९)सा विद्याधरकन्यका किमु ? भुवं पुण्यैः प्रपन्ना नृणां
लावण्याऽमृतसागराद्विमथिता लक्ष्मीः किमन्योत्थिता ? ।

---

अर्कपङ्कजपुन्नागनन्द्यावर्त्तञ्च पाटली । धुस्तूरं करवीरञ्च द्रोणपुष्पं समर्चयेत् ॥ इति ।

(२९)सा विद्याधरकन्यकेति । सा पूर्वदृष्टा नायिका नृणां पुण्यैः भुवं प्रपन्ना प्राप्ता विद्याधरकन्यका किमु ? अकारणात् विद्याधरकन्यकाया भूमिप्राप्त्यनौचित्यात् पुण्यैर्विना नृणां तद्दर्शनायोगाच्च । निखिलपुरुषपुण्यैरेतद्भूमिप्राप्तौ हेतुत्वेन भाव्यमिति भावः । विमथितात् लावण्यामृतसागरात् उत्थिता अन्या क्षीरसागरसमुद्भव लक्ष्म्यपेक्षया भिन्ना लक्ष्मीः किं ? इति संशयः । स च प्रकृताया मानुषकन्यकाऽसामान्यसौन्दर्य्यशालित्वेनेति बोध्यम् । लावण्यं नाम शोभाविशेषः । तदुक्तम् । मुक्ताफलेषु छायायास्तरलत्वमिवान्तरे । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते । इति । विमथित लावण्यामृतसागरोत्थितत्वेन विशेषणन्तु लक्ष्म्याः क्षीरसागरसम्भवाया लावण्यापूर्णत्वाभिप्रायेण । ननु लक्ष्म्याः लोलितलावण्यसुधासागरसमुद्भूतत्वस्यैवाऽप्रसिद्ध्या कथं विशेषणविशिष्ट लक्ष्मीत्वेन संशय इत्यतोऽन्येति विशेषणम् । तथा चोक्त दोषाभावः । लक्ष्मीरिति तु ततः सुन्दरायाः अप्रसिद्ध्या । आ इति स्मृतौ । आ प्रगृह्य स्मृतौ वाक्ये इत्यभिधानं ज्ञातं बुद्धमित्यर्थः । इदं मन्ये इत्यादिवत् उत्प्रेक्षाव्यञ्जकं मम हृदयं भ्रमयितुं घनसारचन्दनसुधाज्योत्स्नामृणालादिभिः अत्र घनसारः कर्पूरः । आदिपदेन शीतलत्वमोहकत्वानन्दकत्वादिगुणविशिष्टवस्तूनां संग्रहः । तथा च घनसारादिभिस्तटस्थोद्दीपनैरित्यर्थः । प्रा-

म्रा, ज्ञातं

घनसार चन्दनसुधा ज्योत्स्ना मृणालादिभिः ।

प्रारब्धा हृदयं मम भ्रमयितुं पौष्पेषवी शाम्बरी ।

सरोमाञ्चं

ये भिन्दन्ति जगन्ति शीतमहसः पादाः सुधावर्षिणः

ते सम्भूय मुखेन्दु मायतदृशो लोभात् प्रविष्टा इव ।

नोचेदस्य कटाक्षनालगलितैः सञ्जीवयद्भिस्तनूं

धारालैरमृतैः कथं पुनरहं तस्मिन् क्षणे चालितः ॥

हन्त ! सर्व्वानवद्यमङ्गमम्बुजाक्ष्याः ।

---

रब्धा प्रयत्नतो निर्मिता पौष्पेषवी मान्मथी शाम्बरी मायेत्यर्थः । अत्र घनसारादिनिर्मिता मायेति विषयिणो वचनात् एतन्निष्ठत्वेन गम्यमानानां शीतलत्वानन्दकत्वमोहकत्वरूप धर्माणां विषय परिनिष्ठितत्वाभावे तद्धर्मयुक्त विषयि वचनासाङ्गत्यात् । उक्त धर्माणां विषयपरिनिष्ठितत्वं सिद्धम् । विषयश्चेह सा इत्युक्ता नायिकैव । तथा च विद्याधर कन्यकायां तत्त्वग्राह्य विषयवृत्ति शीतलत्वानन्दकत्वमोहकत्वगुणानां सद्भावाऽभावरूपायाः संशयच्छेदिकाया विश्व तयुक्तेः प्राप्तिसूचकम् । स्या इति स्मरणं इति सूक्ष्मया दृष्ट्याऽवगन्तव्यम् । इह शीतलत्वादिना धर्मेण गम्यमानेन निमित्तेन प्रकृतायाः मन्मथनिर्मित शाम्बरी तादात्म्य सम्भावनादुक्त विषया स्वरूपोत्प्रेक्षा । तल्लक्षणन्तु सम्भावना स्यादुत्प्रेक्षा वस्तुहेतु फलात्मना उक्तानुक्तास्पदाद्यात्रेति । किं वा ज्ञातं वृद्ध इह उत्प्रेक्षा व्यञ्जकत्वमविशश्चितम् । बोधप्रकारमाह । सा नायिका घनसारचन्दनसुधाज्योत्स्नामृणालादिभिः मम हृदयं भ्रमयितुं प्रारब्धा पौष्पेषवी शाम्बरी इति संयोज्य घनसारादिनिर्मित मन्मथ शाम्बरी प्रकृतनायिकयोः वाक्यार्थयोः शीतलत्वानन्दकत्वादिधर्मेण सदृशयोः ऐक्यारोपात् वाक्यार्थवृत्तिर्निदर्शना । वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना

(४०)स्निग्धेन्द्रोपलसुन्दरः कचभरो वक्त्रं सगोत्रं विधोः
वक्षोजौ मणिकुम्भडम्बरमुषौ मध्योऽस्ति वा नास्ति वा ।
श्रोणीमण्डलमूरु दुर्वहमहो श्रोणाब्ज तुल्ये पदे
मन्ये मञ्जुगिरो मराल महिलाऽध्येयो गतेर्विभ्रमः ॥

विचिन्त्य ।

(४१)यः ससर्ज कमलं रमागृहं विश्वलोचन महोत्सवं विधुः ।
एष तादृगसृजन्म गीदृशो मीनकेतन निकेतनं मुखम् ॥

अथवा (४२)विसदृशदर्शनं मम तादृगिति ।

---

इति लक्षणात् । पूर्वार्द्धे विद्याधर कन्यकात्वलक्ष्मीत्वकोटिकसन्देहनिबन्धनात् सन्देहनामालङ्कारः स्यात् स्रति भ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयमिति लक्षणात् । अनयोश्च परस्परनैरपेक्ष्यात् संसृष्टिः ।

(४०)स्निग्धेन्द्रोपलसुन्दर इति । मध्यः अस्ति वा नास्ति वा इति मध्यस्य सत्त्वाऽसत्त्वाभ्यां सन्देहः मरालमहिलाध्येयः मरालमहिलाभिः हंसीभिः अध्येयः अध्येतुं योग्य इत्यर्थः । प्रकृतनायिकागमनविभ्रमविवक्षया हंसीनां गतिरपि सावद्येति भावः । अत्र प्रसादमाधुर्यादयो गुणाः ।

(४१) य इति विश्वलोचनमहोत्सवं जननयनसन्तोषकरं रमागृहं लक्ष्मीनिवासस्थानं पद्मालयत्वादिति भावः । कमलं सहस्रदलपद्मं यो विधिः ससर्ज सृष्टवान् । एषः कमलस्रष्टा विधिः मीनकेतन निकेतनं मन्मथनिवासस्थानं दर्शनमात्रे कामोद्रेककरत्वादिति भावः । मृगीदृशो मुखं कर्म तादृक् कमलभूतं असृजत् सृष्टवान् इति वितर्कः । अन्यतरस्य न्यूनाधिक्यं विना परस्पराऽभेदेन वस्तुद्वय सर्जने एकेनैव कर्त्रा भाव्यमिति भावः ।

(४२)अथवा विसदृशमिति । युक्त्यन्तरप्राप्त्या स्वज्ञानस्य स्वस्य वा दोषमाह । अथवा यद्वा तादृगिति कमलभूतमिति मम दर्शनं मदीयं ज्ञानमित्यर्थः । विसदृशं अयुक्तं ततोऽप्यौत्कृष्ट्यादिति भावः । तादृ

(४२)जगन्नेत्रानन्दं वदनमतुलं पक्ष्मलदृशः
कथंकारं पङ्केरुह मनुविधातुं प्रभवति ।
अयञ्चेदाकाङ्क्षी स इह मदनकोदण्डलतया
वराको राकेन्दुः कुवलययुगं किन्न वहति ॥

तस्याः खलु विविधविलास तरलीकृतां न पारयामि धृतिं स्थापयितुम् ।

---

गिति दर्शनं मम विसदृशं इति वान्वयः । तन्मुखस्य कमलभूतत्वेन स्नानं जलकस्य ममापि जड़स्येव युक्तं न स्यादिति भावः ।

(४२)युक्त्यन्तरमुपपादयन्नाह । जगन्नेत्रानन्दमिति । जगन्नेत्रानन्दं जननयनसन्तोषकरं अतुलं असदृशं इदं साभिप्रायविशेषणं पक्ष्मलदृशः वदनं कर्म पङ्केरुहं अनुविधातुं कमलभूतं स्रष्टुमित्यर्थः । कमलप्रायं स्रष्टुं इति यावत् । अत्र अनोः लक्षणेत्थं भूताख्यानेत्यादिना कर्मप्रवचनीयसंज्ञया एतद्योगे पङ्केरुहपदस्य कर्मप्रवचनीययुक्ते द्वितीयेत्यनेन द्वितीया । ननु अनो रित्थं भूतार्थकत्वेन सादृश्यपर्य्यवसायित्वात् एतद्योगे तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्यामिति पङ्केरुहपदस्य न पाक्षिके तृतीया षष्ठ्यौ तुल्यार्थैरित्यनेन सादृश्यबोधकस्य अनव्ययस्यैव ग्राह्यत्वात् प्रकृते सादृश्यार्थबोधकस्य अनोरव्ययत्वाच्च कथङ्कारं प्रभवति केन हेतुना समर्थोभवतीत्यर्थः अतुलत्वान्मुखस्य पङ्कजसाम्येन सर्जने न प्रवर्त्तेत इति भावः । अथवा अनुपङ्केरुहं विधातुं कमलात् हीनत्वेन स्रष्टुमित्यर्थः । हीने इति सूत्रेण अनोः कर्मप्रवचनीय संज्ञया कर्मप्रवचनीययुक्ते इति द्वितीया । कमलसदृशत्यार्थबोधकेन तादृगिति पदेन उपमेयत्वविधया वदनस्य उपमानत्वप्रयुक्ताधिकगुणशालिनः कमलात् हीनत्वसिद्धिमभिप्रेत्य असदृशस्य नायिका वदनस्य पङ्केरुहात् हीनत्वेन सर्जने यन्मूलका विधेः प्रवृत्तिरित्याशयः । अथ हेत्वभावेऽपि एतस्य तादृशदुरिच्छा सम्भवे किं न स्यादित्याशङ्क्य परिहरति । अयमिति । अयं विधिः आकाङ्क्षी चेत् कमलप्रायं कमलात् हीनं वा स्रष्टुमभिलाषी यदी-

(४४)तत् सुभ्रु वस्तरलमन्थर मुग्धमन्द
तिस्र त्रिभङ्गि मधुरालस दृष्टिपातम् ।
वक्त्रं मनोहर मनुस्मरतः प्रयान्ति
चित्तस्य कान्यपि मनोरथचेष्टितानि ॥

---

त्यर्थः । विधेस्तादृशदुरभिलषित्वपक्षे इति भावः । ह इति कुत्सायां व्यस्तनया अप्रयोजिकया दुराकाङ्क्षया न हानिरिति भावः । ह स्यात् सम्बोधने पादपूरणे च विनिग्रहे । नियोगे च क्षिपायां च कुत्सायामपि दृश्यते इति मेदिनी । तत्र युक्तिमाह । वराकः ईदृक् विधिवैषम्ये न शोचनीय इत्यर्थः । वराकः सङ्गरे शोच्ये इति विश्वः । सः राकेन्दुः पर्वोक्तो वदनपूर्णेन्दुः । इह तच्छब्दस्य वदनपरामर्शत्वेऽपि विधेयाभिप्रायकं पुंस्त्वम् । मदनकोदण्डलतया मन्मथचापेन साकं कुवलययुगं मदनबाणद्वयमित्यर्थः । तदुक्तं नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायका इति । न वहति किं ? न धत्ते किं ? वहत्येव किलेत्यर्थः । मुखस्य कमलोत्कर्षप्रतिपादकगुणविशेषशालित्वाभावे खलु हानिरिह पुनरतथात्वान्नेति भावः । तथा च मुखस्य कमलोत्कृष्टगुणविशेषरूप साहश्य प्रतिबन्धकशालित्वात् तादृक् इति निजं ज्ञानं असाम्प्रतमेवेति भावः । अत्र कोदण्डलता कुवलयशब्दाभ्यां भ्रूविलोचनयोरपि हृद्यं व्यतुलमिति विशेषणस्य साभिप्रायत्वात् परिकरः । मुखविषयक कमलसाहश्यज्ञानस्य अयुक्तत्वसिद्धये व्याकाङ्क्षो चेत्त वहति किमित्यूहोक्त्या सम्भावनमलङ्कारः । कोदण्डलतया कुवलययुगमित्यत्र विषयं निगीर्य विषयिणो रूपेण विषयस्य अध्यवसानात् शुद्धा रूपकातिशयोक्तिः । एषामलङ्काराणां क्रमेण लक्षणानि । अलङ्कारः परिकरः साभिप्राये विशेषणे । सम्भावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये । रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः । इति सम्भावनरूपकातिशयोक्त्योः सङ्करः अनयोः परिकरस्य च संसृष्टिः । इत्यलं विस्तरेण ।

(४४)तत् सुभ्रु वस्तरलमन्थरमुग्धमन्द इति । तदिति तरलमन्थ-

सर्व्वथा दुर्लभावयव वस्तुनि स्पृहयालु मनुशोचामि तपस्विनमात्मानम्।

तां दुर्लभामपि तपोभि रनल्पतप्त-
र्जनि तथाप्यभिलषामि कुरङ्गनेत्राम।
नीहार भूधर किरीट विलासमालां
भागीरथीमिव जनो मलयाचलस्थः॥

हसेयुश्च मां अनुत्कण्ठ मानि जनि निबद्धाभिलाषं विदग्धा गोष्ठीमध्ये षु।

---

रसमुग्धमन्दतिस्त्र त्रिभङ्गि मधुराऽलसदृष्टिपातं तरलानि लोलानि धारावाहनन्यायेन सञ्चारशीलानि इत्यर्थः। मन्थराणि मन्दसञ्चाराणि। उक्तञ्च मन्थरा मन्दसञ्चारा इति। मुग्धानि सव्याजभावगर्भस्वभावानि। मन्दानि जडानि व्रीडयेति भावः। अतएव स्वानुकूल्यप्रकाशकानि। उक्तञ्च। स व्याजालोकनेनैव स्वानुकूल्यप्रकाशनमिति। तिस्राणि तिर्य्यगुदञ्चितानि यथा। तिस्रन्तिर्य्यगुदञ्चितमिति। त्रिभङ्गीनि प्रतिदृष्टि प्रतिघातेन औत्सुक्यभरेण च यथा क्रमसासार प्रसाराभ्यां तरङ्गत्रयरीतिभाञ्जि। अतएवैतानि सोत्सुकानि तरङ्गितानि (तदुक्तं) सोत्सुकं तत् यदालोक्य भूयो भूयोऽवलोकनं कल्लोल इव यः कान्तिविच्छेदस्तत् तरङ्गित इति। (त्रिभङ्गीत्यत्र प्रसङ्गि इति पाठे) प्रसङ्गीनि सभ्रूविलासस्मितवन्ति प्रसङ्ग इङ्गिकारो यथा। प्रसङ्गं तद्भवेत् सभ्रूविलासं सस्मितञ्च यदिति। सभ्रूविलासमित्युक्त्या चतुरं नाम भ्रूकर्म सूच्यते चतुरं यथा। चतुरं किञ्चिदुच्छ्रासा मधुरा रचना भ्रुवोः इति। मधुराणि सन्तापहारीणि अलसानि प्रेम्णा पुरः प्रसृतानि पश्चात् विभाव्य व्रीडयेव प्रतिनिवृत्तानि। यथा अलमत्तदभीष्टार्थात् व्रीडादेर्य्यन्निवर्त्तेत इति दृष्टिपातानि यस्य इति वक्त्रविशेषणम्।

(४५)हास्यः स एव मदनस्य मुधा शरव्यं
आत्मन्यरक्तहृदयामभिकाङ्क्षते यः।
धन्यस्त्वसौ दधति यस्य कृते मृगाक्ष्यो
गण्डस्थलानि शरकाण्ड विपाण्डराणि॥

साग्रहम्।

(४६)यत्तिर्य्यग् वलितं यदश्रु ललितं यच्चाञ्चले कूणितं
तत् सर्वं किम् दीर्घयोर्नयनयोर्नैसर्गिको विभ्रमः।
आहोस्विन्मदनुग्रह व्यसनिनो मारस्य लीलायितं
धिङ् मां येन गतत्रपेण किमपि प्रत्याशया कल्प्यते॥

---

(४५)हास्यः स एव इति। हास्यः इति स एषः हास्य यः मदनस्य मुधा निष्प्रयोजनतया शरव्यं लक्ष्यभूतः सन् आत्मनि स्वस्मिन् अरक्तहृदयां अनुरागशून्यमनस्कां अभिकाङ्क्षते इच्छतीत्यर्थः। धन्यः कृतार्थस्तु असौ यस्य पुरुषस्य कृते मृगाक्ष्यः शरकाण्डवत् विपाण्डराणि धवलानि गण्डस्थलानि दधति वहन्ति इत्यर्थः। अत्र पूर्वार्द्धे अनुरागिभिः पुरुषैः अननुरक्तः सुभ्रू संगमो न लभ्यते इत्याशयेन मुधा कामिनः पुरुषस्य निष्फलप्रयत्नतया परिहास्यत्वोक्तिः। यथोक्तं केचन स्युः परिभवपदं निष्फलारम्भयत्ना इति। उत्तरार्द्धे तु श्रिया दुरापः कथमीप्सितो जन इति न्यायेन सुदृशा सुलभत्वे अरक्तस्यापि पुंसस्तत् सुलभत्वात् अतिदुर्घटायुवति जनस्य गाढोत्कण्ठा यदर्थमङ्कुरति स एव पुमान् दुर्घटघटनश्लाघनीयतया कृतार्थ इति भावः।

(४६) यत्तिर्यगवलितमिति। तिर्य्यक् वलितं दर्शनोत्कण्ठया तिर्य्यगुदञ्चितमिति यत्। वलितं यथा। वलितं त्रिकयुक्तस्य भूयश्चिन्तावलोकनं तिरश्चीनमिति च। ललितं अश्रु इति यत्। अञ्चले अग्रभागे अपाङ्गे इति यावत् कूणितं सङ्कुचितमिति यत् सङ्कुचितदृग्विकारो यथा। अपाङ्गभाग सङ्कोचो यत्र तत्कुञ्चितं भवे-

अथवा

(४७)अविभ्रमदभ्रमुवल्लभगमनाया ऐन्द्रियाणि ।
यान्यपराङ्गिकान्यलोकिषत ते ते विकाराः सात्त्विकाः ॥

तथाहि ।

(४८)पञ्चसायक महेन्द्रजालिना पाणिपद्मसमुदञ्चिता स्वयम् ।
वर्द्धनाय मनसः प्रगल्भते पिञ्छिकेव मम चञ्चलेक्षणा ॥

---

दिति । ततश्च दीर्घयोः नयनयोः नैसर्गिकः स्वाभाविकः विभ्रमो विलासः किम् सुगममन्यत् ।

(४७)अथवा अविभ्रमदिति । अविभ्रमदभ्रमुवल्लभस्य ऐरावतस्य गमनमिव गमनं यस्या इति विग्रहः । ऐन्द्रियाणि मनोनेत्रादिजन्यानि आङ्गिकानि अधर भ्रू स्तनादि जन्यान्यपि यानि इति सामान्ये नपुंसकं कर्म अलोकिषतः दृष्टानि मयेति शेषः । तेन इति विधेयाभिप्रायकं पुंस्त्वम् । सात्त्विकाः परागत सुखदुःखादिभावनात्यन्तानुकूलान्तःकरणत्वं सत्त्वं तेन निर्वृत्ता विकाराः सात्त्विकाः । यथोक्तं दशरूपे । पृथग्भावा भवन्त्यन्ये ऽनुभावत्वेऽपि सात्त्विकाः । सत्त्वादेव समुत्पत्तेस्तच्च तद्भावभावनम् । स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यं वेपथू । अश्रुवैस्वर्य्यमित्यष्टाविति । ननु । सत्त्वादेव समुत्पत्तेरित्युक्तया ऐन्द्रियाणां विकाराणां आङ्गिकत्वं कथमिति न शङ्क्यम् । स्वेद वैवर्ण्य वेपथ्वादीनां ऐन्द्रियत्वेऽप्याङ्गिकत्वात् यद्वा जीववत् शरीरं सत्त्वं तस्य धर्माः सात्त्विका इति ।

(४८)पञ्चसायकेति । चञ्चलेक्षणा पञ्चसायको मदन एव महेन्द्रजाली इन्द्रजालप्रयोक्ता तेन स्वयं पाणि पद्मसमुदञ्चिता करकरसिजोत्क्षिप्ता पिञ्छिकेव मयूरवर्ह इव मम मनसः वर्द्धनाय चेतसः प्रलोभनायेत्यर्थः । प्रगल्भते । प्रभवतीत्यर्थः । इह पिञ्छिकेवेत्युपमा । अस्याश्चैन्द्रजालिककरौ क्षिप्यमाणायाः प्रेक्षकजनमनः प्रलोभकत्वं मन्त्रशास्त्रे प्रसिद्धम् । यथोक्तं मन्त्रखण्डे इन्द्रजालेषु श्रीनित्यनाथ पादैः

तस्मिन् समये (४९)

स्विन्नौ गण्डौ स्फुरितमधरं स्पन्दितं चूचुकाग्रं

सन्नौ बाहू मसृण मुकुले लोचने भ्रूर्श्लेव ।

अङ्गादङ्गादजनि पुलकश्रेणि रूरू सकम्पौ

किञ्च श्वासास्तरलित दुकूलाञ्चलाश्चञ्चलाच्याः ॥

हन्त तामेव तरलेचणा मनुधावतो हृदयस्यान्य निचेपता

उपालभे तावत् ।

कन्यानो विनयो गुरुर्न गणितो धूताकरं गृह्णतो

व्रीड़ा केलि सखो कथञ्च नमतो नेच्छन् विवेकः सुहृत् ।

बाल्यादेव निरन्तरं परिचितो नाहं प्रमाणोकृतः

सा कानेव परीचिता अग्रिमुखो हा चित्तकस्ते भ्रमः ॥

आश्चर्य्य मपरवस्था मन्मथस्य प्रसादकोपयोः ।

---

सामुद्र तोयमादाय महाभाण्डे विनिक्षिपेत् । खनेत् तद्भूमिमध्ये तु मासमेकं सुरक्षितं तदुद्धृत्य विधानेन कज्जलेन तु पेषयेत् । अङ्कोल-श्चेहमिश्रन्तु उच्चूलिक रजोयुतम् । कृत्वा तु गुलिकां दिव्यां निक्षिपेत्तां नवे जले । वर्हि पिच्छेन संस्पृश्योल्लोलयेत्तु महाऽनिले । महाध्वनि समायुक्तो वडवानलसंयुतः । दृश्यते भुवनं व्याप्य महावारि निधिक्षणा दिति ।

(४९) ते ते विकाराः सात्त्विका इत्युक्तं प्राक् अत्र तेषां प्रादुर्भाव प्रकारमाह तस्मिन् इति । तस्मिन् समये मदवलोकनकाले इत्यर्थः ।

स्विन्नौ स्वेदयुक्तौ बाहू सन्नौ स्तब्धौ लोचने मसृणं रागपेशलं यथा तथा मुकुले सुखपारवश्यादुन्मीलिततारके उक्तञ्च मसृणं तत्तु विज्ञे-यमनुराग कषायितमिति । स्फुरित श्लिष्टपक्ष्माग्रा मुकुलोर्द्ध्वपुटोच्छ्रिता सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते इति च । इह मुकुलत्वहर्म्बि-कारस्य स्फुरित श्लिष्टपक्ष्माग्रत्व लक्षणोपलक्षितत्वात् दृष्टप्राप्तिं दृशो-

परागैः कार्पूरैस्तुहिन सलिलैश्चान्दनरसैः
सुधाभिर्ज्योत्स्नाभिः स्नपितमिव यः प्रागकृत माम् ।
स एवासौ मारः शिवशिव वियोगे मृगदृशः
करालं काकोलं किरति मयि कालानलमपि ॥ (५०)

आकाशे लक्ष्यं बद्धा ।

वाणाग्नि मस्तककरुणो विकिरन् ममाङ्गे
प्रायो न वेत्सि विषमास्त्र वरस्व पीड़ाम् ।
सन्ताप एष भवता किमु नान्वभावि
चोण्डपतेरलिकलोचनगोचरेण ॥ (५१)

कस्मै पुनरिदं निवेदयामि । प्रियमित्रं कलकण्ठो नगरदर्शन कुतूहली गतो नाद्यापि निवर्त्तते । इति सन्ताप सङ्कुलित लोचनस्तिष्ठति ।

---

कर्ड्मिति निमित्त निदानोक्त्यनुसारेण इष्टप्राप्तिर्भविष्यतीति सूच्यते । एका भ्रूः चला चञ्चला इत्यर्थः । अनेन शुभं भविष्यतीति सूच्यते । यथोक्तम् । निमित्तनिदाने मूर्ध्नि स्पन्दाच्छत्रलाभं फाले पट्टं शुभं भ्रू इष्टप्राप्तिं दृशोर्द्वं अपाङ्गे हानिमादिशेदिति । अत्र सकस्मौ अनेन द्वितीयाङ्कवर्णित भविष्यदम्बर प्राप्तिः सूच्यते । उक्तञ्च । ऊरोः स्पन्दात् रतिं विन्द्यात् ऊर्वोः स्पन्दात् सुवाससः ।

(५०)परागैः कार्पूरैरिति पद्ये । काकोलं विष विशेषम् ।

(५१)वाणाग्निमस्तककरुणा इति पद्ये । हे विषमास्त्र वर ! इति कामस्य सम्बुद्धिः । ममाङ्गे वाणाग्निं अस्तकरुणः निर्दयः विकिरन् वर्षन् त्वमिति शेषः । स्वपीडां प्रागनुभूतां बाधामित्यर्थः । प्रायः प्रायेण न वेत्सि न स्मरसि इत्यर्थः । मदङ्गे निर्दयतया वाणाग्नि वर्षादेव ज्ञायते स्मृतिमत्वे तु नैतदनुतिष्ठेरिति भावः । लोके हि स्वय मनुभूत बाधाः परान्न बाधन्ते इति मर्यादिः । ननु कथं मम प्रागनुभूत

ततः प्रविशति कलकण्ठः।

कलकण्ठः। सानन्दं परिक्रम्य। अद्य खलु कुसुमपुरं गतेन अमात्य विष्णुरात भवन रथ्यां प्रविष्टेन मया निर्विष्टं चक्षुष्मत्तायाः फलम्। तथाहि

(५२) सौधे कापि महेन्द्रनीलघटिते सौदामिनी वाम्बुदे
क्रीड़न्ती सवयोभि रिन्दुवदना दिष्ट्या मयाध्यच्यत।
सा लीलावलित स्मुसंहितवती ताटङ्क रुद्राञ्चलाम्
कालिन्दी लहरी चलत् कुवलयस्निग्धान् कटाक्षान् मयि॥

परिक्रम्य। इयन्तं समयं प्रति गत एव तेन मया न दृष्टो जगदानन्द माकन्द कन्दल मलय मारुतो प्रियसखो मारुतः। अतश्चिर मुपोषिते इव लोचने तद्दर्शनामृत पारणाय स्पृहयतः कथितञ्च प्रतिहार्य्या चन्दनलतया। अद्य आश्रमात् प्रतिनिवृत्तः कुमारः। निवारित परिजनः किमपि किमपि मन्त्रयमाणः पटमण्डपमेकएवाध्यस्त इति। यावदहं अभ्यनन्तरो भवामि। इदं पटमण्डपद्वारम्। प्रवेशं नाटयित्वा विलोक्य। सविषादं स्वगतम्। कथमसौ चिन्तातिभार निष्कम्पतनुः स्तम्भित इव चित्रित इव द्राघिष्टनिश्वासदण्ड तरलित हार प्रकाण्डकण्टकितकम्र कलेवर विड़-

---

वाधत्वं इत्यतः स निदर्शनमाह। सन्ताप इति मयानुभूयमानः चण्डिज-सन्तापः चण्डोरतेः तत्र्रचत्य अलिकलोचनगोचरेण फालगत नेत्रविषयेण भवता नान्वभावि किमु? अननु भूतं किं अनुभूतमेवद्दोति भावः।

(५२) सौधे कापि इति पद्ये। अध्यच्यत दृष्टा इत्यर्थः। अचूव्याप्तिरिति धातोरात्मनेपदात् कर्मणि लङ्।

म्बित कदम्ब यष्टिः अन्तर्गत गाढ़कार्कश्य सन्ताप विसं-
ष्टु ुलावस्थ इव लक्ष्यते प्रियवयस्यः। निर्वर्ण्य।

आश्चर्य्यमेतदमितं पच देहताप
मूर्च्छाल दृष्टिरति कष्ट दशां गतोऽपि।
सञ्जायते नयनयोरतिलोभनीयः
घर्म्मावलीढ़ इव चन्दनपादपोऽयम्॥

विभाव्य। सत्यमयमिदं प्रथमसम्पात दुःसहां मारूढ़ः
पराक्कोटिं मदनावेशस्य। कथमन्यथाकारः एवम्विध हृदय-
ज्वरेण ग्रथ्यतोऽस्य निदाघ कृशस्येव भागीरथी प्रवाहस्य
अभिमतः शोभातिशयः। दूरन्तु संवदते यदाश्रमगतस्य
स्मरविकार इति। भवतु ज्ञास्यामीति समीपमुपसर्पति।
मारुतः। अनुन्मीलित चक्षुरेव। सखे! कलकण्ठ! इत्य-
र्द्धोक्ते क्वात्र कलकण्ठः।

कलकण्ठः। स्वगतं। अहो स्नेह वैलक्ष्यम्। यदस्यामप्य-
वस्थायां मामेव स्मरति। प्रकाशम्। वयस्य! किमिद-
मकाण्ड एव ते कातर्य्यम्। क्व ते धिकृत धराधर धैर्य्यम्।
किं प्राभातिक चन्द्रकान्ति वदनं हस्तोदरे शायितं
पक्ष्माणि स्थगयन्ति किं नयनयोर्वाष्पाम्भसां शीकराः।
किं माला मतिलङ्घते च भवतः श्वासः प्रतप्ताधरः
सत्यं शंस वयस्य! किम्पुनरिदं कान्तं वपुस्ताम्यति॥

मारुतः। कस्य पुनः कथयामि। श्रूयताम्। (५३) अद्य
खलु अगलित कौसुम्भ राग एव गगनाशोक स्तवके

(५३)अद्य खल्विति। गगनाशोकस्तवके दिवस लक्ष्मीचरणयावक

देवस्य लक्ष्मीचरस्य यावकपिण्डे मार्त्तण्डे निर्गच्छति अपरिमित परिजन श्रुतचरयोग प्रभावां नाति दुरवर्त्तिनीं मन्दाकिनीं दिदृक्षुः अचकित चमूरु चरित्रोपकण्ठं तदाश्रम मविशच्चम् ।

तत्र पावन गम्भीर प्रसन्न मधुराकृतिम् ।
तामद्राक्षं हिमगिरेः प्राप्तां मन्दाकिनीमिव ॥ *

कल । ततस्ततः ।

मारुतः । (५४) ततश्च, कृतप्रणामं मां मत्कृतिमा-माधारण वात्सल्य पिशुनैः अविरलोत्पतदानन्द वाष्पनि ष्पीड़ित पक्ष्म पुटैरालोकैरनुगृह्णतो स्वागतार्घ्यादिभिः सम-मवीभवत् ।

कल । ततस्ततः ।

---

पिण्डे मार्त्तण्डे आदित्ये अगलितः कौसुम्भरागो यस्मात् तथा भूते निर्गच्छत्येव सति । इत्यादिना योज्यं अचकित चमूरूणां चरित्रं उप-कण्ठे समीपे यस्य इत्याश्रम विशेषणं अथवा अचकितं चमूरुचरित्रं यस्मिन् तथाभूतः उपकण्ठः यस्य इति वा विग्रहः ।

* तत्र आश्रमे पावना दर्शनमात्रेण पुनाना गम्भीरा महत्त्वविशिष्टा प्रसन्ना कामक्रोधादिकालुष्यरहिता । पक्षे प्रसन्ना शुभ्रा अकलुषेति यावत् । मधुरा पुनःपुनर्दर्शनेच्छाजनका पक्षे जलरूपत्वात् रुच्या पुनः पुनः दर्शनेच्छाजनका इति वा आकृतिः यस्यास्तां तथोक्तां हिमगिरेः प्राप्तां तां मन्दाकिनीं इत्याख्यां ऋषिनीं कमं मन्दाकिनीं गङ्गामिव इत्युपमा अद्राक्षं अपश्यम् इत्यर्थः ।

(५४)ततश्च कृतप्रणाममिति आलोकैः विलोकितैः कृतप्रणामं मां अनु-गृह्णती सती स्वागतार्घ्यादिभिः समं अवीभवत् स्वागतार्घ्यादियुक्ता भव-तिस्म । भूधातोः लुङि अट् णिच् चङ् णिलोपः द्वित्वं सन्वद्भावः ।

मारुत: । ततश्च ।

तस्मिन् क्षणे कमपि मान्मथ कार्मुकज्या
क्रेङ्कारतारमभिनन्दनमिन्द्रियाणाम् ।
काञ्चीकलाप कुलभं करणानुकीर्णं
माकर्णय झणझणं मणिनूपुराणाम् ॥

(५५) ततश्च कात्यायनी परिवसरवर्त्ति भवनाराम वीथ्यां जङ्गममिव लता द्वन्द्वं अग्रत: सरसीविदलकरतलोल्लसितकाञ्चनविनकाण्ड दर्शिता काण्ड तड़िल्लता ताण्डवितास्रमशिखण्डिमण्डलं उद्दण्ड मणिदण्ड चामरान्दोलन चतुरवारसुन्दरी करतल चलित मणिवलयझणझणिताकृष्ट परिसर सर: सारसम् । उत्तम्भित विद्रुमदण्डमण्डित धवलात पत्रविमलविधु मण्डलतरलित जीवजीवकं आभरणप्रभाघटित शतमखशरासन शतदन्तुरितान्तरिक्षं अत्युदारवेष मण्डलं अवला कदम्बकमालोकयम् ।

कल । ततस्तत: ।

मारुत: । ततश्च ।

(५६) अर्कच्छायन्तिरयति सुधालिप्त विद्युन् मतल्ली
चक्रप्रख्यं महति सुषुमामण्डले दूरमरनम् ।

---

अभ्यासोऽकारस्तेत्वं तस्य दीर्घः। आम्रेडितो कारस्य गुणावादेशौ तिङिल्लोपश्च स्वागतसुदीर्य्य अर्घ्य पाद्याचमनीयानि प्रायच्छदिति भाव: ।

(५५)कात्यायनीति । उत्तम्भित विद्रुमदण्डमण्डित धवलातपत्रमेव विमल विधुमण्डलं तेन तरलिताः जीव जीवकाः चकोराः येन इति अवला कदम्बकविशेषणम् ।

(५६)अर्कच्छायमिति अर्कस्य रवेः छाया कान्तिः अर्कच्छायं विभाषा

रत्नादर्शे प्रतिफलमिव श्रीमदङ्गं वहन्ती
दृष्टा काचित् तरलनयना देवतेव स्मरस्य ॥

अथ सा चतुरमुखी दत्तकरावलम्बं नितम्बभर मन्थ-चंक्रमभ्रम वलितचरणारविन्द कान्ति किसलयित मही-तलं उद्गुञ्जित मणि मञ्जीर मञ्जु पठित पञ्चशरचाटु-प्रपञ्चं वेपमानावलग्न भङ्ग भय क्रन्दित काञ्ची विलुण्ठनत-रङ्गितदुकूलं ईषत् उत्कम्पितस्तनकुम्भस्खलदुत्तरीयं उदार-

---

नासुराच्छायेति नपुंसकम्। छायात्वनातपे कान्तावित्यभिधानम्। तत्कर्म तिरयति प्रच्छादयति। खद्योतकान्तेश्चन्द्रातप इव निष्प्रकाश-प्रदायिनि इति भावः। सुवर्णत्वादर्कच्छायमित्युक्तिः। महति सुषमा मण्डले परमशोभा चक्रवाले दूरे मग्नं अवगाढं महत्त्वात् परम-शोभा चक्रवालस्य तदन्तरालैकदेशविवक्षया दूरपदप्रयोगः। सुधाभिः प्रस्तैः लिप्ताः याः विद्युन्मतल्लयः प्रशस्ततडिल्लताः मतल्लिकाः मच-र्चिका प्रकाण्डमुद्गतल्लजौ प्रशस्तवाचकान्यमूनीत्यमरः। तासां चक्रेण समूहेन प्रख्यं सदृशम्। अत्र मतल्ली चक्रशब्दौ कान्त्यतिशय बाहुल्यप्रकाशार्थौ। विद्युद्ग्रहणं परमशोभामण्डलैकदेश मग्नस्य गात्रस्य अनुक्षणस्फुरण द्योतनार्थम्। कान्त्यतिशयशालित्वेन दृष्टिप्र-हार पाटवद्योतनार्थञ्च। विद्युतां दृष्टिप्रहारकत्वेन भयप्रदत्वात् उप-मेयस्यापि तथात्वापत्त्या तद्दोषराहित्येन उपमेये स्वकान्तिवशात् दृष्टि-प्रहारकत्वेऽपि निभृतावलोकनानन्दजनकत्वरूपविशेष सत्ता प्रदर्शनाय उपमेयगत तादृशविशेषराहित्येन अनुपमानभूतानां विद्युतां उपमा-नत्वसिद्धये च सुधालिप्तत्वविशेषणं रत्नादर्शे प्रतिफलमिव अरुणदर्पणे इत्ति प्रतिविम्बमिवेत्युपमा। रत्नादर्शे प्रतिफलमिवेति पाठे कुरुविन्दमणि दर्पणगत प्रतिविम्बमिवेत्यर्थः। श्रीमत् शोभाशालि कुरुविन्दसच्छाय-मिति भावः। अङ्गं शरीरं वहन्ती धारयन्ती स्मरस्य देवतेव उपास्य दैवतमिव स्थिता। स्वदर्शनमात्रेण त्रिभुवनस्यापि कामवशीभावकारि-

वदन सौरभ लुभ्यद्‌लिगण सम्भ्रमचकित लोचन मरीचि वीचि मेचकित गगनाङ्गनं उच्छलित कुन्तलशिखा चुम्बित कुङ्कुमललामलाञ्छित ललाटतटं अव्याज विविधलास भङ्गीतरङ्गित जनविस्मयं अस्मदभिमुख मुदचलत्।

कल। ततस्ततः।

मारुत। ततश्च। तदुपगमदर्शनकुतूहलात् ससम्भ्रम मुत्थाय मन्दाकिनी प्रथम प्रधावित मानसेन सह मया कियन्त्यपि पदानि गत्वा उटजाङ्गन भाजो लवली लतालिङ्गि तस्य बालतमालतरोस्तलमध्यतिष्ठत्। ततश्च। (५७)

दूरादेव करावलम्बित सखी भ्रू संज्ञया दर्शिते।
मय्युद्दामविलास विस्मयवतीं व्यापरयन्ती दृशम्।
सा मध्ये स्तिमिताप्यसेव किमपि प्राप्ता कुरङ्गेक्षणा।
मन्दं मन्द ममन्द विभ्रमवती मन्दाकिनी सन्निधिम्॥

---

त्वेनेति भावः। काचित् तरलनयना दृष्टा अवलोकिता। तया चास्या उपासना बलादेव कामः त्रिभुवनविजयीति भावः। अत्र त्रिभुवनविजयित्वरूप कामितार्थप्रदत्वेन गम्यमानेन धर्मेण निमित्तेन विषयस्य तरलनयनायाः आरोपास्य देवतातादात्म्यसम्भावनाद्रूपविषया स्वरूपोत्प्रेक्षा। लक्षणमुक्तं प्राक्।

(५७)दूरादेवेति। दुरादेव असमीप एव करावलम्बित सख्या भ्रू संज्ञया दर्शिते सूचिते मयि उद्दामविलासः विस्मयः अद्भुतरसस्थायी च अस्यामिति मतुप्। तां दृशं व्यापारयन्ती प्रेरयन्ती सा कुरङ्गेक्षणा पूर्वोक्तनायिका मध्ये मध्यप्रदेशे स्तिमिता आश्चर्य पारवश्येन स्तम्भापि स्तम्भाख्यसात्विक शालिन्यपीति भावः। किमप्यनि मयासेन असेव अस्तिमितेव इत्युत्प्रेक्षा। अमन्दविभ्रमवती सती मन्दं मन्दं अतिमन्दमित्यर्थः। वीप्सायां द्विरुक्तिः। मन्दाकिनी सन्निधिं प्राप्ता इति योजना।

कल । स्वगतम् । शङ्के तस्या अपि चुम्बितमिव हृदय मनङ्ग विकारेण ।

मारुतः । यथायथा सविधमगान् मृगीक्षणा
तथातथा निविड़तमै स्तदंशुभिः ।
सुधारसैरिव परि पूरितेक्षणः
क्षणं ततः प्रभुरभव न वीक्षितुम् ।

कल । अहो मनुजाङ्गनादुर्लभोऽयमहः सञ्चारः ।

मारुतः । ततश्च

प्रत्यङ्गमक्षिनिपुणं विनिवेश्य यत्नात्
पश्यन् विलासतरु नूतनमञ्जरीन्ताम् ।
सन्धाय मोहनशरं धनुषीषयेव
सन्ताड़ितोऽस्मि हृदये शफरध्वजेन ॥

कलः । सखे । किमत्राश्चर्य्यम् ।

(५८) वक्षस्थली वदनवामशरीरभोगैः
पुष्यन्ति यस्य विभुतां पुरुषास्त्रयोऽपि ।
सोऽयं जगत् वितयजित्वरचापधारी
मारः परान् प्रहरतीति न विस्मयाय ॥

मारुतः । ततश्च ।

---

सृष्टिस्थिति संहारकर्त्तॄणां ब्रह्मविष्णुमहेश्वराणामपि आज्ञानुवर्त्तितां प्रापितवतः श्रीमदनस्य पामराणां इतरेषां वाधनं अद्भुतं नेत्याह ।

(५८)वक्षस्थलीति । वक्षस्थली वदनवाम शरीरभागैः त्रयोऽपि पुरुषाः यस्य विभुतां पुष्णन्ति वक्षसि विष्णुर्वाचि ब्रह्मा नाम शरीरे महेश्वरश्च स्वस्त्रियं वहन्ती प्रसिद्धेऽति भावः । शेषं स्पष्टम् ।

(५९) सूनैर्नन्दन देवतास्मित सखे रुद्गुम्फिता मालिका
काप्यस्याः स्तनमण्डलप्रणयिनी भाग्योत्तरा लक्षिता ।
रिक्तीकृत्य तदाश्रमद्रुमलतापुष्पाणि पुष्पन्धयाः
वक्त्राम्भोरुहि यत्र च भ्रमभृतो दोलायितं नात्यजन् ॥

कल । (६०) इदमपि तस्याः स्फारयति अनितरसाधारणं साभिजात्यम् । ततस्ततः ।

मारुतः । ततश्च सा

(६१) तत्र क्षणे स्तनतटच्युतमुत्तरीयं
मुग्धेन पाणिकमलेन निवारयन्ती
आमुञ्चति स्म मयि मन्दसमीर धूत
नीलारविन्द तुलितान् तरलानपाङ्गान् ॥

---

(५९)सूनैरिति । नन्दनदेवतास्मित सखैः सूनैः उद्गुम्फिता अस्याः प्रकृतनायिकायाः स्तनमण्डलप्रणयिनी अतएव भाग्योत्तरा कापि मल्लिका लक्षिता दृष्टा पुष्पन्धयाः मधुलिहः तदाश्रम द्रुमलता पुष्पाणि तस्याः मन्दाकिन्याः आश्रमे वर्त्तमानानि यानि द्रुमलता पुष्पाणि तानि रिक्तीकृत्य स्वेषामभावतः शून्यतया विधायेत्यर्थः । वक्त्राम्भो रुहि प्रकृतनायिकायाः मुखाम्बुजे यत्र मालिकायां च भ्रमभृतः औभयत्रिकसौगन्ध्यातिशयेन उभयत्र मोहयन्तः सन्तः दोलायितं पुनःपुनरन्यतरस्मादन्यतरगमनं यातायातमिति यावत् । नात्यजन् न त्यक्तवन्तः । सा मल्लिका लक्षितेति पूर्वेण सम्बन्धः ।

(६०)इदमपीति । साभिजात्यं कुलीनताम् ।

(६१)अथ तात्कालिकीं अनुरक्त युवतिजनसाधारणेन्द्रन प्रत्ययार्हां सालम्बनां अनुरागपूरितान्तरतया पार्वणपीयूषकिरणच्छटा पातोत्पूरवारिधि तरङ्ग सङ्क्षोच्चलनन्यायेन बहिःस्फुरितां शृङ्गारचेष्टामाह । सा तत्र क्षणे इति । अपाङ्गान् कटाक्षान् इत्यर्थः । कटाक्षलक्ष-

ततश्च तस्याः

(६२)वेलालङ्घि विलासयो विकसतो र्व्याजिह्मयो र्मन्दयोः
स्मेराकेकरतारयोस्तरलयोः साकूतयोः साश्रुणोः ।

---

वान्तु सङ्गीतरत्नाकरे यङ्गतागत विश्रान्ति वैचित्र्येण विवर्त्तनं तारकायाः
कलाभिज्ञाः कटाक्षं तं प्रचक्षते इति । शेषं स्पष्टम् । इह स्तनतटच्युत
मुत्तरीयमित्यादिना तान्त्रिकात् भविकाङ्गव्यक्तीभावादि चेष्टा प्रादुर्भावो-
क्त्या नायिकाया आनुरक्त्यं संसूच्यते । यदाह कल्याणमल्लः ।
व्यनक्ति गात्रं कुरुते च हास्यं दृष्ट्वा कटाक्षं नयने विदध्यात् इत्यारभ्य
इत्यादिचिह्नैरनुरागयुक्तां ज्ञात्वा विदग्धां मृगशावाक्षीमिति ।

(६२)अतएव तत्र मदालम्बनाः शृङ्गारदृष्टिविशेषाः । बहुप्रकाराः प्रादु-
रासन्नित्याह । ततश्च तस्याः वेलालङ्घीति । ततश्च उक्तरीत्या कटाक्षपात-
नानन्तरमपि । सः शृङ्गारचेष्टालम्बनभूतः अहं तस्याः प्रकृतनायिकायाः
द्राघीयसोः आयतयोर्नेत्रयोः शृङ्गारदृष्टिविशेषाणां इति यावत् । भाज-
नतां पात्रत्वं चिरतरं अतिचिरं अगां अभजम् । उक्तञ्च । प्रसादल-
लिता कान्ता शालिनी मन्मथाशया विचलद्भ्रू कटाक्षा च शृङ्गारे दृष्टि-
रिष्यते इति । तान् विशिनष्टि । वेलालङ्घीति । नेत्रयोः कथं भूतयोः
वेलालङ्घिविलासयोः वेलालङ्घिनः अतिवेलाः विलासाः दयितावलोकन
कालिक विशेषाः ययोस्तयोः । विलासो यथा । तात्कालिको विशेषस्तु
विलासोऽङ्गक्रियादिषु इति । ततः विकसतोः विषय विशेषग्राहिणोः ।
विकासो यथा । विकासं तस्तु विषये विशेषमवगाहते इति । ततः
व्याजिह्मयोः वक्रयोः अरालं वृजिनं जिह्ममित्यमरः । ततः मन्दयोः
विषयान्तरागमनाशक्तयोः अनेन मन्थर दृष्टिरुक्ता । यथा । मन्थरा
मन्दसञ्चारे इति । ततः स्मेरा केकरतारयोः स्मेरे विषयमात्र विश्रान्ति-
विरहिणि स्फुरद्भ्रू पक्ष्मणि विशृङ्खल दृत्तित्व मदमन्थर मीलितत्वादि
गुणशीले च । आकेकरे पुनरुन्मेष जिह्मे आत्मव्यापारगुर्व्यौ च ।
यद्वा आसमन्तात् के शिरः समीपे सञ्चारं कुरुतः इति आकेकरे चक्रा-

सभ्रूताण्डवयोः सबाष्पलवयोः संमुग्धयोः स्निग्धयोः
सोऽहं भाजनतामगाच्चिरतरं द्राघीयसोर्नेत्रयोः ।
कलः । नह्ययमनिमित्तोविकारो नायनः ।

---

त्या भ्रममाणे इत्यर्थः । तारे कनीनिके ययोरिति विग्रहः । उक्त
भावप्रकाशे । अपरिच्छिन्नविषयं मदमन्थरमीलितं स्फुरद्भ्रूपक्ष्म तार
यत् तत् घोरमिति कथ्यते इति । ततः तरलयोः चञ्चलयोः प्रियदृ
प्रतिघातेन कौतुकभरेण च यथा क्रममासार प्रसाराभ्यां कल्लोलतर
ङ्गितयोरित्यर्थः । अतएवैते सोत्सुकास्तरङ्गिताश्च । तदुक्तम् । सोत्
सुकं तद्यदालोक्य भूयो भूयोऽवलोकनं कल्लोल इव यः कान्तिविच्छे
सोत् तरङ्गितमिति च । अथवा । तरलयोः धारावाहिनन्यायेन सञ्चार
शीलयोः उक्तञ्च । धारावाहिकसञ्चारो यस्य तल्लोलमुच्यते इति । तत
साकूत साभिप्राययोः आकूतं स्यादभिप्राय इति हलायुधः । तत
साम्बुनोः आमन्दसलिलपूरितयोः ततः सभ्रूताण्डवयोः चतुरास्य भ्
कर्मसहितयोरित्यर्थः । उक्तञ्च । चतुरं किञ्चिदुच्छ्वासा मधुरा रचन
भ्रुवोरिति । अनेन प्रसङ्गाख्यो दृग्विकार उक्तः । यथा प्रसङ्गं तन्नये
सभ्रूविलासं सस्मितं च यद्दिति । ततः अतएव सबाष्पलवयोः अश्रुविच्छे
दशालिनोः इत्यर्थः । संशोषभ्रूताण्डववशात् छिन्नबाष्पयोरिति भावः
लवो रामसुते लेशे विनाशे च्छेदने च ना इति नानार्थरत्नमाला । तत
संमुग्धयोः सव्याजभावगर्भस्वभावयोः । यथा स्वभावावलोकितं मुग्ध
भावगर्भमपि कथ्यतामिति । ततः स्निग्धयोः स्नेहयुक्तयोः स्नेहपर्या
रतिभावानुविद्धयोरित्यर्थः ।

स्नेहो यथा । विस्रम्भे परमां काष्ठां आरूढे दर्शनादिभिः । येन
न्तरङ्गं द्रवति स स्नेह इति कथ्यते इति । इह पुनरिमे शृङ्गारदृष्टि
विशेषाः सङ्गीतकशास्त्रीय विनियोगोदाहरण तत् संवादित्वादि प्रद
र्शने ग्रन्थविस्तरभिया संक्षेपतो व्याख्याताः । किन्त्वमी प्रकृत्यवस्थादिभेदे
भिन्ना स्वस्वानुभवमात्र वेद्यत्वेन सर्वसंवादहीना अनन्ताश्च । तदुक्तम्

राज। (६३)मुग्धाक्ष्या निरुपधि विभ्रमैः कटाक्षैः
प्रत्यङ्गं प्रति फलितैर्निचोलितेन।
तत्काले मम वपुषा सहस्रनेत्री
सङ्कीर्णा शतमखमूर्त्तिरन्वकारि॥

कल। तदिदं तरङ्गितायां दृष्टेर्विलसितम्।

माव। सखे! ततःप्रभृति (६४) सञ्जातविचिकित्सस्त्वयि-
तिष्ठे तावत्। शृणु

(६५) इदन्तावद्युक्तं द्रुतहिमकरस्यन्दिशिशिरे

---

त्यु क्तदृष्टयो लोके हष्टिमार्गमुपागताः। षट्त्रिंशत् किन्त्वनन्ताः
सुः ताराभ्रूपुट कर्मणा। सन्दर्भादुत्सङ्गाप्येताः प्रत्येकं वक्तुमन-
हा इति।

(६३) मुग्धाक्ष्या इति। मम इत्यनुषङ्गः। प्रत्यङ्गं प्रत्यवयवं
तिफलितैः दर्पणान्तरे इव प्रतिविम्बितैः निरुपधिविभ्रमैः छलविम-
विलासैः। कपटोऽस्त्रीव्याजदम्भोपधय श्छद्मकैतवे इत्यमरः मुग्धाक्ष्याः
न्दरदृशः कटाक्षैः दृष्टिविक्षेपैः निचोलितेन छादितेन निविडिते-
ति यावत्। मम वपुषा शरीरेण कर्त्री तत्काले प्रत्यङ्गप्रतिफलित
टाक्षनिचोलितत्वावसरे सहस्राणां नेत्राणां समाहारः सहस्रनेत्री
या संकीर्णा आस्तीर्णा व्याप्तेति यावत्। शतमखमूर्त्तिः महेन्द्र-
रीरं अन्वकारि अनुकृता। तथा च सुन्दरदृशस्तस्या अकपटविलास-
ङ्गी तरङ्गित कटाक्षप्रतिविम्बपूरितावयवशालिनि स्वशरे तस्य अपरि-
मित नेत्रपूरित्वात् महेन्द्रस्य दशशतनेत्रपूर्णा मूर्त्तिरनुकृतेति भावः।

तदिदमिति। तदिदं शतमखमूर्त्त्यनुकरणमित्यर्थः। तरङ्गित-
दृष्टिलक्षणन्तु वेलालङ्घीत्यादि पद्यव्याख्याने स्पष्टीकृतम्।

(६४)सञ्जातविचिकित्सः उद्भूतसंशय इत्यर्थः।

(६५)इदमिति। द्रुतहिमकर स्यन्दिशिशिरे द्रुतः द्रवीकृतः यो

कटाक्षे वामाक्ष्या निपतति यदङ्गं पुलकितम् ।
कथं नामैतत् स्यात् कथय मम तत्रैव समये
यदुद्भिन्ना मल्लो मुकुलपृथुला स्वेदकणिका: ॥

कलः । सस्मितं । (६६)

ह्लादन तापन शक्ती सहजेस्त: सुभ्रुवां कटाक्षेषु ।
तत्राद्या प्रबला स्यान्नेदीयस्त्वे परा दवीयस्त्वे ।

मारु । अथ परैरनुपलक्षितेन चतुरमुखी कराङ्गुलि-चलनेन किञ्चिदिव चकिताङ्गी व्यावृत्य मदभिमुखं मुखं मन्दाकिन्यभिमुखी

---

हिमकरः चन्द्रः तस्य स्यन्दवत् शिशिरे शीतले वामाक्ष्याः सुन्दरदृशः कटाक्षे दृष्टिविक्षेपे निपतति सति अङ्गे शरीरे पुलकितमिति यत् इदन्तावत् युक्तं न्याय्यमित्यर्थः । अति शीतलवस्तु सम्पर्के रोमोद्गमस्य आनुभविकत्वादिति भावः । तत्रैव समये शीतलकटाक्षनिपतनसमयेव मल्ली मुकुलपृथुलाः स्वेदकणिकाः मम अङ्गे उद्भिन्ना इति यत् एतत् कथं नाम युक्तं स्यात् कथय । उष्णकार्याणां स्वेदकणिकानां शीतल-वस्तुसम्पर्कादुद्गमः कथं न्याय्य इति शङ्केति भावः ॥

(६६)ह्लादनेति ह्लादनाच तापनाच ह्लादनतापने तेच ते शक्तीचेति विग्रहः । ह्लादन शक्तिस्तापनशक्ति रिमे द्वे चेत्यर्थः । सुभ्रुवां कटाक्षेषु सहजे स्वभावसिद्धे स्तः वर्त्तेते संशय समाधायकं हेतुमुपन्यस्य तं परि-हरति । तथाच कटाक्षाणां उक्तशक्तिद्वयरूपकारणशालित्वात् तन्निपतने शक्तिद्वय कार्य्यभूतपुलकितस्वेदकणिकानां एककालिकतया समुन्मेषो युक्त एवेति भावः । तयोस्तु शक्त्योर्विशेषस्तु कालभेदेन इत्याह । तत्रेति । तत्र ह्लादनतापनशक्त्योर्मध्ये आद्या ह्लादनशक्तिः विषयस्येतिशेषः । विषयस्य कटाक्षविषयीभूत वस्तुनः नेदीयस्त्वे सामीप्ये प्रबला स्यात् परा तापनशक्तिः दवीयस्त्वे दूरस्थत्वे प्रबला स्यादिति योजना । तथाच

आरब्ध कोकिलकलस्वनभङ्गिभाजा
वाचा नमो भगवतीति समालपन्ती ।
सा मन्मुखादनपकृष्ट कटाक्षमेव
मूर्द्धाचलन्मधुकरेण शनैरनंसीत् ॥

कलः । उचितं तद्विदग्धिम्नो यत् सदाचारे प्रवर्त्तनम् ॥

मारुतः ।

(१७) कण्ठे निवेश्य विधृतां स्फटिकाक्षमालां
मन्दाकिनी स्पृशति तां शिरसा करेण ।
वत्से ! लभस्व पतिमात्मगुणानुरूपं
इत्याशिषं व्यधित मामवलोकयन्ती ॥

कलः । स्वगतम् । एतेन वयस्य एवानुगुण इति दर्शित-
स्त्वया ।

मारुतः । गृहगमनाय कृतप्रणामाञ्च तां वत्से !

---

शक्तिद्वयस्य क्रमाद्विषयवस्तु नेदीयस्त्व दवीयस्त्वाभ्यां प्राबल्य सम्भवेऽपि तत्-
काले शक्तिद्वयेऽन्यतरस्यापि स्वभावसिद्धत्वेन यथावत् सार्वदिक् कटाक्षहक्ति-
मत्ताया न हानिरित्यतः ह्लादनशक्ति प्राबल्य कार्य्यभूत पुलकोद्भेदसमये
तापनशक्ति कार्य्यभूतस्वेदकणकोद्भेदाऽन्याय्यत्वशङ्कायाः परिहार इति
बोध्यम् ।

(६७) कण्ठे निवेश्य विधृतां स्फटिकाक्षमालामित्यत्र । मन्दाकिनी
कर्त्री करेण विधृतां स्फटिकाक्षमालां शिरसा शिरोमार्गेण स्वस्येति शेषः ।
स्वस्य कण्ठे निवेश्य तां नायिकां स्पृशति अस्पृशत् वर्त्तमानसामीप्ये
वर्त्तमानवद्वेति भूतस्य वर्त्तमानासन्नत्वाद्वर्त्तमानप्रयोगः । स्पृशतीत्यत्र
करणस्य करेणेत्यस्य गम्यमानत्वादप्रयोगः । उत्तरार्द्धे च मन्दाकिनीत्येव
कर्तृपदम् । स्पष्टमन्यत् ॥

सोऽयं कुन्तलेश्वरामात्यस्य निजतनयप्रभावापवर्ज्जित सकलचतुरन्तवीर मणिमुकुटोल्लिखित चरणपीठस्य विशद यशः कलिका कल्पितदिक्पाल कामिनी कर्णपूरस्य भुवन मङ्गलपुण्यावदात कर्म्मणो ब्रह्मदत्तस्य क्षीराम्बुधेरिव कलानिधिस्यन्दन गिरेरिव गन्धवाहः गौरी प्रसादलब्धः सहजहार प्रकाण्ड लाञ्छनः कुमारो मारुतो नाम सम्भाव्यतामाप्रश्नेनेति व्याहृतवती।

कलः। सविस्मयम्। अहो महाप्रभावा मन्दाकिनी। यतः। हिमगिरि कटकादागतापि अपरिचितमेव तातं जानाति वर्णयति च वरलाभवृत्तान्तम्।

मारुतः।

इति वर्णिताभिजन्मनि मयि बाला पृच्छतीव नयनेन।
सानन्दं सानुनयं सस्पृह सव्रीडसबहुमानेन॥ (६८)

(६९) अथ मया सम्भावितोऽस्मि भगवति सकलेन्द्रिय संवननेन दर्शनेन मण्डयतु गृहान् नन्दयतु चणविरह निःसहान् बन्धुजनान् इति व्याहृते ससम्भ्रम सौविदल्ल-

---

(६८)इति वर्णिताभि जन्मनि इति॥ मयि इति उक्तप्रकारेण वर्णिताभि जन्मनि परिकीर्त्तितान्वये सति बाला सानन्दं सानुनयं यथा तथा सस्पृह सव्रीडसबहुमानेन नयनेन पृच्छतीवेत्युत्प्रेक्षा। नयनावलोकनेन प्रश्नः प्रतीयते इति भावः। पृच्छतीवेत्यत्र भूतकालिकस्य प्रश्नस्य वर्त्तमानकालासन्नत्वाद्वर्त्तमानसामीप्ये वर्त्तमानवद्वेति वर्त्तमानप्रयोगः। तथा च अपृच्छदिवेत्यर्थः॥

(६९) अथ मया सम्भावितोऽस्मीति। सकलेन्द्रिय संवननेन इन्द्रियग्रामवशङ्करेण वशक्रिया संवननमित्यमरः। कण्ठीरवस्य प्रवर्हणा-

दर्शित सरणिः आश्रमाभ्यर्णतः तस्य कण्ठीरथस्य सविधं
सह परिजनेन मम चेतसा च गतवती ।

गमनसमये साचीभूत त्रिभागमुखी सखीं
किमपि किमपि स्मित्वा स्मित्वा वदन्त्यनुयायिनीम् ।
मदिरनयना मध्ये मध्ये कटाक्ष मनुक्षणं
मम हृदि सखे ! मारब्रह्मास्त्र कल्पमकल्पयत् ॥

(७०) तया गाढ़ं मुक्तो भ्रुवि धनुषि सन्धाय निशितः
कटाक्षेषुर्नान्यैः सह पठनयोग्यः शरगणैः ।
पतन् गात्रे गात्रे परममृतमासौदिव तदा
दवीयान् अद्यायं दलयति पुनर्न व्रणयति ॥

कलः । दुर्मोचोऽयमिति गाढ़ोऽभिनिवेशः ।

---

स्यस्य राजदारादि योषिदारोहणार्थं रथविशेषस्येत्यर्थः ॥ कण्ठीरथं प्रवहणं डयनञ्चेति कथ्यते इति हलायुधः ।

(७०) तयेति । तया भ्रुवि धनुषि इति व्यस्त रूपकं सन्धाय संयोज्य गाढ़ं दृढ़ं मुक्तः निशितः तीक्ष्णः अन्यैः शरगणैः लोकप्रसिद्धैः रामबाणादिभिरित्यर्थः । यद्वा अर्द्धचन्द्रभल्लप्रभृतिभिरित्यर्थः नसह पठनयोग्यः सह भावोक्तानर्हः तेभ्योऽप्यौत्कृष्ट्यादिति भावः । कटाक्षो दृष्टि विक्षेप एव इषुः गात्रे गात्रे प्रत्यवयवं वीप्सायां द्विरुक्तिः । पतन् सन् तदा पतनसमये परं केवलं अमृतं सुधां आस्रौ दिव अभ्यषिञ्चदिव इत्युत्प्रेक्षा । अयं पूर्वोक्तः कटाक्षः अद्य दवीयान् दूरस्थः सन् विषय भूतमदवयवानां असमीपवर्त्ती सन् इति यावत् । दलयति खण्डयति प्रत्यक्षा भावान्मिथ्या इति शङ्कां परिहरन्नाह ॥ पुनः किन्तु न व्रणयति व्रणयुक्तं न कुरुते ॥

मारुतः ।

सा बाला मम हृदयं तस्मिन्नेव क्षणे प्रविष्टाभूत् ।

लावण्यामृतधारा परिपीता नेत्रचुलकाभ्याम् ॥ (७१)

साश्चर्य्यम् ।

(७२) ग्रसति कोऽपि विमोह विधुन्तुदो

हृदयचन्द्रमसं मम दारुणः ।

तदपि हन्त तदन्तर शायिनी

लगति चित्र मृगीव मृगीक्षणा ॥

अद्य खलु

किं तिष्ठामि किमु व्रजामि किमहं जागर्मि निद्रामि किं

---

(७१) सा बालेति पद्ये । नेत्रे एव चुलकौ करतलमध्यदेशौ ताभ्यां इति मयूरव्यंसकादि समासात् परिणामः । अन्यथा नेत्रयोः पानक्रियायां करणत्वस्य आनुगुण्याभावात् ।

(७२) ग्रसतीति । दारुणः कोऽपि अनिर्वचनीयः विमोह एव विधुन्तुदः राहुः हृदयमेव चन्द्रमाः तं ग्रसति । तदपि तथापि हन्त इत्याश्चर्य्ये । मृगेक्षणा कर्त्तृभूता चित्रमृगीव । इत्युपमा तदन्तर शायिनी हृदयान्तरालवर्त्तिनी अन्यत्र चन्द्रान्तरालवर्त्तिनी लगति सङ्गच्छति । लगे सङ्गे इति धातोः परस्मैपदाल्लट् यथाच चित्रमृगी स्वाधारे चन्द्रमसि ग्रस्यमानेऽपि स्वयमनुपद्रवा तदन्तर्वर्त्तित्वेनैव तत्र सङ्गच्छति तथा सम्प्रति भावनानायिकापि स्वाधारे मनसि मोहेन विलुप्यमानेऽपि स्वयमनुपद्रवा तत्र तदन्तर्वर्त्तित्वेनैव सङ्गच्छति इत्यत एव आश्चर्य्यमिति भावः । इत्यञ्च मम मोहविलुप्तहृदयत्वेन सर्वस्मृतिनाशसम्भवेऽपि नायिका स्मृतिर्न नश्यतीत्यहो इति निष्कर्षः । इह विस्मयबीजन्तु आधारस्य मनसो नाशेऽपि आधेय भूतसंस्कारसम्भवाया नायिका स्मृतेर्नाशाभाव इत्येवेत्यवगन्तव्यम् ॥

किं जानामि किमु भ्रमामि किमु वा सुख्यामि,दुःख्यामि वा ।
किं नास्म्यस्मि किमित्यनल्पकलिते न क्वापि पक्षे स्थितः
प्राप्याऽनिर्वचनीयमेव कमपि क्रूरं विकारं सखे ! ॥ (७३)

कलः । अपि श्रुतानि तस्याः कुलनिवासनामानि ।

मारुतः । अथ तस्यामारूढ़कण्ठी रथायां गतायां कुतूहल्यपि (७४) नियमातिपात माशङ्कमानो नाप्राक्षं मन्दाकिनीम् । अपि तु प्रणम्य शिविरमागत एव । अथवा अलं श्रुत्वा ।

यदि सा मानुषकन्या जन्म च निर्णीय तां अहीनकुले ।
उत्पन्ना चेल्लक्ष्मीः पयः पयोधिर्न पल्वलतः ॥

कलः । श्रुतानुसारेण कल्पयामि । तस्या अपि हृदयप्रविष्टो मकरकेतुरिति । पश्य

रोमाञ्चस्फुरणमथोत्तरीयकम्पो
भ्रूवल्लीलसितमपाङ्गरिङ्गणानि ।

---

(७३) किमिति । हे सखे ! अनिर्वचनीयं क्रूरं कमपि विकारं विकारविशेषमित्यर्थः । प्राप्यैव अहं कर्त्ता तिष्ठामि किं ? व्रजामि किमु ? जागर्मि किं ? निद्रामि किं ? जानामि किं गोचरज्ञानवान् वा इत्यर्थः भ्रमामि किमु ? सुख्यामि किमुवा ? दुःख्यामि किं ? नास्मि किं ? अहं न मारुतो न भवामि किं ? इत्यर्थः । अस्मि किं ? मारुत एव भवामि किं ? इत्यर्थः । इति उक्तप्रकारेण अनल्पकलिते बहुप्रकारकल्पिते पक्षे क्वापि एकत्रापि एकस्मिन्नपि पक्षे इति यावत् । न स्थितः इति योजना ।

(७४) नियमातिपातं नियमस्य परदारवैमुख्यरूपस्य अतिपातं व्यतिक्रमं भङ्गमिति यावत् ।

कान्तानामिति परमाप्य रागचिह्नं
प्रस्थाने विवलित वक्त्रमोचितञ्च ॥

मारुतः। ननु स्वाभाविकान्यपि विभ्रमनीयानामेतानि चेष्टितानि। अथवा स्फुटीभवत्य चिरेणैव।

कलः। विलोक्याश्चर्यम्।

(७५) वितानि माल्यानि प्रति नवसुधा स्रञ्जि जहतः
पलायन्ते भृङ्गाः किमिति कलझङ्कार मधुराः।
अये! घ्राणायुष्यं कथमपि समीरैर्धृत भरः
प्रतीहारद्वारात् परिवहति कोऽयं परिमलः ॥

मारुतः। तस्यास्तन तटविलास लासिकाया
मालिकायाः सौरभं संवदति मेदुरोऽयमामोदः।

प्रविश्य प्रतिहारी। प्रणम्य। जेदु जेदु कुमारो। एसा कावि करगग्र समग्ग समुग्गग्र दिव्वपरिमलभमिर भमर माला संकुलिग्रा ग्रमणमग्गा ग्रवरैव कालिन्दी कुमार दट्ठु कामा पड़िहार भूमिं मि वट्टइ।

मारुतः। प्रवेश्यतां।

प्रतीहारी। तह। इति निष्क्रान्ता।

मारुतः। कथं ते प्रतिभाति।

कलः। अनन्य साधारणमेतत् सौरभाद्वैतम्। तेन तर्कयामि सैव मालिका समानीतेति।

---

(७५) विताने इति। पतिनवसुधा स्रञ्जि अभिनवामृत सावीषि इत्यर्थः। घ्राणायुष्यं घ्राणस्य घ्राणेन्द्रियस्य आयुषंत्र आयुष्करं यथा तथा कथम[illegible] पर्यासकार्कश्येनेत्यर्थः। परिवहति इति सम्बन्धः

मारुतः । विशृङ्खलमनोरथ गगनलता कुसुममपि शेखरयितु मिच्छसि । अथवा अनुपदमेव ज्ञास्यते ।

ततः प्रविशति प्रतिहार्य्या निर्दिश्यमान मार्गा यथोद्दिष्टा कालिन्दी ।

कालिन्दी । सविस्मयम् । स्वगतम् । उदारा क्खु मारुअस्स विभुदा सामग्गी । एद स्सिं । दोव्वारिआ वारिअ-दंसणो अंगराअ मेत्त मंडणमंडिए क्कदेसो ज्जमिअ दो-घ्घट्ट करपुक्ख रुक्खित्त सद्दसलाहच्छत्त सिहरत्थ वाढ़ त्त नक्खत्तमाला चिंत्तिय द्दिअहो पविसंतणी सरंत वारसुंदरी चरण मणिसद्दाल मुहरपेरंतो महाराआणं विअ पड़िहारी परिक्कामइ ।

प्रती । यिदो यिदो ।

कालिन्दी । स्पर्शसुखमनुभूय । स्वगतम् । ओदिअहंमि विचंदिआलिंगिअं विअ सरीरं विन्दयत्र । मारुअस्स हार जसाए जोण्हाए होदव्वं । साशंसं । (७६) अवि णाम पिअ-सहीए मल्लिआए बअणं अणुरजजइ महाभाओ ।

प्रति । प्रतिषिद्धं पड़मण्डपदुवारम् ।

उभे प्रविशतः ।

कालिन्दी । जेदु महाभाओ ।

मारुतः । भद्रे ! इतस्तावत् ।

कालिन्दी । कलकण्ठं विलोक्य । स्वगतम् । कोएसो । कणअ-

---

(७६)साशंसं अप्राप्तस्य प्राप्तु मिच्छा आशंसा तया साकमित्यर्थः ।

कणोरगोरं गो अवरो तरुणो। विमृश्य। मसे मारुअस्स-पियमित्तं होज्ज। जो कलकण्ठोत्ति सुणीअदि। प्रकाशम्। महाभाअ! अहं खु भअवदीए मन्दाय णीये अन्ते वासिणी कालिंदी णाम।

मारुतः। ननु दृष्टैव मया तस्मिन् व्यतिकरे।

कालि। महाभाअ! जा किल एक्क सरिए दिट्टा कणआ सा उण भअवदीए हिअअ णिव्विसेसा अह्माणं पिअसही मअह मणोहरस्स महाभाअस्स दंसणेण चंदोदिएव्व कुमुदिणी विम्ह आणंद परवसा धरंगदुय णियकंधरावलं विणिं णिव्वणव मालिअं महाभाअस्स हिअओइ एत्ति पेसिदवदी। एत्थ पड़मदंसण मेत्तदिस वीसंभा अविणा-दाहंकार पेसल गम्भीरा हिअअ हारिणी महाभाअस्स आकिदी एव्व पणअ च वलं तं जणं करेइ। ण उण कुलकसआ विरुद्धा पअबभदा। इति पेटकं विघटयति।

मारुतः। सखे! प्रसन्नस्ते तर्कः।

कालिन्दी। मालिकां हस्ते गृहीत्वा। इयं सा।

मारुतः। कालिन्दि! अत्युदारा खलु तत्रभवती। यत् सकृत् दृष्टेऽपि जने एवं नाम प्रसीदति। ततः कथय-कस्य कुलं परिष्करोति। कुतः पुनरस्याधिगम इति।

कालिन्दी। परितो विलोकयति।

मारुतः। चन्दनलते! नियोगमशून्यं कुरु।

प्रति। प्रणम्य। तह। इति निष्क्रान्ता।

मारुतः। जीवितमेवैषः।

कलिन्दी । सुणादु महाभाओ अत्थि विस्सावसुत्ति दीसंत वीसंत धवल कित्तिप्पभाभारदिसजोण्हा कवलणातिण्हा च वलचओर जुअलो महाराअस्स चंदवम्मस्स वहप्पई विअ महेंदस्स अमच्चो ।

मारुतः । केन न ज्ञायते प्रज्ञागाम्भीर्य सत्य सत्त्वनिधिः स भगवान् विश्वावसुः ।

कालिन्दी । सोहि । अणवच्चदा सोएण दिवाणिसं ढज्झंत हिअओ सअलभुवणेक्कमाई कोमलचरणं गुली पल्लव पल्लत्थ बुद्धी अवच्चं अत्थ अदो कुसुमउरोवकण्ठ वासिणिं भअवई गोरिं आराहअंदो आसि एक्कदा उण सिविणअं मिवच्च वीसवसो पसण्णिह्मि तुह असाहारणाए भत्तीए दिस्सं कासयारअणं दिव्वमालिअइं पहादे मज्झउज्झाणम्मिमज्झंतुएत्ति आणत्तो देवीए।

मारुतः । सविस्मयानन्दं जनान्तिकं । सखे ! सत्यमिदमेव तत् कन्यकारत्नम् ।

कालिन्दी । अह देण हरिस परवसेण पच्चूसे पड़ि पत्थिअं गदुअ जहणिद्दिट्टारामपेरंत मल्लिआ मूलकालिए किसलय सअणिज्जम्मि चंदणवसं चार रा अ कुम्मलदामलं च्छिआ तवस्सिणी(७७)कावि दिट्टा । कसआ तां अ घेत्तूण गज्जलिअ जज्जरिअंगेण जं मल्लिया मूले दिठ्ठा देण मल्लि-

(७७) तपस्विनी दयनीया इत्यर्थः । करुणाप्रतिपादने तपस्वीचेति हलायुधः ।

सूतैर्मध्य महेन्द्र रत्नकिरण श्रेणीभिराराञ्जिता
यत्कान्तिर्यमुनोर्म्मिमिश्रख सरित् कल्लोल हल्लो हला ॥

मारुतः। वयस्य ! वर्णननिपुणोऽसि।

कालिन्दी। णं जाणीअदि एसो जो सहजो त्तिवण्णिदो भअवदीए।

कल। तद्दिनमपि कृतार्थश्च तव भवत्या।

कालिन्दी। स्वगतं। मसे मारुअदंसणेण किं वि उक्कठी एव्व मल्लिआ ता अह्मे हिं एव्व पत्थणिज्जो संदाव संतोए। प्रकाशम्। रमणिज्जो क्खु तुह्माणं विणिमओ अहं तु जहणिहिट्टं करेमि।

मारुतः। हारं कण्ठादवरोप्य। कालिन्दि ! न केवल-मसौ हारो दीयते हरिणोट्टश्चे अहं च तद्गुणक्रीतो दत्त एवास्मि गृह्यताम्।

कालिन्दी। हारं गृहीत्वा सस्मितम्। स्वगतम्। महाराअ

---

अङ्गुलीनिर्दिश्यमान वस्तु इत्यर्थः। विधेयाभिप्रायकं पुस्त्वं मन्दरभि-न्नचन्द्रशकलप्रख्यैः सूतैः गुम्फितैः मौक्तिकैः कृतः अतएव मम सख्युः आ-नन गलद्वाणी विलासस्मित स्पर्धी हारः मध्य महेन्द्ररत्नकिरणश्रेणीभि-राजञ्जिता यत्कान्तिः यस्य हारस्य कान्तिः यमुनोर्म्मिमिश्र खसरित् कल्लोल हल्लोहला यमुनायाः ऊर्म्मिभिः मिश्रा या खसरित् गङ्गा तस्याः कल्लोलानां हल्लोहल इव हल्लोहलः क्रीडेव क्रीडा यस्यामिति विग्रहः यमुनासङ्गत गङ्गातरङ्गलीला शालिनीत्यर्थः। प्रयुक्तञ्च हल्लोहलपदं वामकेश्वरतन्त्रे। यथा, काल हल्लोहलोल्लोल कलनाशमकारिणी-मिति। तादृशो हार इति पूर्वेण सम्बन्धः।

सव्व वअस्सो होहि। प्रकाशम्। गहीदो एव्व अह्मे हिं ता गच्छेह्म आस्साकरणस्स।

मारुतः। तथा।

कालिन्दी। निष्क्रान्ता।

मारुतः। सखि!।

ज्ञातं कुले महति जन्म वराङ्गनाया:
प्राप्ता च तत् कुच युगान्तर लालिता स्रक्।
भावोदयस्य सुतनोरपरिस्फुटत्वात्
तापस्तथापि हृदये तदवस्थ एव॥

कल। स्फुट एव माल्यदानादिभिरनुरागोऽपि।

मारुतः।

(८०) माल्यदानात् कथं नाम रागसत्ता प्रकल्प्यते।
अन्यदौदार्य्य सौहार्द मन्यदाकूति चेष्टितम्॥

सन्तापं प्रकटयन्।

(८१) नीवाम्भाच्च गवाक्षतः प्रभवति द्राक् तत्तदर्थं ग्रहे

---

(८०) माल्यदानादिति माल्यदानात् हेतोरित्यर्थः। रागसत्ता कथं नाम प्रकल्प्यते न कल्पनीयमित्यर्थः। कुतस्तदाह। औदार्य्यञ्च सौहार्दञ्च अनयोः समाहारः। औदार्य सौहार्दं अन्यत् एकं आकूतचेष्टितं आकूतेन अभिप्रायेण चेष्टितं साभिप्रायकं कर्मेत्यर्थः। आकूतः स्यादभिप्राय इति हलायुधः। अन्यत् अपरं अस्तीति शेषः। इत्थं चौदार्य्य सौहार्दाकूतचेष्टितान्यतरत्व सन्देह विषयत्वात् माल्यदानस्य अनुरागसत्त्वाहेतुत्वेन कल्पनं अनुपपन्नमिति भावः।

(८१) अत्र तु प्रथमार्द्धेन वाष्पसंस्कार मोषरूप प्रतिबन्धकसद्भावात्

स्मर्त्तुं प्रागनुभूत वस्तु न तथा संस्कारमोषादलम् ।
अद्यान्धं करणेन केनचिदहो पापेन मूकं मनो
मध्याह्ना तप मूढकैरव पुटी मध्यद्विरेफायते ॥

नेपथ्ये वैतालिकौ ।

जय जय जगन्नयन चकोर चन्द्र ! सुखाय ते भवतु माध्यन्दिनी सन्ध्या ।

एकः । नवं पच मधुद्रवं नलिनगर्भसिन्दिन्दिरो
विमुञ्चति सुगीकरे शिशयिसुर्द्विपानां कटे ।
द्रुतं सरसि शैवलोदर कुड़ङ्ग मृणालवो
विशन्ति विवशा झषा दिनकरे ललाटन्तपे ॥

---

वीक्षण स्मरणा पाटवनिरूपणद्वारा आत्मनः अपरेणार्द्धेन माध्यंदिनप्रकाशमुकुलित कुमुदमध्यगत चञ्चरीकवदाचरणकथनद्वारा मनसश्च सन्तापातिशयं निरूपयति ।

नेत्रेति आत्मा कर्त्ता अक्षतः नेत्राभ्यां करणभूताभ्यां तृतीयार्थे तसिः । अक्षं नेत्रे तनुप्वपोत्यभिधानम् । द्राक्झटिति तत्तदर्थग्रहे विषयभूत तत्तद्वस्तु ज्ञाने अक्षगवा नयनजलेन हेतुना वाष्पेणेति भावः । नो वा प्रभवति नैवार्हतीत्यर्थः । वा शब्दोऽत्र विकल्पे च समुच्चयेऽवधारणे इत्यभिधानात् । अयं भावः कार्य्य भूते घटादिकविषयवस्तु ज्ञाने कारणयोर्नयनयोः वाष्परूप प्रतिबन्धकवत्ता हेतोः आत्मा कर्त्तृभूतो न समर्थो भवतीति तथा यथा तत्तदर्थग्रहे न प्रभवति तद्वदित्यर्थः । प्रागनुभूतवस्तु समं स्मर्त्तुं स्मरणविषयीकर्त्तुं संस्कार मोषात् स्मृतिहेतुभूतो गुणः संस्कारः तस्य मोषात् अपहारात् हेतोः नालं न पर्य्याप्तः । अयं भावः । कारणभूतस्य संस्कारस्य नाशात् तत्कार्यभूता मनुभूतवस्तु स्मृतिं [illegible] आत्मा न भजतीति । अद्य इत्यमात्मनः सन्तापकाले अन्धङ्करणेन अन[illegible]ं कस्य

कुर्वन्त्यनेन अन्वङ्करणः तेन आद्य सुभगस्य कपलितेत्यादिना स्वनु त्रानन्द शून्यत्वापादकेनेत्यर्थः । एकं शून्यत्वापादकत्वञ्च ध्वन्यते केनचित् अनिर्वचनीयेन पापेनेति पाठः तुच्छः तापेन हेतुना मदनानलजन्मना सन्तापेनेत्यर्थः ।

मूकं इन्द्रियसंयोगादिव्यापार शून्यं गुञ्जनादिव्यापारशून्यत्वञ्च ध्वन्यते इदन्तु गुञ्जनादिव्यापारशून्यत्वं उपमानभूतस्य द्विरेफस्येति ध्येयं । मनः कर्त्तृ मध्याह्नातपेन मूढं सङ्कुलितं यत् कैरवं कुमुदं तस्य पुटीमध्ये प्रदेशान्तराले विद्यमानो यो द्विरेफः तद्वदाचरतीत्यर्थः । तादृशद्विरेफ सदृशावस्थोऽस्तीति भावः । अत्र मध्याह्नातपग्रहणं अन्तर्वासानर्ह सन्तापातिशय सूचकं इत्थं त्वे अत्रैवाऽनुपदं वक्ष्यते । यथा नखस्पच मधुद्रवं नलिनगर्भमिन्दिन्दिरो विमुञ्चति इति । मूढपदं बहिर्भावयोग सूचकम् । अहो अद्भुतं इत्यर्थः ।

इयन्तु खेदोक्तिः । ईदृशः सन्तापोऽश्रुतदृष्टपूर्ब इति भावः । अत्र वीणा स्मरणाऽपाटवकथनात् प्रयोजनान्तरपरित्यागः सूचितः । अनुपदवक्ष्यमाणेन यत्र क्षिपामि दृशमन्यदिदृक्षयाहमिति पद्येन मनसा-हृत कान्तत्वं आत्मारामत्वञ्च द्योत्यते । अतो वक्ष्यमाणेऽयं मनसः सङ्गाख्या तृतीया मदनावस्था । तदुक्तं रतिरहस्ये । मनसा हृतकान्ताश्च विसृज्यान्यप्रयोजनं आत्मारामा भवेत् यत्र चित्तसङ्गरतिर्यथेति । इह वाष्पभरस्मरणाभाव मनःखेदाः नायिका गुणसङ्कीर्त्तन जनित मूर्च्छावशादेव ।

तदुक्तं रसाकरे । वियोगा योगयो रिष्टगुणानां कीर्त्तनात् स्मृतेः साक्षात्कारोऽथवा मूर्च्छा दशधा जायते यथेति ननु । श्रवणं चक्षुःप्रीति मनः संयोगोऽथ सङ्कल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।

मोहो मूर्च्छास्मृतिरित्येकादशधा स्मरावस्थाः । स्त्रीणामपि पुरुषाणां एताः सन्दर्शनाज्जाता इति वचनात् । मूर्च्छाया उपान्त्यदशात्वेन कथमिदृशात् मनः सङ्गाख्य तृतीयदशायां वाष्पभरादीनामुद्भूतत्वं इति चेन्न । साक्षात्कारोऽथवा मूर्च्छा इति वचनप्रामाण्यात् । इह मूर्च्छानाम

अपरः। (८२)

तोयं तोयमिति ब्रुवन्ति तृषिताः केलीशुकाः पञ्जरे
धारावारि पृषन्ति यन्त्रभवने लीढे मयूराभकाः।
उद्यानोदर सारिणी परिसरे क्रीड़ा मृगाः शेरते
याता सम्प्रति नूनमातपभिया च्छायापि मूलं तरोः॥

---

इष्टगुणश्रवणकीर्त्तनान्यतर जनितो वाष्पभर स्मरणाभावमनःखेदल-क्षणः तत् क्षणिको विकारविशेषः। तत् उपान्त्यदशात्वे तु मोहाधिक्या दशक्त्या तु मूर्च्छाज्ञानक्षयो यथेति। रतिरहस्य वचनात् पूर्वं पूर्वदशा-प्राबल्यक्रमेण मोहदशाप्राप्त्यनन्तरं तद्दशाधिक्याऽशक्त्यभयजन्यो इष्ट-प्राप्तिमरणान्यतररूप परिहारावविकोज्ञानक्षयो मूर्च्छा इति विवेक सद्भावाच्च। अस्मिंश्च विषये उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां सासन्यस्ताभरण मबला पेशलं धारयन्तीति मेघसन्देश पद्यद्वयव्याख्याने निखिलमपि विशदम्। इह उपमानोपमेययोर्मनोभ्रमरयोः उपादान मस्ति साधारण धर्मस्य खेदस्य तु नोपादानं अतो धर्मलोपः खेदेन मध्याह्नातपमूढकैरवपुटीमध्य द्विरेफायते इत्यपि वक्तुं शक्यत्वात् द्विरे-फायते इत्यत्र द्विरेफवदाचरतीति कर्तृरूपादुपमानात् सुबन्तात् सदृशा-चारे क्यञि क्रियमाणे मध्ये उपमावाचकस्य लोपात् वाचक लोपः इत्य-सुपात्तोपमानोपमेयकत्वे सति लुप्त धर्म वाचकत्वात् धर्मवाचकलु-प्तोपमालङ्कारः। अथवा तापेनेत्यस्य द्विरेफवदाचारे हेतुता तथा च द्विरेफवत् परितप्यते इति भावः। अस्मिंश्च पक्षे तापेनेति साधार-णधर्मस्याप्युपादानात् वाचकलुप्तोपमालङ्कारः। यत्रौपमानधर्माणामुपमा वाचकस्य च एकद्वित्र्यनुपादानात् भिन्ना लुप्तो पमाष्टधेति लक्षणात्। शार्दूलविक्रीड़ितं वृत्तं मसजसताः शार्दूलविक्रीडित केन गौरविर्वि-र्यतिरिति लक्षणात्।

(८२)तोयं तोयमिति। लीढे लेढीत्यर्थः। लिह आस्वादने इति

उभावाकर्णयतः ।

कल । स्वगतम् । भवत्वस्मादभिषङ्गात् आक्षिप्य मज्जन-गृहं नयामि । प्रकाशम् । अतिक्रामति स्नानकालः । पश्य । परितो घटित घटीयन्त्र वान्तजल शीकर शीतलाराम-मारुत सञ्चार सह्यतापोदयं समयम् ।

मारुतः । विलोक्य । सखे !

यत्र क्षिपामि दृशमन्य दिदृक्षयाहं
तत्राग्रतः स्फुरति केवलमेतदेव ।
तद्वक्त्र बिम्बमरुणाधर लोभनीयं
ते लोचने तदलसालसमीक्षितञ्च ॥

साभिलाषम् ।

मन्येऽद्य श्रमवारि भिन्नतिलका सेवेत वल्लीगृहान्
आलीनां करताल वृन्त पवनैः संवाह्यमाना शनैः ।
आहोस्वित् बिसभङ्ग कङ्कणवती पत्राम्बु सिक्ताम्बरा
कर्पूरार्पण पाण्डुरस्तनभरा वर्त्तेत धारा गृहे ॥

निश्वस्य । (८३)

पश्यामि चित्तफलके लिखितां सङ्कल्प शिल्पिना बालाम् ।
साकूतमीक्ष्यमाणां स्मयमानमुखीं सविभ्रमं यान्तीम् ॥

प्रविश्य प्रतिहारी । कुमार ! भट्टिणो सविहं पेसिदो

---

स्वरितेतो धातोः कर्त्तरि लडात्मनेपदैक वचनम् । सारिणी कुल्या स्वल्पनद्याञ्च सारिणीति मेदिनी ।

(८३)पश्यामीति । सङ्कल्पोऽध्यवसाय एव शिल्पी चित्रकारः तेन कर्त्रा चित्तं मन एव फलकं तस्मिन् लिखितां सुगममन्यत् ।

भमरश्रो कुंतलेसर गअराद्दो पच्चागओ कोमल दुजल-मुद्दिअ चित्तफलअ हत्थो दुवारम्मि वट्टइ। सोहि चित्त-फलओ पाहुडीकिदो (८४) सिम्हल दीवागएहिं णाविएहिं अह्माणं महाराअस्स।

कल। ननु विशिष्टवस्तु दर्शं प्रेषयति वत्सलो महाराजः।

मारुतः। जनान्तिकं। किं चित्रान्तरदर्शनेन। पश्यामि चित्तफलक इत्यादि पुनः पठति।

कलः। स्वगतम्। दुर्निवर्त्योऽयमत्यासङ्गः। प्रकाशम्। चन्दनलते! स्नानाय उच्चलितो वयस्यः मज्जनगृहमाग-च्छतु भ्रमरकः।

इति निष्क्रान्ताः सर्वे।

इति श्रीमत् कविकुलतिलकेन श्रीसरस्वती विक्रमार्क-प्रमुख बहुमतमाहित्यवैभवेन श्रीदण्डाचार्य्येण विरचिते श्रीविक्रमार्क राजन्य सत्कारभूते मल्लिकामारुते प्रथमोऽङ्कः।

(८५) उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा, त्रैविद्येशो महर्षि र्निरवधि महिमा यद्गिते जागरूकः।

---

(८४) पाहुडीकिओ प्राभृतीकृतः उपायनीकृत इत्यर्थः। प्राभृतन्तु प्रदेशनं उपायनमुपग्राह्यमित्यमरः।

(८५) उद्दण्डमिति त्रिविधा आध्यात्मिकाऽऽधिभौतिकाऽऽधिदैविकत्वेन विद्या त्रिविधा तां विदुः त्रैविद्याः अङ्ग चतथर्म त्रिपूर्वाद्विद्यान्ताच्चेति वक्तव्यमिति ठक् प्रतिषेधः। तेषां ईशः त्रैविद्येशः त्रिप्रकारक विद्या-प्रवीणवर्य्य इत्यर्थः इति व्युत्पत्त्या ह्रद्या च त्रैविद्येशनामा निरवधि-

तस्य श्रीविक्रमाङ्का बहुमति रचिते मल्लिकामारुतेऽस्मिन्
आद्यः प्रागात् दशानां प्रकरणतिलके निष्कलङ्कोऽयमङ्कः।

---

द्वितीयोऽङ्कः।

ततः प्रविशति चेटी।

चेटी। सविषादम्। ह त्थि वलियं खु उमादिआ सि-रीस कोमलंगी भट्टि दारिया पबलेण दिणअरस्स दावेण अइ वा मं महेण वा। जं मजभ्रस्स विअ धाराघरगब्भ घुमस्स अणुह्मले वि आअवोण णिग्गच्छइ। मसो तस्स

---

महिमा महर्षिः यस्य उद्दण्डकवेः हिते जागरूकः निस्तन्द्रः उपेक्षा-रहित इत्यर्थः। जागरूक इति सूत्राज्जागर्त्तेः ऊक् प्रत्ययः जागरूको जागरित इत्यमरः। निर्गतः कलङ्को यस्मात् स निष्कलङ्कः दुराध्व निर्देशादिदोष शून्य इत्यर्थः। यदुक्तं अङ्कदोष प्रस्तावे। दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम्। संरोधं भोजनं स्नानं सुरतं चानुलेपनं अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेदिति अङ्कलक्षणन्तु समस्तपात्र निष्क्रामावसानोऽङ्कोऽभिधीयते इति।

इति मल्लिकामारुतव्याख्याने
प्रथमोऽङ्कः।

---

एव्वं महाभाअस्स वसणया मुणाईगअं विसमअं। (१) साशंसं। अवि णाम सो वि एव्व हवे तदो किस्साम णाजियं परम्परा-णुराअ घडणा सिलाह णिज्जेण भअवदा रइ वल्लहेण। पुरतो विलोक्य। एसा पियसही महाभाअ मारुआणुअरस्स वल्लहा कंकेलिआ कंकेलि पल्लव पाण्डु दुऊल वासिणीं किं वि हरिस परवसा इदो एव्व आअच्छइ।

ततः प्रविशति कङ्केलिका।

कङ्के। पियसहिए णो मालिआए मुहादो भट्टिदारिआए पवुत्तिं जाणामि।

प्रथमा। उपसृत्य। सहि! सअं एव्व किं वि किं वि मंतअंती समी वट्टिअं वि मं अणालबंदी धावसि।

कङ्के। विलोक्य। सहि पवालिए! मा कुप्प मए खु कज्जंतर खित्त हिअआए णालक्खिआसि।

प्रवा। सहि! महुरिए! ण तक्केमि आगओ तुह पड़िवक्को सो मारुओ त्ति।

कङ्के। सव्रीड स्मितं। सहि! सच्चं आगओ अदो एव्व मह पइहं सम अब्भिलंवो णमुक्कं मित्तेण चिरदिट्ठेण तेहिं आलावेहिं।

प्रवा। सहि! कहं णाम मुंचइ कंकेलिअं भमरओ।

---

साशंसं अप्राप्तस्य प्राप्तुमिच्छा आशंसा तया सह यस्मिन् कर्म्मणि तद्यथा भवति तथा अवश्य लब्धव्यमिदं कथं लभ्येत इत्याशयेन साकम्। इत्यर्थः।

अहकंहियो मारअस्स वावारो किं सुणाइ किं भणाइ किं कुणाइत्ति

कङ्क । एत्तियं कहिअं अदिसईए लोअणआए दिव्वंतराअं चित्तफलए पड़िच्छंदं विलोअअंदो सअं वि चित्तप्पिओविअ चिट्ठइत्ति । खड़िअखु आसातंतुणा एसाखु । तवस्सिणी तस्स पुढमदंसणविअगिह्म ह्मदा विदष्टं व्वमुहमोरो अहिअदरं किलंमइ । प्रकाशं । सहि ! किं तं कज्जंतरं जेण अक्खित्त हिअआसि । तेणहि एदं पविहिदंअंवरंदादूण समाणयंतेण णियसामिव अणादो अह्माणं भट्टिदारिअं दट्ठु कामेण अग्गदो पवुत्तिविसाणि णिउत्तह्मि ।

प्रवा । स्वगतं । एण किंविसा सं हिअअं ।

प्रकाशं । सहि ! दुजलव्वसंगेण निवेदेमि अज्ज रअण वद्दिणामहेयेण सत्थवाह च क्कवट्टिणा भट्टिणाऽमिचस्स उवाअणो किअं वालग्गण कुय कुप्पल सरसे रत्तकरंडए वड्डिअं दिव्वं तराणेदं एक्ककिमिहर वसणं ।

कङ्क । किं तुए दिट्टं ।

प्रवा । भट्टिणा आवट्टिअंअ विघड़िय घरं सअं एव्व देवीदं सणाध आए भअवदीए मंदाइणीए हत्थे ओव्विअं दिज्जउ तुहवञ्चाए मल्लिआ एत्ति ।

कङ्क । तासुलद्दं खु तस्स दंसदं अह्माणं । अहकहेहि को उण संवरअस्स किए राअणिव्वंधसस पसंगो ।

प्रवा । पमासमाहिदो खु भट्टिणाऽमच्चेण मल्लिआए णाहं पमाणं अविदु भअवदी कञ्चाइणी एव्वेत्ति ।

कङ्के। सानन्दं। सुठ्ठु पञ्चा कखादो हदासो संवरश्रो कहेहि तुमं उग कुदो आअच्छसि।

प्रवा। अहं खु अज्ज गोरीघरादो पड़िणिवुत्ता भट्टिदारिश्रा सुरह्लि सूरगहत्थीहिं कवल्यि अत्ति सुणिश्र उम्मभंतीए आणात्ताविदि अवुत्तं दाणि वट्टेमि।

कङ्के। जइ एव्वं कहेहि भट्टिदारिश्रा कहिं वट्टइ।

प्रवा। कम्माणुमेश्र फलिहभित्ति भाउक्खिस चंदमंडलव्वणाल वोलीण जंतवारि तुसारो सारजभड़िले कोमलजलोहावि आणलंविश्र मालइ मालहारिणी वप्फदक्खमोत्ति। अक्खोदवालु श्रा वलणाल्लीण वासकित्ति सारसोसरत्त चंदणवारि वचहेधाराधरम्मुणालमेत्ता हरणा सीअल चंदमणि सिलाघंसिश्र विश्रट्टि उच्चंगविल्थारिए कुसुमसश्रणिज्जे दलि अकोलोदल केलं तलवेट्टाए वोज्जंतीए पिअसहीए णोमालिश्राए उवासिश्रा कालिंदो मुहादो मालिश्रा अणवुत्तंदं साअरं आयेस अंदो वट्टइ।

नेपथ्ये।

हला कालिन्दि! उभे आकर्णयतः।

प्रवा। सहि! दाहिणेन केलिदोहिश्रं सुणीअदि कोइलपंचमकोमलो भट्टिदारिश्राए आलावो मणे हवभिश्र धाराघरा मात्तिश्र मंडवं आगअत्ति ता ज्जुत्तणि वारिश्र परिअणाए परिसरे ठादुं।

इति निष्क्रान्ते।

प्रवेशकः।

ततः प्रविशति उत्कण्ठितोपविष्टा
मल्लिका कालिन्दी नवमालिका च

मल्लिका। तदो तदो ?।

कालिन्दी। तदो अदेण महाभाएण साणुणअं सप्पणअं एव्वं णाम आणत्ता हाणेवअरणतुवरंदवार सुंदरीकरो-दृश्चि अकंच कुंभं पिंजरिआ अवेण दुवारेण निग्गमिअ आअदम्हि।

मल्लिका। स्वगतं। सहि! सहजे मालिए धण्णातुमं सिला वणिज्ज सोभग्गा सित्त मुहुत्त जाआणं वि अह्माणं हविहं एव्व कङ्क फलं ज एक्क वदच्चिअ ईसि विहसत्ताताविच्छ साम-लकोमलंगस्स तस्स णोसंकक्कंटग्गह भाअणं संवुत्तासि।

प्रवा। दिट्टिआ णकओ महाभाएण पढमव्वणर-भंगो।

कालिन्दी। जादे! णं गिरकंधारादो अवरो विअ सह्व थिस दिणो सरअतरो जिपंधरो हारो सो एसोत्ति। मल्लि-काया: कण्ठे हारमासञ्जति।

मल्लिका। सहर्षरोमाञ्चं। स्वगतम्। संस्कृतमाश्रित्य।

तानालोकरदुत्तशीतलविधोनारस्य तद्दर्शनात्
यामन्ये वड़वानलानिव वपुर्दाहि न मोहाकुला।
सा जाता तदङ्ग सङ्ग सुभगे हारेऽधिरूढ़स्तने
सर्व्वाङ्गे स्थगितेव साम्प्रत महो सीधाकरैः मण्डलैः॥

नवमालिका। जनान्तिकं। सहि कालिन्दि! जदच्चिअ विसट्ठकंदोट्ठदलदामदोहरसिणि डेहिं दिट्टि वाएहिं पसखो किये सो महाभाओ। तदप्पहुदि अणुक्खणवढ्ढतेस

अणंग रूवेण केणवि अणलेण वलिअं किंमइ भट्टिदारिआ वेअण किलि किञ्चिअ मंजुव अणो सुपंजर ऊसेसिण णिल कइ सुलहमलअ मारुअं कीलाप्पासादंगुण गुंजइणं उड़ एसु सहअरी संञ्जावेसु ढढ्ढुलउण परमुणालं घड़िय हारा धाराघरेसु वेढ़इ विहड़ितमालं रद्दल मोसालिए वल्लव सअणिज्जेसु गुम्ममइ वोम्मणि दल धविहल संचारिएहिं मारुएहिं हुलइ पुणो पुणोवि पकखि आदो वअणादो अंवइ खणेखणे णिंहुअ णिम्मणिणी ससासं। अञ्जउण सख्रमास्मित्य।

कलयति तदुदन्ताकर्णनेषु प्रसक्तिं
कमपि कमपि मध्ये निश्चला ध्यायतीव।
अपिच वहति हारस्पर्शमात्रे ण वाला
पवनचलकदम्बोड्डे दतुल्यामवस्थां॥

ता लज्जाणुआणभणाइ अप्पणोव्व अवलं विणो मअणावेसं। अह्मे उण वाअइ सामो मित्तसंकामिदो ख सजभो होज्ज संदावो। मल्लिकां प्रति। सहि! कालिन्दो भणइ रंजण लक्खणा राआणो सेवा लक्खणो वरिअणो वेम्मलक्खणाइ मिहुणाइ वीसंभ लक्खणाइ मित्ताइ ता मह्पंसुकीलणादो आरहिअ अविभक्तसुह दुक्खे जणे णजुत्ता अवहित्थे त्ति ता कहेहि मसे भव संविभाएण लहुकरेहि सन्दावं।

मल्लिका। स्वगतं। णसक्कुणोमि पुणोपुणोवि वत्तुका मा वोलाणिअं ति अजोहा किंवि आअकखिदुं हत्थि!

तहवि कहञ्चि कहइस्सं। प्रकाशम्। सहि! तस्स महा-भाअस्स इत्यर्धोक्ते लज्जया बाष्परुद्धकण्ठी विरमति।

नव। सकरुणमालिङ्ग्य। सहि! अलं पुणरुत्तेण वअणेण कहिअं एव्व णिदाहअर किरणमिलाअन्तसिरीसदलदुब्बलेहिं अङ्गेहिं। सहि! साफल्लो क्खु जम्मणो तस्स महाभाअस्स जुव्वणस्स। जस्सिं तुमं लच्छिव्व पुरुसोत्तमे। सेसणाअव्व किरणमालिणि। अणुराअं बन्धेसि।

मल्लिका। सनिश्वासम्। सहि! सोअणिज्जो क्खु सो अणुराओ जो णपरव्वसस्स।

कालिन्दी। सहि मल्लिए! मा एव्वं भण सोवि सरिसाणुराअ वड्ढणव्वावुदेण भअवदा मम्महेण गोअरीकिदो अमोहाणम् विसिहाणं। विकल। संस्कृतमाश्रित्य।

तस्यापि वाष्पकलमक्षि वपुर्विवर्णं
म्लानं मुखं परिसरे प्रियमित्रमेव।
किञ्च क्रिया तव गुणानभिसंस्मरतस्य
प्रत्यक्षरं पुलकमालि कपोलमूलम्॥ (२)

मल्लिका। कालिन्दि! एआरिसा क्खु सहीजणस्स आसासणा विप्पलद्धा।

नव। अत्थ सो विप्पलद्धो। एदस्सि किसअलवसिज

(२) वध्यति मारुतस्य सात्त्विकोन्मेषादिलक्षण निरूपणेन मदनबाणगोचरीभूततां प्रतिपादयन्ती मल्लिकां समाश्वासयति। तस्यापीति तस्यापि मारुतस्यापि इत्यर्थः। अपिशब्देन न केवलं तवेत्यर्थे प्रतीतिः अक्षि वाष्पकलमित्यादि योजनं क्रमेणैव।

पुढमदंसणविम्हआणंदवित्थारि उत्ताणतरं ततारसारो
दरेहिं ईसि तिरच्छि जिम्हिआवअरीवण तरङ्गिअसअमेहिं
ठलाय ऐहिं चिन्हिमालिङ्गिअ दुद्धसाअरतरलधवलमुद्धमड़ु
रेण किरणसन्ताणेण अङ्गमङ्गं मिलहाविआहि। सस्मितम्
अहवा मरणस्स भङ्गसिणिद्धसरीरस्स तस्स दंसणव्भमेण
ण जाणिओ एव्व तक्कालजणिओ वुत्तन्दो जा तुमं भअवदीए
मन्दाअणीए वन्दणादोवि वंमत्ता समुद्दाआरकखलण
भीरुआए मए करिंगुलिचलणेण कहंवि अप्पाणं जाणावि
आसि।

मल्लिका। सविलक्षस्मितम्। सहि! ठाणे उवालद्धं मि।

कालिन्दी। सहि! सव्वहा मादि अणासासणं होदु।
णं तेण पुढमं अप्पाणमप्पिओ पच्छा हारो।

नव। कालिन्दि! दाणक्कमेण पडिग्गहिअं पिअसहीए
वि णं पुढमं महाभाओ हिअअं आरोविओ उवरिअ हारो।

मल्लिका। सहर्षं हृदयं विलोक्य। महाभाअ! अच्चेरं ते
सअललोअचित्तवलामोड़ि हरण किवणस्स उदारत्तण
पि जेण तिभुवणेक्कमण्डणं अणग्घो अप्पाविदिसो ता
मह हारो विअ अत्ताणं ण दंसेसि उक्कंठिआणं मह णअ
णाणं मो सोदि वअणं होज्ज।

नवमा। जनान्तिकं। कालिन्दि! एसा खु तवस्सिणी
हिअअट्ठिअं सव्वं एव्व मसेइ किलिसंदाव।

प्रकाशं। सहि कालिन्दिए! मसे किं णसामहटंसणं वहु
मण्णेइ आदु ण वेत्ति वि इच्छंदो हिअअंचि अणि भुड़त्ति।

मल्लिका । स्वगतं । जइ एव्वं उतम्रः तेणच्छुहा ारेण वरिकल्विणिज्जाखु कुटुरणी अच्छ मइणजाणेवि क' तस्स अट्टंसणीत्थं (२) कुजलम्मि भग्ग वास णिव्विसेसं ावत्थम् । संस्कृतमाश्रित्य ।

आधिःकश्चन दारुणो वितनुते तद्दर्शनाद्द्य मां
मूर्च्छालां कलुषीकरोति कलुष ग्रामं विमोहो महान् ।
धारावाहि तदेकगाहि किमपि ज्ञानादयं तायते
किं वाचा हृदयस्थितेन तदिदं तेनैव विज्ञायते ॥

नवमा । जनान्तिकं । कालिन्दि ! वेच्छ रमणिज्जो भट्टिदारिआए अणुराअप्पआरो । संस्कृतमाश्रित्य ।

पातयति हृदयदेशे प्रियजनगर्भे पुनः पुनर्मुग्धा ।
वर्णितमदनातङ्का वाष्पवतीं भावमन्थरां दृष्टिम् ।

---

(२) कुकूलाग्नि भङ्गवासात् विभक्त तुषानलाधिवासात् निर्विशेषां विशेष शून्यां सहमीमित्यर्थः । अथवा शङ्कु सङ्कीर्ण गर्त्ताग्निभागवास-निर्विशेषामित्यर्थः । कुकूलं शङ्कु सङ्कीर्णे श्वभ्रे पुंसि तुषानले इति नानार्थ रत्नमाला ।

आधिरिति । तद्दर्शनात् मारुतदर्शनात् जात इति शेषः । दारुणः कश्चन आधिः मनोव्यथा अद्य मां मूर्च्छालां मूर्च्छावतीं प्राणिस्या-दातोलजन्यतरस्यामिति मूर्च्छाशब्दात् मत्वर्थे लच् प्रत्ययः । वितनुते महान् विमोहः दुःखानुचिन्तनोत्था विचित्तता विषयि ग्रामं इन्द्रियस-मूहं कलुषी करोति अज्ञानभ्रमाघात घूर्णनाऽदर्शनादिभिः क्षुब्धं कुरुते त्यर्थः । यदुक्तं मोहोविचित्तता भीति दुःखावेशानुचिन्तनैः तत्रा-ज्ञानभ्रमाघातघूर्णनादर्शनादय इति ।

स चासौ एकश्च तदेकः तं गाहते प्राप्नुते इति तदेकगाहि

मारुतेतरविसुखमित्यर्थः। धारावाहि बलिकाधारवत् विच्छिन्नि राहित्येन एकाकार प्रसरणशील ज्ञानाद्वयं अद्वितीयज्ञानं कर्म एकमेव ज्ञानमिति यावत्। किमपि अनिर्वचनीयत्वेन तायते विस्तृतं भवति। तायृ सन्तानपालनयोरित्यनुदात्ते तो धातोः कर्त्तर्य्यात्मनेपदाल्लुट्। वाचा वचनेन किं प्रयोजनमित्यर्थः। अत्र कारणमाह तदिदं उक्तमचिन्त्यमित्यर्थः। हृदयस्थितेन इदं साभिप्रायविशेषणं। तेन मारुतेन विज्ञाय तयैव। अनवरत निज हृदयाधिष्ठितेन मारुतेन स्वाधिष्ठानदुरवस्थाया स्वतो विज्ञायमानत्वात् स्वयमपि तत् प्रपञ्चने पिष्टपेषण न्यायेन प्रयोजनाभाव इति भावः। अथवा किं वाचा कथनेन किं प्रयोजनं इत्यर्थः वक्तुमशक्यत्वादिति भावः। तर्हि तत् कथं बोध्यव्यमित्यत आह तदिदं हृदयस्थितेन तेनैव विज्ञायते ईदृशं हृदयदौरवस्थ्यं हृदयवर्त्तित्वात्तेनैकेन मारुतेन विना न कोऽप्यन्येन बोधं शक्यमिति भावः। इह हृदयस्थितेन तेन इत्युक्त्या मनसाधृत कान्तत्वमुक्तम्। तदेकगाहीत्यनेन आत्मारामत्वञ्च विषयिग्रामं कन्दुकीकरोमि इत्युक्त्या प्रयोजनान्तरपरित्यागश्च। इत्यञ्च दृङ्मनःसङ्गसङ्कल्पजागराः क्षयता रतिः ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेत्युक्तासु दशसु अवस्थासु मनःसङ्गाख्यद्वितीया मदनावस्था प्रतिपादिता विद्यानाथादयस्तु द्वादशधा स्मरावस्थेत्याहुः रतिरहस्यापरनाम्नि शृङ्गार प्रबन्धप्रदीपे तु एकादशधा स्मरावस्थेति हरिहरः। तत्तन्मते तु तत्तद्वचनानुसारेण कल्पनीयं मनःसङ्गावस्था लक्षणन्तु। मनसाधृतकान्ताय विहृज्यान्य प्रयोजनम्। आत्मारामा भवेत् यत्र चित्तसङ्गरतिर्यथेति। न च मूर्च्छान्तत्वादुक्त्या तत्तन्नामक मदनावस्थावत्त्वं शङ्क्यं तत्र प्रयोजनान्तर वैमुख्य सद्भावेऽपि सम्प्रति प्रतिपादितयोः मनोधृतकान्तत्वात्मारामत्वयोः अभावात् किञ्च मूर्च्छा मोहयोः परस्पर किञ्चिद्भेदभिन्नयोः गुणयोः मनःसङ्गावस्थायामीष्टवस्तु गुणकीर्त्तनादि जन्यत्वेनोपपत्ति सद्भावात्। यथोक्तं रत्नाकरे। वियोगायोगयोरिष्टगुणानां कीर्त्तनात् स्मृतेः साक्षात्कारोऽथवा मूर्च्छा दशधा जायते यथेति। तथा मूर्च्छा मोह शब्दयोः तत्तन्नामकावस्था,वाचकत्वे मूर्च्छावस्था प्रतिपादनानन्तरं ततोऽपि प्रथमाया मोहावस्थाया अत्र प्रतिपादितत्वेन

सविषादम्। का एत्थ पड़िवत्ती। एदाए उण धीरः पत्थ सक्खु उब्बसो एसो मग्रणावेसो।

प्रकाशं। सहि ! णं एसो भावणा मात्रओ हिअग्रं मि चिट्ठइ।

मल्लिका। सह ज्जो हत्थि! हत्थि! किं भावणा मात्रओ एव्व अहं खु मूढ़ा तक्केमि सच्चो एसोत्ति। सनिश्वासं। अवि णाम दक्खिस्सं अग्रलङ्कहरिणङ्क सुन्दरं पुणोवि तस्स मुहविम्वम्।

नव। सहि ! मा खु एव्वं कात्ररा होहि णं पड़िच्छन्द दंसणादि हिंसुलहं मणो विणोदणं उक्कण्ठिअस्स जणस्स।

कालिन्दी। सच्चं मन्ते दि णोमालिआणं पियजणुक्कण्ठा तत्तिल्ल चित्ताणं तग्गुणवसणं तव्भुसणलाहो तप्पड़िच्छन्द दंसणं ति महन्तो आलम्बो।

मल्लिका। कहं णाम लिहज्जदु करअलेणावआव उणो एसो पहाण माणस सङ्गसंवादिसुन्दरस्स तस्स पडिच्छंदो। अहवा जहसत्ति लिहिस्सं आणेहि चित्तसालादो सवणिअं चित्तफलअम्।

नव। तह। इति उत्थातुमिच्छति।

प्रविश्य प्रतिहारी।

प्रतिहा। एसा दन्दकरण्डहत्था भअवईए मन्दाइणीए विअ सिस्सा सारसिआ।

---

पौर्वापर्य्य व्यतिक्रमदोषापत्तेश्च इत्यन्येऽपि विशेषाः सम्यगूह्याः विस्तरभयात् विरम्यते।

मल्लिका । कीस अविलम्बिअं ण पविसदि ।

निष्क्रान्ता प्रतिहारी ।

हला हला हि खणं चिट्ठ ।

ततः प्रविशति सारसिका ।

सार । सच्चं कहिअं भअवदीए मल्लिआ उत्तन्द वअणं चिन्तिअक्ख एदस्स दिव्वं वरस्स आअमणम् । अव्वो एक्क सहत्थगअन्ति सुणिअ वेवन्ति मे अङ्गाइ । सकरणम् । कहं ण दिट्ठो सीमन्तमणी जस्स फस्स मेत्तेण मुज्झन्ताणं मणालाहो होइत्ति उवदिट्ठं भअवदीए । पुरो विलोक्य सानन्दम् ।

एसा खु इह तइ आगच्छिआ अग्गदो वट्टइ मल्लिआ । निर्वर्ण्य । हुं माला पट्टे हाखरा अहि सित्तो सच्चं कहिअं भअवदीए । मल्लिआए आआरेहिं तुहिओ एव्व सर विआरोत्ति । संस्कृतमाश्रित्य ।

ललितमधुरैः सेयं सद्यस्फुटद्दलकेतकी
कपिशधवलैर्वक्त्रे वाङ्गैः स्मराभिभवं नवम् ।
भवतु सफलः सर्गक्लेशोविधातुरनुत्तमः
समुचितवरप्राप्त्या रमन्तु च बान्धवाः । (४)

---

(४) ललित मधुरैरिति । ललित मधुरैः म्लान मनोहरैरित्यर्थः । केतकीनां पुष्पाणि केतक्यः पुष्पमूलेषु वलहमिति लुप् । केतकी तु श्वेतकेतकी स्वर्णकेतकी चेति द्विविधा तयोरत्र स्वर्णकेतक्याः विवक्षा श्वेतकेतकीत्वे सर्वथाऽसम्भाव्यकपिशवर्णस्य तत्कुसुमस्य केवलधवलत्वात् प्रस्तुत साधारणधर्मभूतकपिश धवलत्ववैशिष्ट्याऽभावेन उपमानत्वविरोधापातः सद्य स्फुटन्ति तत्कालविकासीनि दलानि यासां तास्ता: केतक्यश्च ता इव

मल्लिका। स्वगतम्। हन्त दुल्लहजणाहिणिवेसिणी मह पच्चासा।

सार। पुत्ता भअवईए आसीसाहिम्।

इति लुप्तोपमा। कपिलशधवलैः श्यावशुक्लैः स्वतः कपिशत्वं स्मरपीड़या किञ्चित् पाण्डुत्वञ्चेति भावः। एवमुपमानपक्षेऽपि स्वतः कपिशत्वं सद्यः स्फुटनात्मकोपाधिवशात् किञ्चित् पाण्डुत्वञ्च अतएव तत्र सद्यः स्फुटद्दलविशेषणम्। तेषां चिरस्फुटित दलत्वे केवलकपिशत्वात्। अङ्गैः अवयवैः नवं स्मराभिभवं नूतन स्मरपीडां वक्त्रेव स्मराभि भवस्य चिरन्तनत्वे अङ्गानां केवल धावल्यसम्भवेन कपिशत्वाभावप्रसङ्ग इति भावः। तथा च भगवत्युक्तं सत्यमिति भावः। एवं स्मरविकारस्य सत्यत्वोपलम्भे सति तत्प्रयोजनमाशास्ते भवत्विति समुचितोऽनुगुणो यो वरो मारुतरूपो जामाता तस्य प्राप्त्या हेतुना विधातुः अनुत्तमोऽसदृशः अति महानिति यावत् सर्गक्लेशः मल्लिकासृष्टिविषयक प्रयासः सफलः सप्रयोजनो भवतु भूधातोराशीरर्थे लोट्। तथा च प्रयोजन प्राप्त्या श्लाघ्यो भवत्विति निष्कर्षः प्रयोजन प्राप्त्यभावे तु विधेरनायास सृष्टिभूतानां तृण पिपीलिकादिनिखिलवस्तुनामपि साफल्ये सति सौन्दर्यातिशय तर्क्यमाणाऽसदृश प्रयास प्रयोज्यस्य मल्लिका सर्गस्य वैफल्यापात इति महानियतकालोपार्ज्जित प्रतिष्ठासम्भाजकः परीवादनवावतारोऽस्या भविष्यदिति भावः। किंवा स फलोभोगयुक्तः सुखरूप इति यावत् फलमिष्यते सस्ये पलके जातीफले धने फाले। भोगे वीजे लाभे इति नानार्थरत्नमाला। एवञ्च वस्तुनि चिराभिलषिते इति पद्योक्त न्यायेन विधेः स्वकीय महाप्रयास प्रयोज्यमल्लिकासर्गानुगुणवरत्वेन चिराभिलषितस्य मारुतरूपस्य वस्तुनः कथमपि भाग्यवशेन प्राप्त्या प्राङ् मल्लिकासर्गार्थं सम्भावित महाप्रयासोऽपि सुखरूपतामेष्यत्विति भावः। च किञ्चेत्यर्थः। समुचितवरप्राप्त्येति काकाक्षिन्यायेन अत्राप्यन्वयः। बान्धवाः रमन्तु ईदृशकुलीनत्वा-

मल्लिका । सानन्दम् । का ।

सारसि । णं तुमं एव्व ।

मल्लिका । एहि सारसिए किं णाआसि अदि ।

सारसि । एक्कसरिअं । तव्वत्ति एक्कवट्टइ भअवई दिवसिदं अ एदं अम्वर गव्भिणं तदन्तकरण्डअम् ।

इति मल्लिकाया हस्ते ददाति ।

मल्लिका । सबहुमानमादत्ते ।

नव । सहि ! कहिदं एदस्स आअमणं धाराधरंमि आअदाए पवालिआए भट्टिणो अमच्चस्स रअणवइणा सिम्हलदीवाणीअं वाहुड़ीकिअन्ति ।

सारसि । सच्चं एदं एव्व ।

मल्लिका । अज्ज कहिं वट्टइ भअवई ।

सारसि । अन्ते उरंमि देवीए सविहे अमच्चस्स सुहादो किंवि सुणन्ती वट्टइ ।

नवमा । मसे तं एव्व कोलीणं भट्टिदारिअं संवरओ राअमुहेण पत्थेदित्ति ।

मल्लिका । । सजुगुप्सं स्वगतम् । उं कहं मं अस्सो जणो पत्थेदि ।

सारसि । ता अणुमस्सेदु मं पिअसही ।

मल्लिका । सहि ! ण पारेमि वारिदुं भअवईए सविहं गच्छसित्ति । निष्क्रान्ता सारसिका ।

---

विशिष्टानुगुणवरलाभेन हृष्यन्त्वित्यर्थः । बान्धवाः कुलमिच्छन्ति इति वचनादिति भावः ।

मल्लिका। सहि ! णाणेहिं दाणिं चित्तफलअम्।

नवमा। भअवईए पेसिदं अम्बरं दट्ठुण झत्ति आ-णइस्सम्। इति करण्डकमादाय विघटय्य दुकूलमुद्धरति। सस्मितम्। अम्हे हे उव्भिज्जन्तवालकदली गब्भपल्लवणिव्विसेस माउक्को एदस्स फंसो। सहर्षम्। भट्टिदारिआ कुअ-लालिआए मालिआए विअ परिमलो एदस्स। विस्तारयति।

कालिन्दी। विलोक्य। सकौतुकं। सहि ! वेरत्ते चित्ते वि दीसइ। निर्वर्ण्य। ण केवलं चित्तमेत्तं पिअसहि ! वेच्छ वेच्छ आअस दीहरेहिं णअणेहिं महाभाओ एव्व आलिहिओ।

मल्लिका। सविस्मयानन्दाभिलाषम्। आलोक्य।

अहि णोमालिए ! सो एव्व। संस्कृतमाश्रित्य।

तदङ्गं श्रवणान्तचुम्बिनयनं सा बन्धुरा कन्धरा

तावाजानुविलम्बिनौ मरकतस्तम्भाभिरामौ भुजौ।

तद्वक्षो विपुलम् समुन्नतं। सएष सहजो हारोऽप्यमुक्षिवक्षो

तावूरू करिराज हस्तरुचिरौ ते एव ताम्रे पदे॥

निर्वर्ण्य। हला एत्तिओ एव्व भेदो गअणिमेसाहिं अच्छीहिं एसो दिव्वपुरुसो सो माणुसोत्ति।

नवमा। चित्रं निर्वर्ण्य। सहि ! एसा भट्टिदारिआए हत्थ विण्णाणवे अत्थि मणहरइ रमणिज्जा णिम्माण लेहा।

मल्लिका। सोत्कण्ठा करुणम्। स्वगतम्। पञ्चभिस्सा

विअ एदस्सिम्। पुनर्निर्वर्ण्य। सहीओ पेच्छइ।

एदस्स काएवि महाभाआए उवरि सहूराहढ गाढु-

कण्ठा पिसुणो आआरो । संस्कृतमाश्रित्य ।

वर्णान्तरेण बिसकाण्डसहोदरेण
स्पष्टं शरीरमकठोरकरीरमुग्धम् ।
प्रम्लायतीव किमपि श्वसिता निलेन
बिम्बाधरोऽपि कुरुविन्ददलाभिरामः ।

सनिर्वेदम् । हन्त मूलंमि लूणो सहोवआण सलिलसित्तो पच्चासालदांकुरो । धस्सा खु सा पुस आइणी जाए सो महाभाओ बालचन्दलापण्डरे हिं अङ्गेहिं अक्खरं कहेइ । णिक्कलुणा अस्सा जाइमससि ं हेरिसावत्थे उदासीणा होइ । मदनपीड़ां नाटयन्ती सखेदं निश्वस्य । मुद्ध हिअअ ! कीस अणसंकंत माणसे जणे पुणो पुणो णिवधसि माणह हणं मस्स अज्जवि निप्फलमणोरह विसम्बद्ध तुह कहिं णु गआ तारिसी लज्जा । अहवा मम्महो एव्व एवालं भणिज्जो । जेण तुमं एव्वं तिक्खतिक्खेहिं वाणेहिं तस्सिं जणे दिढ़ं कीलिअं सि । आकाशे । भअवं अवलाजण दंसिअ भुअसुंडीर सार मम्मह भीरुओसि तुमं णअर घलादिग्धभुअदण्डमण्डणादो महाभाआदो जेण पलाअणल भीषणा मह हिअअं विप्पअन्ता वि तहिं चित्त अट्ठिए तुह रवलच्छो कुम्भीलेण तस्सिं जणेण ण णिवसवसतो तुज्झ मग्गणा अवणि पड़दिअ जेण काएवि अट्ठे मुद्ध महुर पण्डर गण्डमूलो लक्खिज्जइ एसो । इति बाष्पं निवर्णयति ।

कालिन्दी । सकरुणम् । जनान्तिकम् । अहो एदाए वेआदि सओ । संस्कृतमाश्रित्य ।

(५) चित्रदयितेऽपि तैस्तैराकारैरन्य सङ्ग शङ्किन्याः
अस्या रोष विषाद व्रीड़ोत्कण्ठा परिप्लुते नयने। ८।

प्रकाशम्। सहि। जइ अवसिदं विवक्खिअं वअणं ता अहंवि किंवि भणिस्सम्।

मल्लिका। स्वगतम्। मखे एसा सिणेहमेत्तदंसिणी आसासणे पवट्टइ। प्रकाशम्। कालिन्दि! किंविअ।

कालिन्दी। अहं खु तक्केमि केणविहत्थविणाणणेवुणं पआसइदुकामेण णिअबुद्धि मेत्तकप्पिओ कोवि लिहिओ गुणक्खरणायेण उण महाभाआ किदोए संवादो जाओत्ति।

मल्लिका। ण खट्ठु दिट्ठं तुए काएवि महाभाअ दंसण परवस हिअआए णिओक्कण्ठाविणोदण साहणं समाणुराअस्स तस्स पड़िरुव्वं थणंसुए लिहिअन्ति भणिदव्वं णं एत्थ लोअणा अज्जवि दोसन्दि णअण पड़िआवाह मोसालिया अञ्जणविन्दुणो।

कालिन्दी। सहि! णअभिट्टइ एदं कहिंण दिव्वं

(५) चित्रदयितेऽपीति। चित्रदयितेऽपि आलेख्यात्मक नायकेऽपीत्यर्थः। ननु यथार्थनायके इत्यर्थः। शङ्काया अत्यन्ताऽविषये इति भावः तैस्तैः पाण्डुरगण्डमूलत्वादि लक्षणोपलक्षितैः आकारैः अन्यसङ्गशङ्किन्याः स्वेतरनायिका सम्पर्कमाशङ्कमानायाः इत्यर्थः। अन्यस्याः सङ्ग इत्यत्र सर्वनाम्नोवृत्ति मात्रे इति अन्यशब्दस्य पुंवद्भावः। अस्याः नयने रोषविषादव्रीडोत्कण्ठापरिप्लुते अन्यसङ्ग शङ्कयारोषः किमत्र कर्त्तव्यमिति विषादः। ईदृगाशयस्फुटीभावे सख्यः पश्यन्तिमिमामिति व्रीडा। प्राणदयित इत्युत्कण्ठा। एताभिः परिप्लुते सम्भृते स्तः इति शेषः।

दरे दंसणं होज्ज महाभाअसस कावि अविअ पञ्च विरुद्धं अ एदं णं क्खु इत्थिअ मणुए दिट्ठो ण उण ताला एव्वं विह पलिलो । सवितर्कम् । दाणि होदूअ ।

मल्लिका । स्वगतम् । जुत्तिजुत्तम् । इमाइ एदाए वअणाइ हिअअं ईसिसुसा सहो णिहि । प्रकाशम् ।

कालिन्दि ! अत्थु आकिदि संवादो कहं दीवन्तरट्ठि एण चित्तसिप्पिणा एसो हार मज्झम्मि महिं दमणीविलसिओ ।

कालिन्दी । विहस्य । ण जुज्जइ अडढ जरई णाओ अडढसन्दइ अडढसे त्ति वेच्छ । संस्कृतमाश्रित्य ।

सत्कवीन्द्र मतिवत् यदृच्छया चित्रशिल्पिकरवर्णतूलिका ।
तत्तदुल्लिखितु मप्यलक्षितं वस्तुतत्वमखिलं प्रगल्भते ॥ ६ ॥

मल्लिका । सवितर्कम् । इत्थि सन्देह डोलाएहिं दोल-

---

(६) कथं द्वीपान्तरस्थितेन चित्र शिल्पिना एष हारमध्य महेन्द्रमणिविलिखित इति मल्लिकायाः शङ्कां दृष्टान्तमुखेन समुच्छिनत्ति ।

सत्कवीन्द्रेति । चित्रशिल्पिनः करे विद्यमाना वर्णा तूलिका लेखनी चित्रशिल्पकर वर्णा तूलिका कर्त्री सत्कवीन्द्रमतिवत् महाकविप्रज्ञेव अलक्षितं अदृष्टमपि तत्तत् स्वविवक्षितं अखिलं वस्तु कथं ता सत्यभूतं स्वस्वगुणाव्यवच्छितमिति यावत् इति विधेय विशेषणं अथवा वस्तुतत्वमित्येकपदं वस्तुस्वरूपमित्यर्थः । तत्वं स्वरूपे परमात्मनि इति मेदिनी यदृच्छया प्रयत्नेन विना उल्लिखितं कचित् फलकादौ विरचितुं उल्लेखविषयीकर्त्तुम् प्रगल्भते प्रभवति सत्कवीन्द्रमतेरिव चित्रशिल्पिकर वर्णतूलिकाया अपि अदृष्टचर वस्तुतत्त्वोल्लेखने अनायास निपुणत्वेन तत्र तदीयशङ्काया अनवकाश इति भावः । पूर्णोपमालङ्कार ।

व्व हिअअं । सान्त्वयं मुं । जं होदि तं होदु तह सणो
मुअलो अणाए मए दिट्ठिआ लद्धो तस्स पडिच्छन्दो ।

नवमा । सव्वहा मादि संसओ होदु एसो खु मुसादि
अणन्ति उवालद्धो सन्न वअणं कादु चित्त मिसंसेण
त्ताणं पआसेदि दूमइम तुज्झ असहा संभावणेण । ता
णाल धवलोहारो विअ अवहदि तुह हिअअ सङ्कसो-
अम् । इति उत्तरीयपटे संश्लेषयति ।

मल्लिका । कौतुकस्य आरम्भरूपं वितर्कम् । स्वगतम् । किंतु
एदम् । संस्कृतमाश्रित्य ।

अस्मिन् पेयुषि कुचस्थल मुत्तरीये
निर्बीजमङ्कुरति काचिदनुस्मृतिर्मे ।
क्रिचास्य चित्तदयितस्य समेत्य सङ्ग
अङ्गं तदङ्ग परिरब्धमिव प्रहृष्टं ॥

नवमा । सहि ! बप्फ मंथरणिप्फन्दलोअणा किं
ायसि ।

मल्लिका । हला एदस्स दंसणे बाट्ठलद्धं विअ संजा-
प्पचभिसं विअ सअं एव्व किं वि किं वि उल्लुहइ हिअअं

नवमा । कालिन्दि ! अच्चेरं एदं जं दीवंदरट्ठिअस्स
व्वंवरस्स आअमणं जं वि तस्स दंसणेण पच्चभिसा ।

कालिन्दी । किं एत्थ अच्चेरं जं जस्स पत्थुदं
स दूरट्ठिअं वि पसं आअच्छइ । वेच्छ । संस्कृतमाश्रित्य ।
पि देशविप्रकृष्टान्यदृष्टपाशे हृतं विकृष्टानि

जननान्तरेऽपि झटिति स्वामिन मनुयान्ति हि स्वामि।

पञ्चमिसा उण अव्भुदेव्व अहवा मल्लिआमूले जण
सहजा मालेत्ति अव्भुदो एव्व एदाए वुत्तन्तो । प्रवि
प्रतिहारी । भट्टिदारिए ! एसो कोवि कङ्केलिआदं सि
मग्गो भमरओ णाम कण्णसुत्तलिहिअम खाइरं णारतं
धवलंवरवेढ़िअं पि वीसु पसरन्तमोह पुं म झ वाण
दिट्ट सण्णिवेसं करअले किंवि रअणं धारयन्तो दुवा
रं भिवट्टइ । कङ्केलिया भणइ सोहिर अज्ज पहाटे
भअवदीए असमे समावत्ति दिट्ठेण देण महाराए
भट्टिदारिअं दट्ठुं खन्धावारादो मया आअदन्ति ।

मल्लिका । सस्पृहमवलोकयति ।

नवमा । जुज्जइ एसोकिल कङ्केलिआए विच्छ ओ
महाभाअस्स अव्भन्तरो अणुअरो ।

मल्लिका । कण्णअलए ! पवेसणिज्जो ।

प्रति । तथेति निष्क्रम्य यथोद्दिष्टेन भ्रमरकेण सह प्रविशति ।

भ्रमरकः । अहज्ज महण्णाअरिअस्स एदस्स अम
वरस्स पवेसे कंकेलिआ दुवारं णासि । परिक्रम्य
उदारसीलो खु णाहो माहओ जेण महाराआणुपेसिओ दि
व्वन्तराअदो वालक पाडलो एसोवि मणी दिसो । अहव
तारिस मालिआदंसणस्स उइअं एव्व का उण
मणिहारेसु । निरूप्य । कीस सत्यवाह हृदयेण उवा
णोकिणो अणक्खमूलं तत्तवित्तफलअं कोसआ मह
राएण वा वेसिअम् । जम्मिं आणीअ भेचरि

ल गोत्ताए सिढ्ढोल दीवा अट्टाए वित्तकथाए हंसपीय डोविश्र णाअज्जिअदिट्ठी चिट्ठइ णाह मारुओ। दूरे कुल गोत्ताइं अणाआसत्ताएत्ति भणिदव्वम्। विचि- म्। एइहमेत्तमि विअयंमि काणुखु हसिअलच्छी सुन्दे र भमा तारिसी सखा होज्ज कअथा।

प्रकाश्य। एसा भट्टिदारिआ।

भ्रमरकः। सानन्दम्। स्वगतम्। हुं अआ एसा कअआ मअ दामरमणिज्जङ्गी महाभाआ जा चित्त गआ णाहेव हएण णिप्फन्द मन्थर सिणिद्धे हिं लोअणेहिं पुलो- जइ। अहो एव्व जुज्जइ ताए कुमट्ठललिहिआ मालि- वि। सायंसम्। ताला खु वंमहो बंमहो जाला तस्सि अ एत्थवि जणो मुच्चइ अड्ढेवाखे। नाति समीपस्थ एव णमामि।

मल्लिका। स्वगतम्। तस्स परिअणन्ति महन्तोखु एद- ं वहुमाणो। पुत्तवन्ताखु एदे जे अलसी दलसामलं हाभाअं सफलणिं माणेहिं दिट्ठीहिं णीसंकं सइच्चिअ च्छन्ति। जनान्तिकम्। कालिन्दि ! उट्टअं ववहर।

कालिन्दी। भ्रमरअ ! ईंसि समीवे होहि।

भ्रमरकः। स्वगतम्। कहं णाम हेअं वि अवगअं ए- हिम्। समीपमुपसर्पति।

प्रति। पहुसही विअ पड़िहारंमि ता गच्छामि। ति निष्क्रान्ता।

सख्यौ। जनान्तिकम्। उट्टअ वेदूणी खु कणअलआ।

भ्रमरकः । मल्लिकां निर्वर्ण्य । स्वगतम् । एदाए वि स
कंडु पंडुर गण्डमूल वक्खाद मअणावेअणतणुवल्ली ।
पुनर्निर्वर्ण्य । एसा जह वीविअ रअणसाणुसिङ्गं एदाए
कुसुमवल्लं मण्डेइ णाहस्स हारयट्ठी । हन्त ण केवलं
हारयट्ठी णाहोवि माहवो उत्तरिज्ज वल्लवो वलब्वो इह
चिअ कीलइ ।

कालिन्दी । भमरअ ! कीउण वावारो महाभाअस्स
अवअच्छामि काणिवा आदे सवअणाइ तुह वअणं णावि-
आइ ।

भ्रमरकः । सुणीअदु अत्थि रअणवइणामहेएण
संजत्ति अवरेण । (सांयात्रिक वरेण) अह्माणं महारा-
अस्स दिस्सं अवहं रअणम् । एकम्बिला आजणाचिउर-
बन्ध सण्णिवेस जोग्गो अमुणि अग्घो सीमन्तमणी ।
अण्णं चित्तगअं सअल लोअ लोअणसंवणणं लावस्समअं
किंवि कस्सआ रअणम् ।

मल्लिका । स्वगतम् । अह्महे ण संच्छादिओ पमादेण
थणंसुअगओ महाभाअ पड़िच्छन्दो । व्याजेन संच्छादयन्ति ।

सख्यौ । जनान्तिकम् । किं एसो एव्व रअणवई ।

कालिन्दी । तदो तदो ।

भ्रमरकः । तदो भणिअं तेण सोअमणिच्च चित्तफलअं
अण्णंवि किंवि दन्तकरण्डअ गव्भगअं दिव्वं वरं सिंघल-
दीववेरन्ते । (सिंहलद्वीपप्रान्ते) लंकादो उत्तरपुव्वमि दिसा
भाए मणुअ सञ्चार सुण्णे जुसरवमजझंमि अव्भं कस

सिहरमस्स कस्सवि वड्डक्खस्स हेट्ठट्ठले वाहाण
वट्ठ पडिट्ठ विअं मग्गवइट्ठेहिं अह्मेहिं दिट्ठन्ति।
सर्व्वा विस्मयं नाटयन्ति।

कालिन्दी। जनान्तिकम्। मण्णे तं एव्व एदं दिव्वं वरम्।

प्रकाशम्। तदो तदो।

भ्रमरकः। तदो अदसिअदिव्वं वरो एव्व गहिगहिअ पारितोसिओ जहेच्छं गओसो रअणवई।

सर्व्वाः। स्वगतम्। गओ संसओ।

कालिन्दी। तदोतदो।

भ्रमरकः। अह वच्चलेण भट्टिणा मह हत्ले पेसिअं तं रअण जलिअं दट्ठुण णाहमारुओ सहत्थेण गणिअ तं चित्तकसअं विह्मआणंदस्सिवभरेहिं णअणेहिं विसट्ट पुंडरीअदल माला जालेहिंविअ अच्चअंदो संजाय पच्चभिणो चिरंठिओ।

मल्लिका। सनिर्वेदं निश्वस्य। स्वगतं। हन्त मह जीविआलं वण मणोरह अज्ज दज्जो तुम्ह जलंजली। जनान्तिकम्। कालिन्दि! विसंवदिआ तुह उववत्तीओ।

कालिन्दी। जनान्तिकं। सहि! वअण सेसं असुणिअ कीसि तम्मसि। प्रकाशं। तदो तदो।

भ्रमरकः। तदोअ तं कसअं सच्चं मणन्तो सीमन्तवदे तंमणिं करअलेण पुणो पुणो विहितवन्दो।

मल्लिका। जनान्तिकं। सुदं वअण सेसंवि।

नवमा। स्वगतं। भअवं महाजुत्तं खिदं मुड्डहिअअं

कुलकसया जणं तस्सिं महाभाए दिढ लग्गहिग्रं काए-विग्र तं उण ग्रखिं संकामेसि ।

कालिन्दी । स्वगतं । किं णु खु एदं । ग्रहवा ग्रसं पुस्स एव्व वग्रणं । प्रकाशं । ग्रहो महंतो खु ग्रणुराग्रो तस्सिं जणे महाभाग्रस्स । ग्रह काए विग्र तोए ग्राकिदो ।

मल्लिका । साशंसं शृणोति । एदं हंसमग्रं सुणोमि काएवि तीए सरिसी णत्थित्ति ।

मल्लिका । सनिश्वासं । स्वगतं । ग्रदो खु महाभाग्रस्स लोग्रणाणं ग्रणुरुहा (ग्रनर्हा) । णाम्रह्मि ।

कालिन्दी । कीस एदहंसमग्रंति सासंकं विग्र वग्रणं ।

भ्रमरकः । एत्ताणे उण । इत्यर्द्धोक्ते । उइग्राणु इवं ण जाणीग्रदि जह दिट्ठं भणामि ।

मल्लिका । निर्दिश्य । एमेग्र वट्टइ ।

मल्लिका । सोच्छ्वासं । दिट्ठिग्रा वरिच्छवग्रं पि ग्रारोविग्रह्मि ।

उभे । जनान्तिकं । सहि ! दिट्ठिग्रा वड्ढामो तुमं एव्व तहिं ग्रालिहिदा ।

मल्लिका । कहं सारिस्स मेत्तेण ग्रहन्ति भणीग्रदि ।

कालिन्दी । तुमं दट्ठुणा ग्रणाए वडिढव्वं महाभाग्रो ण वेच्छ इत्ति ।

मल्लिका । ग्रहो सिणेहो ।

कालिन्दी । प्रकाशं । भमरग्र ! किं एत्थ ग्रणुइग्रं णहि ग्रग्गि सइ उच्चारिए जीहाढ़ज्जइ णं ग्राकिदिं सारिसं होइ ।

भ्रमरकः। ण ण वर सारिससमेत्ति सच्चं तत्तहोदीए एव्व अज्ज णाहस्स दिखाए मालिआए हं लिहिआ। सर्वा अपि स्मयं नाटयन्ति।

कालिन्दी। जनान्तिकं। सहि! किं अज्जवि सारिस्स मेत्तिं।

मल्लिका। सानन्दं। सहि! कहं दीवन्दरे महपड़िच्छदो।

कालिन्दी। जह महाभाअस्स। प्रकाशं। अच्चेरं एदं तदो तदो।

भ्रमरकः। तदोअ पियमित्तेण णाह कलअण्ठेण ण एसा सच्चेत्ति णिवारिए णिवुत्तो सीमन्त मणि णिवेस पआसादो महाभाआए एव्व जोग्गोत्ति अहं एदस्स दाणे आणत्तोम्हि। इति मणिमम्बराद्धृत्य कालिन्दी हस्ते समर्पयति।

कालिन्दी। भमरअ! परवई खु अम्हाणं पिअसही महाभाएण ता जह णिद्दिट्ठ करम्ह। इति मणिमादाय मल्लिकायाः प्रदर्शयन्ती। जनान्तिकं। संस्कृतमाश्रित्य।

तदिदं हाटक सूत्र स्यूतं सखि! पाटलं रत्नं।
प्रेषित मनुराग धरं मन इव स्मरेषुणा विद्धं॥ (७)॥

मल्लिका। सोत्कण्ठमालोकयति।

नेपथ्ये।

---

(७) तदिदमिति। हे सखि मल्लिके! स्मरेषुणा विद्धं अतएव अनुरागधरं त्वद्विषयकरागयुक्तं रक्तवर्णयुतञ्च सूत्रं शरीरविशिष्टं मनःचित्त मिवस्थितमित्युत्प्रेक्षा। हाटकसूत्र स्यूतं पाटलं तदिदं रत्नं प्रेषित मित्यन्वयः।

एषा सम्प्रति चक्रवाकरमणी दृष्ट्वा मिलद्बाष्पया
पश्यन्ती चरमक्षमाधरतटी सीमन्तरत्नं रविं॥
संप्राप्तेव भवान्तरं शिव शिव व्यामुह्यता चेतसा
पार्श्वस्थञ्च न वेत्ति वल्लभमहो शापस्य दुर्लङ्घता॥ (८)

सर्वे आकर्णयति।

मल्लिका। स्वगतं। हन्त अहं विश्र तवस्सिणी चक्कवाईवि।

पुनर्नेपथ्ये।

त्यज चक्रवाकि! शोकं बधान धैर्य्यं सहस्व समयमसुं।
अयमेव वासरमणि र्हरिष्यते शापमूर्च्छान्ते। (९)

---

(८) एषेति। सम्प्रति एषा चक्रवाकरमणी चक्रवाकी स्त्रीलिङ्गात् मल्लिकेति च ध्वनिः। मिलद्बाष्पया दृष्ट्या चरमक्ष्माधरतट्याः सीमन्तरत्नं शिरोमणीभूतं शिरोमणिञ्च रविं पश्यन्ती सती अन्यत् जन्म संप्राप्तेवेत्युत्प्रेक्षा। शिव शिव इति खेदे व्यामुह्यता मोहं प्राप्नुवता विषयज्ञानपाटवशून्येनेति यावत्। चेतसा पार्श्वस्थञ्च समीपवर्त्तिनमपि वल्लभं चक्रवाकं प्राणदयितं मारुतञ्च न वेत्ति न जानाति शापस्य दुर्लङ्घता अहो अद्भुतमित्यर्थः। अत्र प्रस्तुतसन्ध्याकालिकचक्रवाकीवृत्तान्तवर्णनेन प्रस्तुत एव सीमन्तमणि दर्शनादि मल्लिकावृत्तान्तोद्योतित इति प्रस्तुताङ्कुरालङ्कारः। प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुर इति लक्षणात्।

(९) त्यजेति। हे चक्रवाकि! स्त्रीलिङ्गात् मल्लिकासम्बुद्धेश्च ध्वनिः शोकं त्यज धैर्य्यं बधान असुं समयं सायङ्कालं वर्त्तमानकालञ्च सहस्व। तत्र हेतुमाह। अयं विलोक्यमान एव वासरमणिः सूर्य्यः शिखामणिश्च ते शापमूर्च्छां दयितैकचित्तताक्षपापयशात् जायमानं मोहविशेषमित्यर्थः। शपथाक्रोशयोः शाप इति नानार्थरत्नमाला।

नव। भट्टिदारिए खु वन्दिणो भट्टिणो अमच्चस्स साअं सच्छंदं घोसयन्ति॥

अमरक:। अणुमणंतु मं महाभाआओ। जाव णाहस्स इमं वुत्तन्दं णिवेदेमि॥

कालिन्दी। एदिणा संजमण मग्गेण णिग्गमिअ जह णेउर उर सद्देण जाणीअदि देवी पिअसहिं दट्ठुं आअच्छइ। इति निष्क्रामति।

नवमा। अह्मे वि पच्चुग्गच्छह्म देविं।

मल्लिका। स्वगतं। अज्जवि अणासंघं हिअअं।

सविस्मयं। कहं णु दिव्वंदरे मह वड्ढिच्छन्दोत्ति सानन्दं। सुट्ठु भणिअं कालिन्दीए जह महाभाअस्सत्ति।

अम। सहर्षं। स्वगतं अणुट्ठिओ णाहस्स आदिसो दिट्ठोअ [विआरेहिं पडिरुव्व धारणे णअ] णाहे एदाए अणुराओ। वआसिओअ। (प्रकाशितश्च) णाहस्स भावो।

मल्लिका। सहि ओ गच्छम्ह इति निष्क्रान्ता सर्वे।

इति मल्लिका मारुते द्वितीयोऽङ्कः॥

---

ह्वरिष्यते अपनुदिष्यति। ह्रूङ्हरणे इति धातोरात्मनेपदात् भविष्यदर्थे लृट्। प्रस्तुताङ्कुरोऽलङ्कार। इति श्रीमन्मल्लिकामारुतव्याख्याने द्वितीयोऽङ्कः।

# अथ तृतीयोऽङ्कः ।

---

ततः प्रविशति मन्दाकिनी ।

मन्दाकिनी । अहो ऐदं पर्य्यमसदानुकूल्ये विधातुः ॥

तथाहि ।

अव्याजरम्यः सहजोऽनुरागो
यन्मल्लिका मारुतयो र्विगाढ़ः ।
यच्चानयोः सङ्गममाशु शंसन्
सौमस्य सीमन्त मणेश्च लाभः ॥

साम्रं ॥ दिव्याम्बरोत्तरीयं शिखा मणिन्यासरुचिर सीमन्तं ।
पश्यन्तीवपुरस्या प्राच्यं जन्म स्मरामि वत्सायाः ॥

सहर्षं वितर्क्यं । एतयोः खलु ।

जन्मन्येव प्राक्तने लब्धं दार्ढ्यः
प्राप्तो दीप्तिं दर्शनादद्य भूयः ।
मन्ये यावद्दुर्विभाव्य प्रतिष्ठो
माञ्जिष्ठोऽयं वत्सयो रागबन्धः ॥ (१) ॥

---

(१) जन्मनीति । प्राक्तने विद्याधरामात्यचक्रवर्त्ति विश्वावसु तनयात्व रूपे जन्मन्येव लब्धदार्ढ्यः प्राप्तस्थैर्य्यः । अद्य साम्प्रतिके चन्द्रवर्मामात्य विश्वावसुनन्दनात्वरूपे जन्मनीत्यर्थः । भूयो दर्शनात् पुनरवलोकनात् दीप्तिं प्रकाशं प्राप्तः दुर्विभाव्या दुर्ज्ञेया इयतीति चिन्तनाऽनर्हा प्रतिष्ठास्थितिः गौरवं वा यस्य स तथोक्तः । अतिगम्भीर इत्यर्थः प्रतिष्ठा तु समाप्तौ गौरवेऽपि चेति नानार्थरत्नमाला । वत्सयोः मल्लिकामारुतयोः रागबन्धः माञ्जिष्ठः माञ्जिष्ठरागः इति मन्ये यावत् निश्चयेन जाने इत्यर्थः यावत् पुरा निपातयोर्लट् इति निश्चयार्थको यावदिति निपातः अत एव लट् च ।

तदुक्तं अनुरागतत्त्वविद्भिः।

यूनोःस्थिरप्रकाशः स्थिराप्रकाशोऽस्थिरप्रकाशश्च।
उत्तम मध्यम नीचा रागा माञ्जिष्ठ नील कौसुम्भाः॥(२)

अदयं। वर्णितश्च कालिन्द्या मल्लिकाया मदनातङ्कः।

लीना वल्ली भवन कुहरे पत्ररन्ध्राच्चकोरी
चञ्चुस्रस्तं शशिकरकणं वीक्ष्य मूर्च्छामुपैति।
लीलारामात् पिक मुखरिताल्का कथा सा बिभेति
स्वालापेभ्यश्चकितनयना यत्कुहू कोमलेभ्यः॥ ३॥

---

(२)प्रकृतनायकयो रागबन्धो माञ्जिष्ठ इत्युक्तं तथात्वे सदोषः किं उत गुण इत्यतस्तस्य सहेतुकमुत्तमत्व प्रतिपादक महत् सम्वादमाह। तदुक्तमिति॥ प्रामाण्य सिद्धये अनुराग तत्त्वविद्भिरिति स्थिरश्च प्रकाशश्च स्थिरप्रकाशः स्थिरश्च अप्रकाशश्च स्थिराप्रकाशः। अस्थिरश्च प्रकाशश्च अस्थिर प्रकाशः स च यथाक्रममित्यर्थे माञ्जिष्ठ नीलकौसुम्भाः रागाः अनुरागाः अन्यत्र वर्णाश्च यूनोः क्रमात् उत्तममध्यमनीचाः इत्यन्वयः। तथाच क्रमात् स्थिरप्रकाशत्व स्थिराऽप्रकाशत्वाऽस्थिरप्रकाशत्वरूपगुणवैशिष्ट्येन क्रमादुत्तममध्यमनीचानां पटादिरञ्जकमाञ्जिष्ठनीलकौसुम्भरागाणामिव यूनोः परस्परनिष्ठानुरागाणाञ्च स्थिरप्रकाशत्वादिगुणवैशिष्ट्यक्रमेण उत्तमत्वादि कल्पना क्रमशालित्वा देतेषां तत्क्रमेण माञ्जिष्ठादि पदेन व्यवहारः। अतोऽत्र प्रस्तुतस्य स्थिरप्रकाशत्व गुणवैशिष्ट्येन माञ्जिष्ठाख्यस्य रागस्य उत्तमत्वमिति भावः॥

(३) इह मल्लिकया अनुभूयमानस्य मदनातङ्कस्य कालिन्दी व्यावर्णित प्रकारं निरूप्य तत्र अनङ्गुलत्वाऽऽपादकयुक्तिभूतं तदातङ्कप्रकारविशेषं स्वयमाह। लीनेति॥ वल्लीभवनकुहरे लीना सती पत्राणां लता स्तहोपरितनपर्णानां रन्ध्रात् क्वाचित्कच्छिद्रात् चकोरीचञ्चोः सकाशात् स्रस्तं गलितं शशिकरकणं चन्द्रकिरणलेशं ज्योत्स्ना

इति। विनय गाम्भीर्य्य निधिः मारुतोऽपि निरवधि प्रेमारूढ़ एव। तथाहि।

इच्छति दर्शनमनिशं पृच्छति कार्याणि कथयति रहस्यम।
चिरपरिचयैकलभ्यं विस्रम्भं प्राप्य कतिपयैर्दिवसैः॥ ६॥

सुविहितश्च परस्पर प्रतिच्छन्द दर्शनमात्र विनोदितोत्कण्ठयो र्वत्सयो र्भूयो दर्शनाय कालिन्दी सारसिका मुखेन वसन्तोद्याने निपुण उपायः। वचितर्कं। इदानीं शम्बरवासुशाम्बरी प्रतिविधेया। आकाशे।

साधु सर्वमङ्गलाचरणशेखर विश्वावसो! साधु अजहतैव माधुर्य्यं प्रत्याख्यातो राजनिर्बन्धः।

---

स्वग्डमिति यावत्वीक्ष्य मूर्च्छां ज्ञानाभाव लक्षणं गुणविशेषं उपैति उद्दीपनदर्शनादिति भावः॥ तथा पिकस्वरितात् लीलारामात् विभेति इति का कथा उपन्यस्तप्रकारद्वैविध्येन किंवचनं अनाश्चर्य्यं करत्वादिति भावः॥ तत्र कारणमाह। यत् यस्मात् कारणात् सा मूर्च्छाप्राप्ति भीति प्राप्त्योः कर्तृत्वेनोपन्यस्ता मल्लिका कुहूकोमलेभ्य कोकिलालाप मञ्जुलेभ्यः कुहूस्त्री कोकिलालापे इति मेदिनी इदं साभिप्राय विशेषणं स्वालापेभ्यः आत्मकर्तृकाभाषणेभ्यः चकितनयना कोकिलालाप भ्रमेण त्रस्तलोचना भवतीति शेषः। कोकिलालाप भ्रमेण स्वकर्तृकालापयेव त्रस्यन्त्यामस्यां उपन्यस्त पूर्वं उद्दीपन भूतचन्द्रकिरण कोकिलालाप साक्षात्कारहेतुके मूर्च्छाप्राप्ति भीति प्राप्तीनाङ्गुते इति भावः॥ अत्र नायिकायाः अत्यद्भुते स्वालापविषयककोकिलालापभ्रमहेतुकसाध्वससम्भवे वर्णिते अनङ्गुतस्योद्दीपनभूतचन्द्रकिरणकोकिलालापसाक्षात्कार हेतुकमूर्च्छाप्राप्ति भीतिप्राप्ति सम्भवस्य कैमुत्येन लब्धत्वात् प्राकरणिकेण प्राकरणिकाक्षेप रूपोऽर्थापत्तिरलङ्कारः। कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्कृतेति

यदस्या मल्लिकाया वरनिर्णये नाहं प्रमाणं । अपितु भगवती कात्यायन्येव इति । सानुशयं । हन्त भ्रमरकनयस्य कौटिल्य माशङ्कय अनाश्वासं हृदयं ।

प्रविश्य ससम्भ्रमा सारसिका ।

सारसिका । भअवई अणुट्ठिओ आदेसो वसन्तवणुज्जाणे अदिमुत्तलआमण्डवंमि पडिट्ठाविओ मए भमरअमेत्तसहाओ मारओ । कालिन्दीएवि तहिं आणिज्जइ असुमाहरणच्छलेण णोमालिआ दुईआ मल्लिआ ।

मन्दा । सानन्दं ।

अस्तु भूयो दर्शनेन किमप्या श्वासनं वत्सयोः ।
इमौ प्रकृत्या सुकुमार गात्रौ कथञ्चिदातङ्क ममुं सहेते ।
परस्पराङ्ग व्यतिषङ्गहृद्यौ यन्माल्यहारौ प्रतिधारयेते ॥ (४)

विलोक्य । वत्से ! कुतो विभ्रान्तलोचना वेपमानाङ्गी ससम्भ्रमेव लक्ष्यसे ।

---

लक्षणात् तथाच सर्वस्वसूत्रं । दण्डापूपिकयाऽर्थान्तरा पतनमर्थापत्तिरिति ॥

(४)इमाविति । प्रकृत्या स्वभावतः नतु कृत्रिमत्वेन सुकुमारगात्रौ मृदुशरीरौ सन्तापानर्हाविति भावः इदं साभिप्राय विशेषणं इमौ मल्लिकामारुतौ कथञ्चिदति प्रयासेन असुमातङ्कं अरसन्तापं सहेते । तत्र युक्तिमाह यत् यस्मात् कारणात् परस्पराङ्गयोर्व्यतिषङ्गेण संसर्गेण हृद्यौ सुखकरौ माल्यहारौ कर्म्म व्यति धारयेते परस्परं धारयत इत्यर्थः । माल्यहार धारणं अन्योन्येन परस्परं कारयत इति यावत् । ष्ठञ्-धारणे

सार । भअवदि ! अज्ज आणत्तो किल पमत्तो महारा-एण विस्सावसू एद्दिं पुच्छिदव्वं तुए गोरीघरं गदुअ मल्लिआ कस्स दिण्णेत्ति । जइ कहइस्सदि भअवदी सम्बरअसस्सत्ति ताला अण्णट्ठेजो तुए गोरीए आदिसेत्ति ।

मन्दा । साशङ्कं । ततस्ततः ।

सार । अह तहेत्ति पमावत्ता (प्रमापन्न) राअसासणो परिवुदो राअपुरुसेहिं गारीए घरम्पविसन्तो अज्ज आअ-च्छन्तीए मए दिट्ठो अमच्चो । एदं उण भअवदीए णिवेदेमित्ति आअदम्हि ।

मन्दा । हन्त ! शङ्कितमेवोपस्थितं । प्रकाशं वत्से ! अहमपि गौरीदर्शनाय प्रस्थितास्मि । तदादेशय मार्गं ।

सार । इदो इदो । उभे परिक्रामतः ।

मन्दा । वत्से सारसिके ! मन्ये मल्लिकामारुतयो रति प्रकटमनुरागमुपलभ्य किमप्येतदारब्धं शम्बरेण ।

सारसिका । हुं महाराओवि तस्स अणुजलो संकी-अदि ।

मन्दा । मुग्धे ! त्रिभुवन दुर्लभ ग्रासमा नष्टि राज्यग्रा-

---

इति धातोर्हेतुमतिचेति स्वार्थे णिचि कर्त्तरि कर्मव्यतिहार-इत्यनेन परस्परकरणरूपकर्मव्यतिहारद्योतकं कर्त्रात्मनेपदं तल्लट् । नचेह परस्परमित्युपपदस्य अध्याहर्त्तव्यत्वनिश्चये सति परस्परोपपदाच्चेति वक्तव्यं इत्यनेन तङ्प्रतिषेधाभावः कथमिति वाच्यः । परस्परकरण रूपकर्म व्यतिहारद्योतकत्व विवक्षयैव चारितार्थ्येन अवश्य परस्परपदस्य अनध्याहर्त्तव्यत्वात् ।

सेनामुर्त्तिमती भगवती कात्यायनी । विहस्य । (५) निसर्ग-सुकुमारञ्च खलजनेषु घोरतमञ्च देव्याश्चरितं । पश्य ।

सैयं कुले प्रथममद्रिपतेरपर्णा
विश्वत्रयस्य जननी कृपयावतीर्णा ।
शृङ्गारकर्मविम विलासविलोभनीयै
रङ्गी चकार वपु रद्दैमनङ्गशत्रोः ॥

सारसिका । संजीविओ खु पुणोवि हीरदाल दहण भव्विणो कंदप्पो विब्भम कोमलेहिं देवीए अङ्गेहिं

मन्दा । सैषा पुनः ।

चण्डानां दानवानामधिरण मुरूणा मण्डलाग्रेण मुण्डं
खण्डं खण्डं दिशन्ती प्रमथ मृगदृशां कन्दुक क्रीडिताय ।
कण्ठं कण्ठीरवस्य प्रचल सितसटा मण्डलं मण्डयन्ती
घण्टा मक्षासिशाङ्ग त्रिशिखविशिखोद्दण्डचण्डञ्छिदण्डे (६)

---

(५) निसर्गं सुकुमारञ्च खलजनेषु घोरतमञ्च देव्याश्चरितमित्युक्तं प्राक् तत्र निसर्ग सुकुमारं देव्याश्चरितं व्याववर्णयति । पश्य सैयं कुले प्रथम-मद्रिपतेरपर्णा इत्यादिना ।

(६) खलजनेषु घोरतमं देव्याश्चरितं व्यावर्णयति सैव पुनश्चण्डा-नामिति । सैव पुनः निसर्ग सुकुमारचरिता देवेत्यत्र कण्ठीरवस्य स्ववाहनभूतमनस्तालाख्यसिंहस्य सिंहस्तस्य मनस्ताल इति पुरुषोत्तमः प्रचलसितसटामण्डलं कण्ठं मण्डयन्ती अलङ्कुर्वती स्वाधि रोहणेनेत्यर्थः । अधिरणं युद्धे उरूणा मण्डलाग्रेण महासिना कौक्षेयकं मण्डलाग्रमित्यमरः । मुण्डं शिरः मुण्डामुण्डीरिकायां स्यात् स्त्रियामस्त्रीव मूर्द्धनि इति मेदिनी । खण्डं खण्डं इति णमुलावययम् । खण्डयित्वा खण्डयित्वा इत्यर्थः । आभीक्ष्ण्ये णमुल् चेति णमुल् । नित्यवीप्सयोरिति द्वित्वम् । ण्मोजन्त इत्यव्ययत्वम् । प्रमथ मृगदृशां

सारसिका। गिराणं दुरे खु मज्झिम वरणपेक्खाए चंड़िआए विक्कमो।

मन्दा। अतो न प्रलभत्व सुरेन्द्राणामपि माया महामाया।

सार। सच्चं एदं। अपतो विलोक्य। एदं ससद्ध कालं वुद्द छिणिद्ध तमाल सण्ड पिण्डिअंधआरं गोरीघरं।

मन्दा। वत्से! अत्र स्थित्वैव श्रोष्यामो दूरस्थितानामेव सुलभोऽयं वञ्चना विशेषः। नेपथ्ये।

मातर्नमोऽस्तु तुभ्यं प्रसीद कल्याणि देवि! शर्व्वाणि!
ब्रूया वरं वरेण्यं वत्सायास्त्वत् प्रसादलभ्यायाः॥ (७)

मन्दा। आकर्ण्य। तदिदं धीरप्रशान्तगम्भीरस्वरस्य विश्वावसोरनुनाथनं। (८) पुनर्नेपथ्ये। वत्स विश्वावसो! ध्यायतां शम्बरको मल्लिकाया वर इति।

---

कन्दुक क्रीड़िताय दिशन्ती प्रयच्छन्ती सती चण्डानां दानवानां घण्टाश्च शङ्खाश्च असयश्च शार्ङ्गाः चापानि च शार्ङ्गः कार्मुकमात्रेऽपि विष्णोरपि शरासने इति मेदिनी॥ त्रिशिखानि त्रिशूलानि च विशिखाः वाणाश्च एभिः उद्दण्डं अत्युन्नतं यत् षण्डं समूहः तत्कर्म जिह्निण्डे अभिबभूव॥ हिडि गत्यनादरयोरिति धातोरात्मनेपदात् कर्त्तरि परोक्षे लिट्॥ षण्डपद्मादि सङ्घाते इत्यभिधानात्। अचेतनवस्तुसमूह वाचिनः षण्डपदस्य अत्र प्रयोगमहिम्ना सचेतनमपि दानवसमूहं अचेतनवस्तु सङ्घातमिव अनादृतवतीति भावो द्योत्यते॥

(७) मातर्नमोऽस्तु तुभ्यमिति पद्ये। वरेण्यं श्रेष्ठं इत्यर्थः॥

(८) तदिदं धीरप्रशान्तगम्भीर स्वरस्य विश्वावसोरनुनाथनं इत्यत्र अनुनाथनं अभ्यर्थनमित्यर्थः॥

मन्दा । पुनराकर्ण्य । कथमियं तमाल षण्ड गृहीता करभ घर्घरस्वरा आकाशवाणी । स्वरानुसारेण चक्षुः प्रेष्य । पश्य सारसिके ! तमालशृङ्गे लक्ष्यालक्ष्यः कोऽपि पुरुष इव ।

सार । विलोक्य । भअवदि ! सच्चं पुरुषो एव्व णील-पड़ाव कुण्ठिओ तमाल पल्लव पुंज णिव्विसेसो घेप्पइ (जल्पति)

मन्दा । अहो ! शम्बरकस्या विनयः । यत् निपुण प्रतारणोत्सुकहृदयो विश्वावसुं वञ्चयितुं चेष्टते ।

सार । अह्मे उण अंते उरं गदुअ सव्वं एदं पआ-सइस्सामो ।

मन्दा । वत्से ! मामैवं । कालिन्दीं विना न क्वापि प्रकाशनीयोऽयमर्थः ।

सार । अह को एत्थ पड़िआरो ।

मन्दा । ननु वञ्चनस्य वञ्चनमेव प्रतिक्रिया ॥

कुमन्त्रिणं कूटविधान चुञ्चुं (९)
कूटैः सुगूढ़ै रति सन्दधामि ।

---

(९) कुमन्त्रिणमिति ॥ कूटविधानचुञ्चुं माया निर्माण चतुरं तेन वित्त इत्यादिना चुञ्चु प्रत्ययः ॥ कूटोऽस्त्री निश्चले राशौ लोह-मुद्गर दम्भयोः मायाद्रि शृङ्गयोस्तुच्छे इति मेदिनी ॥ कुमन्त्रिणं कुत्-सितगुह्यवादशालिनं शम्बरकं कर्म मन्त्रोवेद विशेषे स्यात् देवादीनाञ्च साधने । गुह्यवादेऽपि च पुमानिति मेदिनी । सुगूढैः कूटैःमायाभिः अति सन्दधामि वञ्चयामि इत्यर्थः ॥ यत् यस्माद्धेतोः चरणाञ्चतानां कण्टकानां

यत्कण्टकानां चरणक्षतानां
निष्कासनं कण्टकतो लघीयः॥

सार। सच्चं जुज्जइ एदं।

मन्दा। सानुकम्पं। मारुतस्य प्रियसखः कलकण्ठो विष्णुरातपुत्रीं रमयन्तीं कामयते॥

सार। अत्थि दुवेगांवि अणुराओ कहिअं मह्युअरिआए रच्छागअं। (रथ्यागतं) कलअण्ठं दट्ठुणा मह्नन्तो मअण संज रोविअ सहीए रमयन्तो एत्ति।

मन्दा। सा खल्वद्य सोमरसरभि सिसिषणासु गतवती त्वं पुनरमुं आकाशवाणी वृत्तान्तं कालिन्द्याः कर्णे निवेद्य कलकण्ठमपि तत्तीरं संश्लेषय। अहमपि गौरीं दृष्ट्वा यावद्दिव्यावसुमस्मात् स्ममात् निवर्तयामि।

सार। तह। इत्युभे निष्क्रान्ते।

मिश्रविष्कम्भः।

ततः प्रविशति उद्यानस्थो मारुतो भ्रमरकश्च।

मारुतः। (१०) सत्यमिदं ताच्चिन्त्यात् ताद्रूप्यं नामेति तथाहि।

---

निष्कासनं वहिष्करणं कण्टकतः तृतीयार्थे तसिः कण्टकेन करणेनेत्यर्थः॥ लघीयः अतिलघु सुकरमिति यावत्॥

(१०)सत्यमिदमिति॥ ताच्चिन्त्यात् अपरिच्छिन्नैक विषयक ध्यानात् ताद्रूप्यं ध्येय वस्तु सारूप्यं इति अयं प्रकार इत्यर्थः। इति हेतौ प्रकाशने निदर्शने प्रकारे स्यात् इति मेदिनी। सत्यं नामेति स्मरणे। नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि चेति मेदिनी॥ तथाच ताच्चिन्त्यात्-

(११) तदा मुग्धं वक्त्रं किसलय सखः सोऽधरमणिः
विशाले ते नेत्रे स्तनभरनता सा तनुलता !
सलीलं तद्यातं जननयनसञ्जीवन सुधा
प्रिया सा सा सा सेत्यजनि हृदयं तन्मयमहो ॥

---

ताद्रूप्यमिति वाक्यप्रतिपाद्यार्थस्य संप्रति स्वानुभव गोचरी भावात् अद्वैति सिद्धान्तभूतस्य श्रुतपूर्वस्य तस्य वाक्यस्य अदृष्टपूर्व गोसदृश पदार्थभूतगवय दर्शनात् श्रुतपूर्वस्य गोसदृशपदस्येव सत्यता स्मरणमित्यवगन्तव्यम्" ॥ अद्वैतिराद्धान्तस्तु अथातो ब्रह्मजिज्ञासा तमेवं विदित्वाति मृत्यु मेति। मयि सर्वात्मके भावे मत् सामीप्यं भजत्ययं। सैव सालोक्य सारूप्य सामीप्या मुक्तिरिष्यते। गुरूपदिष्टमार्गेण ध्यायन्मद्रूपमव्ययं। मत्सायुज्यं द्विजःसम्यक् भजेद् भ्रमरकीटवत्। ज्ञानात् कैवल्य माप्नोति अनन्यचेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ ! नित्ययुक्तस्य योगिनः ॥ इत्यादिभिरनेकप्रमाणैः अपरिच्छिन्न ब्रह्मध्यानेन ध्याता ध्येय सारूप्यमश्नुते यथाच लोके शाकिन्यादि पत्र शाक संस्योगात्सत्पन्नतयर्णः कीटविशेषः कुलालनाम्ना शोणरुचिना भ्रमरविशेषेण सुकल्पित सद्म विशेषसंस्थापितः सन् अभङ्गुर भ्रमर चिन्तनेन तत्सारूप्य मयते तथेति। विस्तरस्तु तन्मत प्रबन्धेषु द्रष्टव्यः। प्रतिपादितश्चैतदस्मदीयस्तोत्र रत्नमालायां भक्ति भावितस्तनोषि देव त्वं सरूपतां जनस्य नूनं शङ्कको मयूरसारिणीन्द्राद्यौषधी विभावितो रवेर्वा इति रवेः शुल्वस्य शङ्कुकः शङ्कुपाषाण इवेत्युपमा एतत् प्रपञ्चस्तु रसवादखण्डेषु द्रष्टव्यः। यद्यप्यत्र प्रकरणेषु वह्नवक्तव्यं विस्तरभयाद्विरम्यते ॥

(११)ताच्चित्तग्राचाद्रूप्यमिति वाक्यप्रतिपाद्यार्थस्य स्वानुभवगोचरी भाव प्रकारमाह ॥ तदाहीति ॥ आमुग्धं वक्त्रं आमुग्धत्व विशिष्ट वक्त्र पदवाच्यं वस्तु इत्यर्थः। तत् पूर्वदृष्टं मल्लिका वक्त्र मित्यर्थः ॥ नान्यदिति भावः। किसलय सखोऽधरमणिः किसलय सखित्व विशिष्टाऽधरमणिपदवाच्यः सः पूर्वं दृष्टो मल्लिकाधर मणिः नान्यइति भावः। एवमेव विशाले नेत्रे ते स्तनभरनता तनुलता सा सलीलं यातं तत् इत्यता-

प्यर्थः कल्प्यः। जननयन सञ्जीवन सुधा प्रिया जननयन सञ्जीवन सुधात्व विशिष्ट प्रियाशब्दवाच्या। सा सा सा सा पूर्वदृष्टा मल्लिका इति एवं प्रकारेण ताच्चिन्त्यादित्यनुकर्षः॥ ताच्चिन्त्यात् तदेकध्यानात् हृदयं ध्यातृ तन्मयं ध्येयात्मकं मल्लिका स्वरूपमिति यावत् अजनि आसीदित्यर्थः॥ सा सा सा सेति आदराच्चतुर्वार सुक्तिः॥ उक्तञ्च भट्टोजिना सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्याय सिद्ध इति॥ ननु अत्र स्वानुभव गोचरी भाव प्रकार प्रयुक्ते तन्मयमिति पदे स्वरूपार्थक मयट् प्रयोग सामर्थ्यात् सायुज्य मुक्तं भवति ईदृश स्वानुभव गोचरी भावस्य विषयस्तु सारूप्य पदवाच्योऽर्थः इति प्रागुपन्यस्तं। सारूप्यं नाम रूपमात्रेण परस्पर सादृश्यं सायुज्यं नाम ध्यातृ ध्येययोः परस्पर सम्पर्कित्वं। इति परस्परभेदसद्भावात् अनयोर्विषय विषयिणोः असाङ्गत्यापात इति चेत् उच्यते सारूप्यं नाम रूपतः परस्परमपृथकत्वं सायुज्यं नाम परस्परमपृथकत्वं एवमेव चतुर्विध मुक्ति वाचकपदैरपि ध्यातृ ध्येययो रभेद एवोच्यते अतो नैतेषां सायुज्य सारूप्यादीनां परस्पर भिन्नार्थकत्व कल्पना प्रयुक्तदोषकल्पनाया अनवकाशः। यतश्च सैव सालोक्य सारूप्य सामीप्या मुक्तिरिष्यते इत्यादीन्यनेक प्रमाणानि तथाच न मुक्ति तारतम्यं सर्व्वासामपि तासां ध्यातृ ध्येययो रभेद सिद्धि रूपत्वात्। ननु भ्रमर कीट न्याये कीट भ्रमर भेदेन द्वित्व विशिष्टयोर्ध्यातृ ध्येययोः अभेदसिद्धिस्तु रूपमात्रेण नत्वेक पिण्डीभावेनच। अतोऽत्र अभेदसिद्धावपि भ्रमर पिण्डत्वेन पुनरपि द्वित्व प्रतीति रस्त्येव इति ध्यातृ ब्रह्मैक्य समर्थनाऽसमर्थोऽयं उपमानोपन्यास इति चेन्नैवं। इह उपमान पक्षे ताच्चिन्त्य प्रयुक्त कीटत्व नाशोत्तर भ्रमरत्व प्राप्तिमात्र धर्मविवक्षया ताच्चिन्त्य प्रयुक्ताऽविद्या नाशोत्तर ब्रह्मत्व प्राप्तिरूपोपमेय धर्मेण सह बिम्बप्रति बिम्बभावेन उपमानत्वोक्तिः। अप्रत्यक्षस्य पारमार्थिक सत्ता सम्भविषय दुपमेय प्रकारोपन्यासस्य सत्यत्व बोधार्थं प्रवृत्तौ यथोपयोग धर्म विवक्षया व्यावहारिक सत्तायां भ्रमरकीटोप माने अति प्रसङ्गमन्याय्यं नहि दृष्टान्ते सर्वसाम्यं इति न्यायात् भजेद्भ्रमरकीटवदित्यादि वचनस्य प्रमाणत्वाच्च। किञ्च अति प्रसङ्गे एकमेवाऽद्वितीयं

परितो विलोक्य। अहो विस्मापकोऽयं विरिञ्चस्य प्रपञ्च निर्म्माण प्रकारः।

विम्बाः कम्बुशिरःसु शीत महसां विम्बीफलेनाङ्किताः।
कुम्भा व्योमनि कुम्भिनी पुलिनसम्भाराश्च रम्भाग्रगाः॥
अम्भोजानि दले दले धृत विधून्ये तत् समस्तं पुन-
श्चम्पा वल्लिषु तन्मयञ्च भुवनं किं नाथ विक्रीयते (१२)

---

अत्र इत्याद्यनेक प्रमाण विरोधाश्च इत्यहेति सिद्धान्तः। एतत् प्रपञ्चस्तु वयमिह प्रकरण भङ्गभिया विरमामः। केचित् तु आमुग्धं अति सुन्दरं तत् वक्त्रं पूर्वदृष्टं मल्लिका मुखं किसलय सखः सोऽधर मणिः पूर्वदृष्टोऽधर मणिः एवमवशिष्टमपि कल्पनीयं प्रियायक्ष्स्य त्रिवार माहत्तिः जननयन सञ्जीवनसुधा सकल जनानन्दकारिणी साप्रिया२ साप्रिया२ पूर्वदृष्टा मल्लिका२ पूर्वदृष्टा मल्लिका२ इति ताञ्चिन्त्राग्रात् इत्यादि पूर्ववत् इति योजयन्ति।

अन्ये तु तत्वक्त्रं पूर्वदृष्टं मल्लिकाया वदनं आमुग्धं अति सुन्दरं सोऽधरमणिः पूर्वदृष्टोऽधरमणिः किसलयसखः। एवमेव शेषमपि योजनीयं। जननयन सञ्जीवन सुधा साप्रिया पूर्वदृष्टा मल्लिका सा सा सा उपन्यस्त वक्त्र सौन्दर्य्यादि गुणविशिष्टा (त्रिवारसक्तिः) इति ताञ्चिन्त्राग्रादित्यादि प्राग्वत् इति योजयन्ति। अपरे तु तद्वक्त्रं आमुग्धं आसएवं शेषमपि संयोज्यं जननयन सञ्जीवन सुधा साप्रिया सासा उपन्यस्त गुणविशिष्टा आस बभासे। अस गति दीप्त्या दानेष्वित्युभय पदिनो धातोः कर्त्तरि परस्मैपदाल्लिट्॥ इति ताञ्चिन्त्राग्रादित्यादि प्राग्वदिति योजयन्ति एवमन्वय द्वैविध्येऽपि ताञ्चिन्त्र प्रकारो भावस्य मानुपपत्तिः इत्यलं पल्लवितेन॥

(१२) आकूतविशेषं मनसि निधाय तं विरिञ्च कृत प्रपञ्च निर्माण प्रकार विस्मापकता वर्णनेन परिष्करोति। विम्बा इति अन्वय स्फुट एव। तथाच विम्बो फलाङ्कितत्वं चन्द्र विम्बानां तथा शङ्खाग्र-

भ्रमर । स्वगतं । सो एसो उम्मादस्स पारम्भो । प्रकाशं णाह ! सारसिआवअणादो जाणीयदि भअं सुअहं तस- होदीए दंसणन्ति ।

मारुतः । सत्वा सहर्षं ।

मत्वागमं प्रियायाः सोऽहं मदनाकुलः समुच्छ्वसिमि
आलोक्य चन्द्रिकोदयमार्त्तश्यामामुखे चकोर इव । (१३)

निश्वस्य । (१४) तस्याः खलु तरलेक्षणायाः सांप्रतमनुराग सत्वं तत्त्वतो निश्चेतु मभिलषामि । सायंश्चं ।

---

वर्त्तित्वं विम्बीफलाङ्कित चन्द्र विम्बानां तथा गगनवर्त्तित्वं कुम्भि कुम्भानां तथा कदलिकाया वर्त्तित्वं सिकता पुञ्जानां तथा प्रतिदव च्छुतेन्दुत्व मम्भोजानां । तथा विद्युल्लताया वर्त्तित्व सुपन्यस्तस्य निखिल- स्यापि । तथा तादृश तडिल्लता प्रचुरत्वं भुवनस्य । इत्येव सुपन्यस्त प्रकारे एकैकस्याद्भुतत्वात् किं तदनाश्चर्य्यकर मित्याक्षेपः । अत्र बिम्बीफलपदेन अधरस्य शीत मयूः पदेन मुखस्य कम्बु पदेन ग्रीवायाः कुम्भिकुम्भपदेन वक्षोजस्य व्योमपदेन मध्यस्य पुलिनसंभारपदेन जघन प्रदे- शस्य रम्भापदेन ऊरोः अम्भोज पदेन पाणिपादस्य दलपदेन अङ्गुल्याः विधु पदेन नखरस्य सम्पावल्लि पदेन अवयवास्य संग्रहः इति । विषयं निगीर्य्य तस्य विषयिरूपेण अध्यवसानात् रूपकातिशयोक्तिः । तथा वकार मकाराणां पौनरुक्त्यात् इत्यनुप्रासः । एतयोश्च परस्पर नैरपेक्ष्यात् संसृष्टिः ।

(१३) मत्वेति ॥ मदनाकुलः सोऽहं प्रियायाः मल्लिकायाः आगमं मत्वा ज्ञात्वा श्यामा मुखे निशामुखे सायंकाले इत्यर्थः श्यामो वटे इत्या- रभ्य यमुनायां त्रियामायामिति मेदिनी । चन्द्रिकोदयं आलोक्य आर्त्तो विरह पीड़ितचकोर इव समुच्छ्वसिमि जीवामि इत्यर्थः । उपमा- लङ्कारः ॥

(१४) तस्या इति ॥ अनुराग सत्वं राग सद्भावमित्यर्थः ॥

कुवलयदृशोऽप्येवं चेतो विशेद्यदि मन्मथो
नियत मियता पूर्णाः कामा विनापि च सङ्गमं ॥
सरसि नलिनी व्योम्नि ब्रध्न स्तथापि परस्पर
प्रभव सरसे भावे ख्याते तयोर्मिथुन प्रथा ॥ (१५)

---

(१५)तदीयानुराग सद्भावतत्वनिश्चये किं फलमित्यतः सदृष्टान्तं समा-
से ॥ कुवलयेति एवं मन्मनसि प्रवेश प्रकारेण कुवलयदृशोऽपि चेतः
मे मन्मथः विशेद्यदि । इयता मरणो भय मनः प्रवेशमात्रेण परस्पर
म्भोग विषयेच्छाविशेष स्पृहा पर पर्य्याय प्रमोदात्मक मनोवृत्ति विशेष-
ात्रेण इत्यर्थः ॥ रत्याख्य शृङ्गार स्थायिमात्रेणेति यावत् । तदुक्तं
ाव प्रकाशे । सम्पन्नैश्वर्य्य युक्तयो रशेष गुणयुक्तयोः । नवयौवनयोः
ाध्य प्रकृत्योः श्रेष्ठ रूपयोः ॥ नारी पुरुषयोस्तुल्या परस्पर विभा-
वका । स्पृहाख्या चित्तवृत्तिः रतिरित्यभि धीयते इति स्पृहा लक्ष
ाश्च तत्रैव । ष्यात्मीय भोग करणं स्पृशन्ती प्रियवर्त्मना या जहातो-
ारान् भोगान् सा स्पृहेत्यभिधीयते इति च ॥ कामाः सुखापर नामानः
ीपुंसयोः परस्पर विमर्दजानन्द सम्भेदाः ॥ उक्तञ्च ॥ कामोपचारः
म्भोगः काम स्त्रीपुंसयोः सुखं । सुखमानन्द सम्भेदः परस्पर विम
ैतः । उपचार स्तदानन्दकारकं कर्म कथ्यते इति ॥ सङ्गमं स
ेतुभूत कामोपचारापर पर्य्याय सम्भोगमित्यर्थः ॥ विनापि च ॥ अपि-
ेति अव्ययपदद्वयेन परस्परानुरागस्य, मनः सङ्गाख्य द्वितीय दशया
ास्य सङ्कल्पाद्युत्तरोत्तरदशा पादकत्वेन सङ्गमैकहेतुत्वात् सङ्गमविना भावो
ासंभवविष्यत् अयच विधि वैषम्यात् क्वाचित्के तथात्व सम्भवेऽपीत्यर्थो
द्योत्यते । इदञ्च सहृदय हृदयैक साक्षि । नियतं निश्चयेन पूर्णाः
ूर्त्तिं प्राप्तवन्तः स्युरिति शेषः । तथाच कारणभूतसङ्गमाऽभावेऽपि
ागम विषयेच्छा विशेष सद्भाव मात्रेण कार्य्यभूत काम पूर्त्तिः स्यु-
रिति भावः ॥ लोके च स्वविषयोत्तम नायिकानुराग रसत्व निश्चये
सुखोत्पत्तिरनुभव सिद्धैव ॥ दृष्टान्त मुखेन समर्थयति । सरसीति ॥

भ्रमरकः। णाह ! उववत्तीहिं णिण्णीदेवि तत्तहोदीए अणुराए कहं ण संसयो ॥

मारुतः। ननु रागान्धधियां अविश्वसनीया उपपत्तयः। पश्य।

उत् प्रेक्षते नयनयो रसतोऽपि भावान्
मोहेन कल्पयति मौग्ध्य मनुन्मुखत्वे।
योषासु रागचपलो विवृताभिलाषः
प्राप्यावमान मनुताप मुपैति मूढ़ः ॥

भ्रमरकः। णं भणिअं सीमन्त मणिं ओव्वयं देणमए-दिट्ठो उत्तरिज्ज वल्लव लिहिओ णाहस्स पड़िच्छन्दोत्ति।

मारुतः। तादृशानां भागधेयानां अभाजन मात्मानं

---

सरसि नलिनी पद्मसङ्घातः स्त्रीलिङ्गात् स्त्रीत्वद्योतनं। व्योम्नि ब्रध्नः सूर्य्यः पुंलिङ्गात् पुंस्त्वद्योतनं स इति शेषः ॥ तथापि बहुदूरवर्त्तित्वेन सङ्गमं विनापि इत्यर्थः। तयोः स्त्रीपुंसभूत नलिनी ब्रध्नयोः परस्परं प्रभवेण जन्मना सरसे सानुरागे। रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्य्ये तिक्तादौ द्रव रागयोः। इति मेदिनी ॥ भावे अभिप्राये ख्याते विलासित्व विकासकत्व रूपेण प्रसिद्धतया वर्त्तमाने सति। मिथुन प्रथा मिथुनत्व प्रसिद्धिः। मिथुनत्वञ्च परस्पर स्त्रीपुंसत्वप्रयुक्त सुख निर्वृत्तत्वं। यदुक्तं प्रेमलक्षणानि मिथुनानीति। तथाच काम पूर्णत्वेन प्रसिद्धिरित्यर्थः। कारणीभूत सङ्गमं विनापि सङ्गम विषयेच्छा विशेष सद्भावमात्रेण नलिनी ब्रध्नयोः तत्कार्य्य भूत काम पूर्त्ति मत्त्व लक्षणं मिथुनत्वं प्रसिद्धमिति भावः ॥ सामान्येन विशेष समर्थन रूपो-ऽर्थान्तर न्यासोऽलङ्कारः ॥ अत्र चाभिलाष विप्रलम्भ शृङ्गारः प्राधा-न्येन व्यञ्जतयिति अभिधा मूल संलक्ष्य क्रम व्यङ्गो वस्तु ध्वनिः ॥

मन्यमानस्य मम सर्वथा अनाश्वासमेव हृदयं। येन तवापि वचनमाश्वासं तर्कयामि।

भ्रमः। सस्मितं। मखे अज्ज अप्पणेव्व दट्ठूण अप्पण अणेसु वि आसासणं संकाणिज्जं होज्ज।

मारुतः। सौत्सुक्यं। प्रियागमनं प्रतिपालयन् इह केन नयने विनोदयामि।

भ्रमः। एदं कीलंत वसंत पअवोम्म गलिअ लक्खारस रग्ग पल्लव तं व पाअव णिउरुंवं फन्दन्द मन्द गन्ध वहंदोलिअ महुर सोल्लवेल्ली कुसुम परिमल घोलिर पुल्लं धओलि णिओलि अं वरं णवणव सह आर भङ्ग चव्वण गव्विअ कोइल पञ्चम हलं वोल दिस कसवारणं वसंत वणुज्जाणं पेक्खन्दस्स णाहस्स सुलहो मणविणोदो।

मारुतः। विहस्य। तदिदं दर्वीकरात् भीतस्य वल्मीके वासोपदेशः। मन्मथाद् भीतस्य तच्छिविर वासमादिशसि पश्य।

आरक्ताः पटमण्डपाः किसलयैरुल्लोचिताः पादपाः
भृङ्गालीकरवालिका परिकराः सेना भटा वायवः।
ताराः काहल निस्वनाः पिकरवा स्तन्मन्महे डामरं
स्कन्धावार पदं विभोरुपवनं नाम स्मरोर्वी भुजः।(१६)

(१६) उपवनस्य मान्मथशिविरत्वमेव साधयन्नाह। आरक्ता इति। किसलयैः उल्लोचिताः उल्लोचाः कृताः तत्करोति इति णयन्तात् कर्मणि क्तः॥ वितानायित किसलयवन्त इत्यर्थः। अस्त्री वितानमुल्लोच इत्यभिधानं॥ पादपाः। आरक्ताः पटमण्डपाः शोणपट स्कन्धावार भृङ्गाली

तद्यावद्धि शिबिर मानीयतां द्वीपान्तर भूषणं प्रिया प्रतिच्छन्दः ।

भ्रम । जं णाहो आणवेदित्ति । परिक्रम्य । आकाशे उज्जा णादे वदाओ तुम्हे सहाआ णाहस्स । इति निष्क्रान्तः ।

मारुतः । सायंसं । को नामास्याः प्रति नवं रूपामृत मास्वादयिष्यति सुकृती ॥

स जयति तरुण स्तरुणः सा च तपस्या तपस्यापि ।
ये न यया पल्लि मया पाणिर्ग्राहिष्यते चकोराक्ष्याः ॥ (१७)

---

भ्रमरपङ्क्तिः करवालिका परिकरः असिलता सङ्गः वायवोऽनिलाः सेना भटाः सैनिकाः । भवेत् परिकरः सङ्गे इति मेदिनी । तथा पिकरवाः तारा: अत्युग्राः । काहलनिस्वनाः । तत् तस्मात् पटमण्डपादि सामग्री सद्भावादित्यर्थः ॥ उपवनं आरामं कर्म विभोः स्मरोर्वी भुजः डामरं विपुलं स्कन्धावार पदं सेना सन्निवेश स्थानम् शिविरमिति यावत् । स्कन्धावारः स्यात् कटकः शिविरं बलसंस्थिति इत्यमरः शेषः ॥ मन्ये नामेत्यभ्युपगमे । नामकोपेऽभ्युपगमे इति मेदिनी । अत्र पटमण्डपादि शिविर लिङ्ग सद्भावात् हेतोः उपवनं पक्षीकृत्य स्मर महीपाल स्कन्धावार पदत्वं साध्यत इत्यनुमानालङ्कारः ॥ पादपाः पटमण्डपाः भृङ्गाली करवालिका परिकरः वायवः सेनाभटाः पिकरवाः काहलनिस्वनाः इत्यत्र असत्रूपकं ॥ एतच्चानुमानस्योत्थापकत्वेनाङ्गं इत्यनयोः परस्परमङ्गाङ्गि भावेन सङ्करः । इदञ्च रूपकोत्थितमिति तर्कानुमान विलक्षणं ।

(१७)स इति ॥ स मल्लिका पाणिग्राही तरुणः युवा तरुणः तरुणपदवाच्यः उत्कृष्ट तरुण इति यावत् जयति । सा मल्लिका पाणिग्रहण प्रयोजिका तपस्यापि तपस्या च तपस्या शब्दवाच्या उत्कृष्ट तपस्येति यावत् ॥ चकारात् जयतीत्यनुकर्षः ॥ कोसौ हि । तरुणत्वं नाम पाणि-

निश्वस्य । मम पुनरस्य दुर्निवार प्ररोहस्य मनोरथद्रुमस्य मन्दाकिनी वचांस्युपवनी भवन्ति । अपिच ।

निश्चिन्वानाः परम सुलभान्तान्तु निर्याति कण्ठात् ।
भूयो भूयः प्रसभ मसवो यत् प्रतिष्ठा समानाः ।

---

ग्रहणयोग्यो दशा विशेषः तस्याश्च फलं पाणिग्रहः । तस्य च उत्तम नायिका सम्बन्धित्वे उत्कृष्टत्वं इत्यतः प्रकृते च उत्तमोत्तम नायिकायाः पाणिग्रहरूपोत्तम फलविशिष्टत्व एव सप्रयोजन तरुणपदवाच्यत्वेन उत्कृष्टत्वं । अन्यथात्वेऽस्मिन् तरुणपदप्रयोगो डित्थादि पदप्रयोग वदिति भावः । तथा दुर्लभफलप्रति प्रयोजकं कर्म तपस्या तस्यास्तत्र मल्लिका पाणिग्रहरूपदुर्लभफलप्राप्ति प्रयोजकत्व एव तपस्या पदवाच्यत्वे नोत्कृष्टत्वं । अन्यथात्वे तदनुष्ठानस्य वैफल्यात् तत्र तपस्या पदप्रयोगो मुधैवेति भावः । येन तरुणेन कर्त्रा पक्विमया परिपक्वया यया तपस्यया प्रयोजिकया चकोराक्ष्याः लोकोत्तर नायिकात्वद्योतकमिदं पदं । प्राप्तिः कर्म पाणिग्रहीष्यते ग्रहधातो रूपादानार्थकात् भविष्यदर्थे लृट् । अत्र उत्कर्षार्थक तात्पर्य्य भेदेन शब्दार्थ पौनरुक्त्याल्लाटानु प्रास नामा शब्दालङ्कारः । लक्षणन्तु शब्दार्थयोः पौनरुक्त्यं यत्र तात्पर्य्य भेदवत् । स काव्यतात् पर्य्य विदां लाटानु प्रास इष्यते इति विद्यानाथः ॥ उक्तञ्चोद्भटेन । स्वरूपार्थ विशेषेऽपि पुनरुक्तिः फलान्तरात् । शब्दानां प्रकृतीनां वा लाटानु प्रास इष्यते इति । ननु अनन्वयेऽपि शब्दार्थ पौनरुक्त्य सम्भवात् लाटानुप्रासत्वं किं नेष्यते । सत्यं यद्यपि युद्धेर्जुनोऽर्जुन इत्यादौ अनन्वये अर्थपौनरुक्त्यमात्रं लक्षणं । तथापि निर्देश प्रति निर्देशयोरैकरूप्या भावे पयसि प्रक्रम दोषप्रसङ्गात् आनुषङ्गिकं शब्द पौनरुक्त्यं । अत्र तूभय, पौनरुक्त्य, मप्यावश्यक मेवेति विषयभेदान्न कोऽपि विरोधः तदुक्तं अनन्वये च शब्दैक्य मौचित्यादानुषङ्गिकं अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकमिति ।इति मल्लिनाथ सूरि स्कन्दकुमार स्वामि सोमपीथी ।

मुख्यो हेतुः पुनरिह तया मुग्धगात्र्या प्रयान्त्या ।
मुक्ता ये ते वलित वदनं साभिलाषाः कटाक्षाः । (१८)

नेपथ्ये । इदो इदो भट्टिदारिआ ।

मारुतः । विलोक्य । सानन्दं । प्राप्तै वात्र कालिन्दी नवमालिकाभ्यां मन्नयन चकोर चन्द्रिका मल्लिका ।

निर्वर्ण्य सदयं ।

इन्तेयं मृदित मृणाल निःसहाङ्गी
खिन्दाना जघन भरेण दुर्व्वहेण ।

---

(१८) निश्चिन्वानाः परमसुलभामिति प्रतिष्ठया कार्य्य निर्वाह सामर्थ्येन गर्वेण वा असमानाः निरुपमाः अति चतुराः अत्युन्नता इति वार्थः ॥ प्रतिष्ठातु समाप्तौ गौरवेऽपि च कार्य्य निर्वाह सामर्थ्ये इति नानार्थरत्नमाला । असवः प्राणाः तां मल्लिकां परं असुलभां केवलदुर्लभां निश्चिन्वानाः निश्चयं कुर्व्वाणाः सन्तः भूयो भूयः पुनःपुनः प्रसभं कण्ठात् निर्यान्ति निर्गच्छन्ति इति यत् तु इह अस्मिन् विषये उक्तप्रकारेण प्राणनिर्याण विषये इत्यर्थः यत् प्रतिष्ठा समानाः इत्येक पदत्वे तु । यया मल्लिकया प्रतिष्ठया स्थित्या समानाः तुल्याः मल्लिका सहवासिन इत्यर्थः । हृदयवर्तित्वादिति भावः । असवः तां परं असुलभां निश्चिन्वानाः सन्तः भूयो भूयः प्रसभं कण्ठात् निर्यान्ति तु किन्तु इत्यर्थः । तु पादपूरणे इत्यादिना पक्षान्तरे नियोगे चेति मेदिनी । इह प्राणानां सार्वदिक् तद्ध्यानोपलक्षितत्वात्तद् दौर्लभ्य निश्चयेन कण्ठाद्बहिर्निष्क्रमणमित्यत्रेत्यर्थः । मुख्यो हेतुः पुनःप्रयान्त्या तया मुग्धगात्र्या वलितवदनं साचीकृतमुखं यथा तथा मुक्ताः गमनसमये साचीभूत त्रिभागमुखी सखीमिति पद्योक्तप्रकारेण प्रेरिता इत्यर्थः । साभिलाषाः एते प्रतिभा बलात् साक्षाद्भासमानाः कटाक्षाः तारका गतागति विश्रान्ति वैचित्र्य विवर्तनानि इत्यर्थः । अद्यापि उक्तगुणविशिष्टानां

आयाति स्तनभर भङ्गुरावलग्ना

पादाभ्यां प्रति नवपल्लवारुणाभ्यां ॥

ानन्दातिशयं नाटयन् ॥

आरण्याम्भेयास्त्रैः प्रतिहतमियन्तं हि समयं

यदासीदस्तोक व्यसन परितापातिविधुरं ॥

तदस्याः सान्निध्ये शिव शिव कुतोऽपि प्रसृतया:

सुधाधो रण्या व प्लुतमिव मनोहृष्टुल मह्नो ॥ (१८)

ावदहं लता गुल्मान्तरितो विस्रब्ध मेनां पश्यामि । इति

या करोति ॥

ततः प्रविशति मल्लिका नवमालिका कालिन्दी च ।

मल्लिका । स्वगतं । अज्जवि अणासंघं हिअ अं । सविस्मयं।

हं णु दीवा दरे मह पड़िछन्दो सुट्ठु कहिअं कालि-

ीए अह महाभाअस्से त्ति ॥

सख्यौ । इदो इदो ।

---

टाक्षाणां स्वानुभव गोचरत्वेन सन्निहितत्वात् सर्वदाप्यभङ्गुर नायिका

तयः प्राणाः तद्विरहमसहमाना बलात् पुनः पुनः कण्ठान्निष्क्रा-

नीति भावः । ये ते इति यच्छब्द तच्छब्दाभ्यां पाठे तु ये कटाक्षा

त्तवदनं छन्नाः ते इत्यन्वयः ॥

(१८)आरण्येति ॥ यन्मनः कर्तृ आरण्याम्भेयास्त्रैः इयन्तं समयं प्रति-

तं सत् । अत्र प्रतिहतमिति कर्मणि क्त प्रत्ययस्य भूतार्थकतया फल-

प्ति द्योतकत्वेन अपवर्गे तृतीयेति समयपदस्य यद्यपि तृतीया युक्ता

थापि क्त प्रत्ययवाच्य भूतकालस्य समयविशेषणेन इयन्तमिति पदेन

र्तमाना सन्नत्व द्योतनात् स्वल्प वर्तमान सामीप्ये वर्तमानवद्वेत्यनेन

ाल्लिको भूतार्थक क्त प्रत्यय प्रयोगः । तथाच क्त प्रत्ययस्य भूतार्थकत्व

मारुतः । निर्वर्ण्य । सम्प्रत्यतिशयालु सौन्दर्य्य मस्या वपुरावेदयति अतिक्रान्त मर्य्याद मनङ्गविकारं । तथाहि

विषया विधुरा दृष्टिः श्वासानिला ग्लपिता धराः ।

तनुरपि भृशं ग्लाना लूनेव पल्लव मञ्जरी ॥

अपि च । लवली पाकोद्भेदाभि राम वदावद

स्फुरति कुचयोर्मूले गण्डे च कश्चन पाण्डिमा ॥

मल्लिका । कालिन्दि ! सोक्खु एसो पच्च गदंसिश्र थ वणिदसिद्दर लदामण्डलो पदेसो जो तुए पुणो पुणो वण्णिदो ।

मारुतः ।

अयि पिवत मसृत मधुरानालापानसित कमल नयनायाः ।

क्रूर कुहमुख कूजित नाराचोद्वेजितौ कर्णौ ॥ (२०)

कालिन्दी । स्वगतं । मर्ये एत्थ कहं वि लदाणिउञ्जे-आलीणो मारुश्रो होज्ज । प्रकाशं । सच्चं सो एव्व पोंचम हु

---

प्रयुक्त फलप्राप्ति पूर्वकत्याग द्योतकत्वाऽभावात् कालाध्वनो रत्यन्त संयोगे इत्यनेन द्वितीया । बाध्यमान सत् इत्यर्थः अस्तोक व्यसनेन यः परि तापः तेनाति विधुरं अत्यन्तक्लेशयुक्तं आसीत् । वर्तमान सामीप्ये इत्य नेन अयमपि पाक्षिकः प्रयोगः । विधुरौ कष्टविश्लिष्टाविति नानार्थ रत्नमाला । तन्मनः अस्याः सान्निध्ये सति कुतोऽपि अविदित प्रदेशा प्रस्रुतया सुधाधोरण्याव प्लुतं अभिषिक्तमिवेत्युत्प्रेक्षा कुर्मुलं उल्लित मित्यर्थः ॥ कामुकमिति यावत् । कृषेरलुच इत्युलुच प्रत्ययः । कुर्मुलं मृगकामिनोरिति अभिधानम् ।

(२०) अयीति ॥ क्रूराणि यानि कुहमुखानां कोकिलानां वै ककुह कुहमुख इति अमर शेषः । कूजितान्येव नाराचाः ॥ तैरुद्वेजितौ लिखितौ अयि कर्णाविति सम्बोधनं ॥

मद्कल महुअरणि उकंव झंकार संलावो मन्दपवण चलिए ण किसलय हत्थेण अक्कार इव्व तुमं।

मल्लिका। ता एत्थ अपचि णिम्ह कुसुमाइं।

सर्व्वाः पुष्पापचयं नाटयन्ति।

मारुतः। वसन्तं मल्लिकां निर्वर्ण्य। एषा खलु।

उत्तानीकृतवक्त्र विम्बमुपरिच्योततपरागोत्कर

तस्ता कूणित लोचनं स्तन भरोद्दाय स मध्याङ्कुरं।

ईषद्व्यथितनाभितुङ्ग जघन क्रान्तोरु पादाङ्गुलि

व्यासक्तस्थिति लीलयाऽपचिनुते पुष्पं नु चित्तं नु मे ?(२१)

मल्लिका। हन्त! कीस मे अवचिमाइं वि हत्थेणोलम्बन्दि कुसुमाइ।

नवमा। सहि असहिअआसिणं अवइ असुका णिक्कुसुमाखु एसा वल्ली॥

मारुतः। हन्त निजावयव शोभा भ्रमरैरेव भ्राम्यति मल्लिका। तथाहि।

शोणिम्ना करपल्लवस्य रचयन्त्युल्लासिनः पल्लवान्।

स्वच्छाभि र्नखकान्तिभि र्विदधती स्मेरां प्रसूनावलिं।

तन्वाना तरलैरपाङ्ग वलनैः सञ्चारिणः षट्पदान्।

मुग्धा पूर्व्वं समुज्झितामपि पुनर्वल्लीं समालम्बते॥

---

(२१) उत्तानीकृतेति। पुष्पं अपचिनुते नु मे चित्तं अपचिनुते नु इति सन्देहः॥ उत्तानीकृत वक्त्र विम्बत्वादि धर्म्माणां उभयत्र साम्यत्वात्। अत्र उत्तानीकृत वक्त्रविम्बमित्यादिना। क्रिया स्वभाववर्णनात् स्वभावोक्तिरेतदनु माणितश्च सन्देह इत्यनयो रङ्गाङ्गि भावेन सङ्करः॥

मल्लिका । सखेदं परिक्रम्य । लतान्तरमवलम्ब्य ससम्भ्रमं । अम्हहे एदेखु झत्ति उम्मड़िया झंकार मुहरा घोलन्ति महुवअणम्मि दुल्ललिआ वच्चलिआ ।

मारुत: । विलोक्य ।

इयमधिक लोभनीया वाला चलहार लुलित कुचकलशा ।
मुखकमल सौरभ वलन्मधुकर सम्भ्रम विलोला ॥

नवमालिका । सहि ! विहसिद पारिआअ कुसुम सोरभ गव्वेण तुह णिस्सास परिमलेण आअड्ढिआ विसज्जिअ सहआर चम्पअ मालई पुसाअसुहाणं पुप्फाइं ममन्दि अहिमुहं भमर गणा ता संच्छादेहि करअलेण मुहं तुमं ।

मल्लिका । तथा करोति ।

मारुत: । हन्त ।

चकितवालकुरङ्ग विलोचना करतलेन समावृणुते मुखं ।
तदपि पङ्कजमाकलयन्नयं भ्रमति भृङ्गगणो धृतभङ्ग्य:

मल्लिका । णिवारेह णिवारेह पुणोवि ण मुञ्चन्ति महुअर हदआ ।

नव । सहि ! मामा भीरुआ होहि एसा अहं णिवारेमि । इति मल्लिका मालिङ्गय पदान्तरं नयति ।

मल्लिका । चक्षुरुन्मील्य । दिट्ठिआ कहं विणिग्गअम्हि भिङ्गसंकडादो ।

कालिन्दी । सहि ! कोमलङ्गि मल्लिए ! दिढं खु किलन्तासि कुसुमावचअं संभमेण । ता का ए बि वल्लिए सीअलच्छा आसिणिह मूलदेसे खणं उव विसह्म

मारुत: । सत्यमियं क्लान्तेव । कुत: ।

श्वासोद्गम मुल्वणं कथयतः प्रस्पन्दमानौ स्तनौ।
र्वौ वेपथु रूह्यते रुचिरयोरुत्कम्पिना वाससा
यच्चैव ननु श्रमाम्बुकणिका नेत्राम्बुजोद्भासिनी
त्काः पाणितलेऽपि पल्लव सखे लाक्षां विना रक्तिमा॥

मल्लिका। सस्नेहं साञ्जलिबन्धम्। अम्ब! प्रणमामि।

मारुतः। सबहुमानं।

अपि पारिजात लतिका मधिशेषे हन्त वल्लि यस्यास्ते।
जननयनभृङ्गसेव्या कलिका लावण्य मधुमयी सेयं॥ (२२)

---

(२२) अपीति। हे वल्लि! अयि लतिके! जननयन भृङ्गसेव्ये नयनैः भृङ्गैश्च सेव्ये प्रार्थनीये इत्यर्थः। इयं साभिप्राया सम्बुद्धिः इति शेषः॥ पारिजात लतिकामपि अतिशेषे। अतिक्रम्य वर्तसे। ऽप्यधिकासीति भावः। जननयन भृङ्ग सेव्ये इति सम्बुद्धि सामर्थ्यात् रिजातलतिका भृङ्गमात्र सेव्या। त्वन्तु जननयन भृङ्गोभय सेव्यासी- भाद्वेतोरिति भावः॥ उभय सेव्यत्वे हेतुमाह। यस्यास्ते लावण्यं भा विशेषः मधुमकरन्दश्च एतदुभय मयी एतदुभय प्रचुरा सा अञ्जलि ा इयं निर्दिश्य मानत्वद्वृत्ति वस्तु विशेषरूपा (निर्दिश्य मानं वस्तु च लमेव) कलिका जातावेक वचनं अस्तीति शेषः। पारिजातलतिकाया ङ्गमात्र सेव्यत्वे मधुमय कलिकामात्रवत्त्वं हेतुः। तव तु जननयन ङ्गोभय सेव्यत्वे लावण्यमय मधुमय कलिका शालित्वं हेतुरिति भावः। ाच त्वया मधुमय कलिका शालित्वप्रयुक्त भृङ्ग सेव्यत्व रूप साधर्म्ये रिजातलतिकायास्तुल्यत्व सद्भावेऽपि लोके उत्कृष्टत्वेन प्रसिद्धया ापि दुर्लभो लावण्यमय मल्लिकाञ्जलि रूप कलिका शालित्व प्रयुक्त ननयन भृङ्ग सेव्यत्व रूपो धर्म्मः विशेषस्त्वया सम्प्रति समासादित यतः पारिजात लतिकातोऽप्यधिकासीति भावः॥ अथवा हे वल्लि! यि लतिके यस्यास्ते कलिका लावण्य मधुमयी लावण्यं शोभा विशेषः

नव । भट्टिदारिए ! एसा क्खु दरविहसिअ कुसुमत्थवअ णीसन्दि मअरन्दत्थणेहिं अंकोवसप्पिणिं तुमं दट्ठूण पत्तु- हत्थणीविअ लक्खिज्जइ ता एदाए मूलम्मि चिट्ठम्ह । सर्वा उपविशन्ति ।

मारुतः । औत्सुक्यं ।

परिपाण्डु मनोहराङ्गवल्लीकथितानङ्गरुजो नतभ्रु वोऽस्या
अनुरागनिवन्धनस्य बोधे त्वरते मे हृदयं विलम्बते च ।(२१)

मधुमकरन्दस्य एतन्मयी क्रमादेतत् प्रचुरा कञ्जलिक्वरूपत्वेन वायस प्रचुरा अप्रफुल्लकुसुमरूपत्वेन मकरन्द प्रचुरा चेत्यर्थः । अतएव जन- नयन भृङ्ग सेव्ये जननयनैः भृङ्गैश्च सेव्ये क्रमात् एतदुभयैः स्व हृणीये इत्यर्थः । सेवं इङ्गय कलिका वत्वेन एतदुभय सेव्या त्वं । अद्योति शेषः पारिजात लतिकामपि । अपि मन्द्रात् कल्पद्रुमाणामिव पारिजात इत्यादिना उत्कृष्टत्वेन लोकप्रसिद्धामपीत्यर्थः । अतिशेषे अतिक्रम वर्त्तसे । हन्तेति सम्भ्रमे हन्त वाक्यारम्भ खेद विषाद हर्ष संभ्रमे इति मेदिनी । तथाच पारिजात लतिका तु मधुमय कलिकामात्र शालि- त्वेन भृङ्गमात्र सेव्या । त्वं पुनर्लोचनत्रय मल्लिकाञ्जलिरूप कलिका शालित्वेन मधुमय कलिका शालित्वेन च क्रमाज्जननयन भृङ्गै तदुभय सेव्यासीत्यतः पारिजातलतिकातोऽप्यधिकासीति भावः ॥

(२१) परिपाण्डु मनोहरेति ॥ निवध्यते अनेनेति निवन्धनं कारण- मित्यर्थः । अनुरागस्य निवन्धनं अनुरागनिवन्धनं रागकारणवस्तु- त्यर्थः । तस्य बोधे अनुराग गोचर वस्तु ज्ञानविषये इति यावत् । त्वरते काल यौघ्य माकाङ्क्षते विलम्बते च कालविलम्बञ्च वाञ्छतीत्यर्थः । अत्र स्वमनसः तदनुराग गोचर वस्तु ज्ञानविषये त्वरा वैयग्र्ये प्रवल मनोहर तदङ्गलता बोधित मन्मथरुजा स्फुटीभावो हेतुः तथा तत कालविलम्बाकाङ्क्षित्वे सत्यमियं ज्ञान्येव इत्यादिना आशङ्काभावात् ज्ञात- स्तथैव ज्ञानो हेतुरिति भाव्यं ॥

कालिन्दी। सहि! कुसुमावचअ समअ समुच्छमिअ
ङ्ग णिविड घणत्थण भरुछसहणवेविराऽव लम्बखेद्खिज्जन्त
हचन्दं तुमं परिरद्दु कामो उवसप्पइ एसो णव णवप्पसूण
रिद्दद परिमल शीतल फुफसो दक्खिणो मारुओ। (२४)

मल्लिका। सानन्दं। किं महामाणो मारुओ। इति
सम्भ्रमद्दत्याद्द निच्छति।

मारुतः। सहर्षं। अहो प्रसादातिशयो भगवतो मन्म-
स्य। यदिसृङ्खल प्रसरणं मनोरथानामप्य गोचर मानन्द
नुभावयति। सोच्छ्वासं।

(२५) सोऽहं सत्यं जगति सुभगम्भावुको मारुताख्या
साम्याच्छ्रुत्वा मदभिगमनं प्रस्तुते यत् समीरे।
उत्तिष्ठन्त्याश्चल कुचभरं सम्भ्रमोत्सुक्य हर्ष
प्रेमव्रीडाश्चवलनयनं वक्त्रमीक्षे मृगाक्ष्याः। (२६)
सत्यमुक्तं कालिन्द्या मारुतः परिरब्धु काम इति।
इमामाकाङ्क्षेऽहं किमपि परिरब्धुं प्रणयिणीं
शनैरारोप्याङ्कं स्मरकुतुकलज्जा परवशां
इदं पूर्वस्पर्श प्रचुर पुलकोड्डामर घन
स्तनाभोगां बालामुरसि सदयं निर्दयमपि॥ (३०)

---

(२४) सखि! कुसुमापचय समय समुच्छ्वसित तरुण निविड घनस्तन-
भरोद्वहन वेपद्वलग्नखेदक्लिद्यन्मुखचन्द्रां त्वां।

(२५) सोऽहमिति॥ सोऽनवस्था विशेष मनोहर तद्वदनविलोकिता
अहं जगति सुभङ्गं भावुकः असुभगः सुभगो भवतीति सुभगम्भावुकः
र्तरि भुव इत्यादिना खुकञ्॥ ऐश्वर्यमधिगच्छमान इत्यर्थः। भगं
राज्य योनीच्छा ज्ञानैश्वर्येषु चेष्यते इति पुरुषोत्तमः। तवार्थी भवन्

इति यावत् अस्तीति शेषः ॥ यत् यस्मात् समीरे प्रस्तुते सति मारुताख्या साम्यात् मारुत नाम्नः उभय तुल्यत्वेन मदभिगमनं मदागमनं (मारुतः परिरब्धुं काम उपसर्पतीत्या कारकं ) श्रुत्वा चलः विरहजन्य काठिन्य मुक्त्या उत्थानजवात् किञ्चित् स्पन्दमानः स्तनभरः यस्मिन् कर्मणि तद्यथा भवति तथा विरहे स्तनयोः काठिन्य मुक्तिः प्रतिपादिता च मेधा रुद्रेण। क्षाम क्षाम कपोलमाननमुरः काठिन्य मुक्त स्तनमिति ॥ अतो नात्र चल-पदेनावयवदोषप्रसङ्गः शङ्कनीयः उत्तिष्ठन्त्याः स्वगात्र्याः (सम्भ्रमः विभाव भूतप्रिय श्रवणादिरावेगः) औत्सुक्यं विभाव भूतप्रिय स्मरणादिः अनुभाव भूत गात्रगौरवादिः सर्वेन्द्रियाणां एकदैव क्रियारम्भः।) यद्वा तादृश विभावानुभावयुक्तं कालासहिष्णुत्वं हर्षः विभावभूतप्रिया-गमनादिः अनुभाव भूत पुलकाश्रुस्वेदादिः चेतः प्रसादः ॥ ) प्रेम-स्पृहाख्यः सम्भोग विषयेच्छा विशेषः सच रत्याख्यः शृङ्गार रसस्थायी व्रीडा अनुभाव भूत साचीकृताङ्गावरणादि सच्छन्द क्रिया सङ्कोचः। आसां शवलः सम्भ्रमौत्सुक्य हर्ष प्रेमव्रीडा शवलः (सम्भ्रमादीनां पञ्चानामपि भावानां परस्परोपमर्द्दक तया संमेलनेन भाव शवल इत्यर्थः) सः नयनयोर्यस्य तत् तथोक्तं। अत्र नयनयोभाव शवलाधारत्वन्तु सम्भ्रमादि तत्तद्भाव कार्य्य भूत कटाक्षादि विविधविकृति मत्त्व प्रयुक्त तत्तद्भाव बोधकता सम्बन्धेन इति बोध्यं ॥ उक्तञ्च । कार्य्य भूतोऽनुभावः स्यात् कटाक्षादिः शरीरज इति। अन्यच्च भ्रू विक्षेप कटाक्षादि विकारो हृदयस्थितं भावं व्यनक्ति यः सोऽयं अनुभाव इतीरित इति॥ सम्भ्रमादि भाव पञ्चकेन नयनयोः तत्तत् कार्य्यतया विकृति प्रकारस्तु सम्भ्रमेण तरलत्वं औत्सुक्येन त्रिभङ्गित्वं हर्षेण स्मेरत्वं प्रेम्णा मधुरत्वं व्रीडया जड़त्वमिति ॥ अत्र प्रमाण वचनानि तु प्रागेव प्रदर्शि-तानि। वक्तुं कर्म ईक्षे पश्यामि तस्मात् सोऽहमिति पूर्वेण सम्बन्धः तथाच स्वालम्बन विप्रलम्भ शृङ्गाराङ्ग भूत बहुविध भाव व्यञ्जके तत्तद्भाव कार्य्यभूतः शृङ्गार दृष्टि विशेष सविशेष मनोहर लोचनाञ्चित कृमी दृग्वदनदर्शनस्थानन्य सुलभस्य स्वसमभि गम्यमानत्वेन स्वयमेव इति धन्य इति भावः ॥

विमृश्य। सनिर्वेदं। हन्त अकाण्ड एव ताण्डवितं हृदयस्य।
ननु परिश्रमालसायाः समीरणागम इत्युत्थितिः सम्भा-
त एव।

कालिन्दी। मल्लिकायाः स्तनांशुकं धारयति। सहि! उट्-
ट्हि णं मए मन्दाणिलो एव्व ससिओ।

मारुतः। सपुलकं। किं नु खल्वेषा वक्ष्यति।

मल्लिका। सलज्जं सविषादञ्च। हला विप्पलद्धम्हि।

मारुतः। सहर्षं। उच्छिन्नोऽद्य संशयतन्तुः। हृदय।
सत्यास्ते मनोरथाः। पश्य।

कादम्बिनीमिवैनां कामय मानस्य चातकस्येव।
दिष्ट्या तवानुकूलो मदनो वीरः पुरः समीरइव॥

मल्लिका। कालिन्दी करोल्लासिते स्तनांशुके प्रतिच्छन्दमव-
लोक्य। सहि! मह विरह कादरी एसो एव्व सुलहदंसणो
माअओ उण सो!

---

(२०) इमामिति॥ उरसि भयं पूर्व्वोयस्य स इदं पूर्वः सचासौ सर्व्वश्चेति
कर्म्मधारयः तेन जातैः प्रचुर पुलकैः उड्डामरः घनस्तनाभोगः यस्याः
सा यथोक्ता तां बालां सदयं निर्द्दयमपि परिरब्धुं किमपि अत्यन्तं
आकाङ्क्षे इत्यन्वयः। अत्र परीरम्भस्य सदयत्व निर्द्दयत्वयोः बालां
(प्रचुर पुलकोड्डामरघनस्तना भोगां) इति पदद्वयं क्रमाद्धेतु गर्भं
बोध्यं अथवा परी रम्भस्य निर्द्दयत्वे प्राचुर्य्यं संमतस्य वा हेतुत्वं
यदुक्तं तैः। तन्वीबाला मृदुतनुरिति त्यज्यतामत्र शङ्का लोके मत्तभ्रमर
पतनान्मञ्जरी किं तु भग्ना तस्मादेषा रहसि भवता निर्द्दयं मर्द्दनीया
मन्दाक्रान्ता विसृजति रसन्नेक्षुयष्टिः समग्रं इत्यादिः।

मारुतः । विलोक्य । सानन्दं । सत्यमुक्तं भ्रमरकेण उत्तरीयाञ्चले दृष्टः प्रतिच्छन्द इति ।

दयितास्तनपरिरम्भ क्रीड़स्वच्छन्दमाः प्रतिच्छन्द ।
सत्यं त्वमेव धन्यो न वयं तद्विरहदहनदग्धाङ्गाः ॥

नवमा । निश्वस्य । भट्टिदारिए मेअक्कत्ति ओ समओ अदिवाहणिज्जो । णं कसिण वक्कचन्द मूत्तिव्व दिणे परिझ्झरिअ परिक्खआ लाअण्ण मेत्त सेसा एसा दे तणु वल्ली । इदो वरं ण कालक्खेवा सहो विरहि जणासुवला मोडिहरण णिग्घिणव्वा वारी मम्महो । णं जाणीअदि अस्स मम्मिजस्सिन्दि अहे खणे खणे परिवड्ढिदेह्मि अत्तणोवि अवसादो विअसिअ मन्दमहुरमुद्ध मन्थर थिमिअ तरङ्गिआकूणिउक्कण्ठिएहिं सविलास घोलिर सिणिद्ध कणीणिआ चुम्बिअं चलवहा कुवलइअकवोल मण्डलेहिं उद्दाम कोमल लज्जाणुवड्ढिअ गमणा गमणेहिं दिट्ठिवाएहिं तक्काल सज्जिअ मअरद्धअ धणुम्मुक्क तणुमग्गकलम्ब कअम्बअ पुङ्ख सङ्कीणज्ज णीरन्ध बहुल पुलउब्भेद जज्जरिज्जन्तसेअ सलिल संखालिअं गराअ वाअड लाअसादि सआए भट्टिदारिआए दिट्ठो तारिसावत्थो सोजण णअण णिम्माण वम्महो मारुओ । तदप्पहुदि तच्चिन्तालम्बणं हिअअं तप्पडिच्छन्द दंसणा लम्बणं णअणं तव्भुसण धारणा लम्बणं सरीरं तत्राह पच्चासा लम्बणं जीविअं धारयन्ती वलित्तवापअत्त विज्जु मालेव्व कञ्चण सलाआविअ पड़िक्खीणावि विसेसरमणिज्जाहोइ । अविअ भवणङ्गण चङ्कमणे सह चरण पल्लवावि मणिसोपाणपरं परारोह कम्पिरत्थणरअण

कुम्भभर दूमाविआ । कोमलोरु जुअल खेअ णीसरन्त णोसास तण्डविअ वेरन्त लआवल्लवा । कीलापव्वअ सिहरं आरुहिअ मज्जणाव मुक्कवेअंडवर सुण्डा तुङ्गार धूलि-रेहा सूइअ सण्णिवेसं तस्स एव्व सिविर पदं पुलोअअन्ती । ईसिसुणिज्जन्त गम्भोर मुअङ्ग घोस साअर दिण्णकण्णा । साअर मज्भणिज्जन्त गज्जन्त जलहर सद्दुल्लासि एव्व । सिहण्डिणी किंवि हरिस परवसा । णिप्फन्द विअसिअ लोअणुप्पल किरण ताविंच्छिअ गअणं कणा । दिअहे दिअहे सुहरं ठाइ । दुरेक्खुहीं दोल गण्डुअ गुणणिआ सुहेसु कीलासाहणेसु वावारो परिअण चरण पड़ण पत्थण णिव्वन्धेहिं एव्वन्तुणादि एवि पवट्टइ । ण भणिदव्वं णिस-न्दिच्छहार सबिन्दु कराल जोव्भा वरिस संजोविअ जीवलोअं चन्दमण्डल पेच्छेत्ति । सेरंधी करधिअं मङ्गल फड़िआ दसिअ पडिवि विअं णिअ वअणं वि दट्ठुण चन्द-भय वेविरंगी दीहर दीहरेहिं णीसास पवणेहिं मइ लीकरेइ । कीलिघर मौत्तिअ हित्ति किरण संपक्के वि चन्दादव संकिणी मुद्ध किसलअ कोमलं करअलं आद-वत्तं करेइ । रत्तीअ रत्तीअ हिमजल मौसालिअ घण सार चच्चिअ सौअमअ ण मणाक्कलिअ कुसुम घलण पाड़िअ सरीरा । उवभाएउत्ताणिअ करकमलणिच्छिता वांगदेस घोलन्तवाह चिलि चिलिआ सिंचन्त पण्डर गण्डमूल पलुट्टि चिउरं चलम्मि लाअन्त तव्वा हरदूसह णिग्गम नीसास पवण णच्चिअ मङ्गल दीवसिहा पलुवं समाण दुक्ख घरदेवदा सअल णअण णिव्वसिअ तारिस विअण तिसिअं

असंपत्तच्चि पडणाल्लश्च णाहिश्च णिस्सुढ़ा सीढ़इ। श्च
कहं कहंवि लद्धणिद्दा सिविणश्च संभाविश्च पिश्चसंगमो
ज्मिसन्त वग्रह सलिलसेश्च परोहन्त पुलश्च कण्ठइश्च कले
वरा। कोमल हत्थ जुश्चल सोत्थि दाणा पिहिश्च घण
सिहणात्थण मण्डला ईसि विलम्बिश्च नीसरन्त सीम्क
णीसास णिवेदिश्चा णंदविसेसा खणं निप्फंदा होइ। तदो
मन्द मन्द सुक सिक्कार जज्जरिश्च दन्तकुन्द जोण्हा कुसु·
मिश्च विम्बाधर णिरोहवावुडेक्क करकमला परोप्पर णिविड़
संवड़िश्च सिज्जन्त पीवरोरु जुश्चल विलुलिश्च णिश्चंव दुजव
दर सिढ़िल णीविवंध कंभणप्पसारिए दर पाणिपल्लवा
श्चपरिप्फुड़ क्खरं किं वि किं वि मन्तश्चन्दी पड़िवुज्माइ
णाह मारुश्च! कीस मं परिरच्चइश्च भश्चलिति वाहर·
न्तीए एव्व पडिबोहो एश्चारिसं तुह पश्चत्तं एव।
पुव्वे जूउण श्चपरण्हे जालातुमं श्चसुमं गश्चासि·
ताला साश्चंतण मज्जणुत्तिण्ण कुसुमचर सुन्दरी णिउरंचल
सिहर भमर मन्थरे तक्काल विघड़न्त विश्चइल मणण
सोर हुंकार झुरझुरे पदि उप्पउत्ते गंधवहकिसोरे श्चवि·
श्चाद कारणं झत्तिठिश्चं कण्ठे मं गाढ़ं गाढ़ं श्चालिङ्गिश्च
सहि! णोमालिए मस्सेहि एदं परमं परिरंभं कहु·
णिज्जोश्च तह विहसन्त पुण्डरीश्चदल विसाल लोश्चणो
परव्वस णाण भिसो सो जणो। जह मं जण्णंतरेवि
श्चण्णाणुरत्त हिश्चश्चं मसो इत्ति वापक गमश्च कण्ठीश्चन्दि
सिश्च मरणम्मि किश्चणिज्जश्चा भवणं कप्परूढ़स्स वाल·
कङ्क लिदुदुमस्स तरुणिमगव्विश्चश्चेरस विलासिणी दुल·

ज्वर सोढ्म साहसिलाइणिज्जं भंपन्त चम्पअ मञ्जुल सोअल मुहरं पल्लव कुडुङ्गं करअलेन फंसिदुं आढ़त्तवदी ॥

कालिन्दी। सवाष्पं। कर्णौपिधाय ण इदीवरं सुणिअ साहससीलाए वुत्तन्दं।

नव। अह भट्टिदारिए जइ एव्वं एदा उण सव्वा पावअं पविसह्मत्ति क्खिअपडिणाणाणं चरणंबुअ पल्लव्य केसअब्भं पणामंतीणं अह्माणं सहीणं निव्वन्धेण दक्खिण हिअआ कहंवि पच्चाणीदा।

मारुतः। सानन्दं सकरुणञ्च।

अस्या निशम्य निजजीवित निर्व्यपेक्षाः
प्रेमप्रकर्ष पिशुना ललिता विचेष्टाः।
हा हन्त घोरमदनज्वर गाढ़ तप्त
मामोदते मम मनः परिदूयते च ॥ (२१) ॥

अहो महानयं प्रमादः।

नव किसलय मुग्धं गात्रमेतन्मृगाक्ष्याः
पवनचलित जातीसूनपातात् सहिष्णु।
अपि कुलगिरि कूटस्थेमभाजां जनानां
असु विमथन चण्डामान्मथास्ते पृषट्काः ॥

---

(२१) अस्या निशम्य इत्यादि। मम मनः कर्तृ आमोदते सन्तुष्यति परिदूयते खिद्यति च। अत्र नायिकायाः स्वविषयक प्रेमप्रकर्ष पिशुन चेष्टा श्रवणात् स्वमनस आमोदः। निजजीवित निर्व्यपेक्ष चेष्टा श्रवणात् खेदः। इति साभिप्रायत्वं चेष्टाविशेषणद्वयस्य अतः परिकरोऽलङ्कारः।

नव । किं बहुणा पुणो पुणो पट्ठाणं मुहं कण्ठलग्गं जीविग्रंवि एसो महाभाग्र वच्छट्ठल संसग्ग सूहवो हारो एव्व सग्रंवि कण्ठलग्गो करेदि ॥ इति मल्लिकाया कण्ठे हारं दर्शयति ।

मारुतः । सस्पृहं ।

ब्रूहि ब्रूहि प्रियसख समाप्यम्बुभाजा त्वया प्राक्-
मुक्ताहार स्थिरविरचितं तत्तपस्या प्रकारम् ।
येनोत्कण्ठा धवलिमधुरे कण्ठमूलेनु यत्नाः
सारङ्गाच्या स्पृशसि हृदयं श्लिष्यमाणस्तनाभ्यां ॥ (३२) ॥

नव । अञ्जलिं बद्धा मल्लिकां प्रति । सहि वसिमग्गं कुलग्रं णाग्राणंविगन्धव्व विवाहा सुणिज्जन्ति तेसु तेसु इतिहासेसु । ता पेसणिज्जा ग्रहं कालिन्दी वा ग्राणइ ग्रामो गूढं तुइ हिग्रग्र वल्लहं जणम ।

मल्लिका । सनिश्वासम् । अपरिक्खिदाणुराए तस्सिं

---

(३२) ब्रूहिब्रूहीति । ब्रूहि ब्रूहि इत्यादरात् द्विरुक्तिः । मुक्ताहार इति माल्य सम्बुद्धिः । अन्यत्र मुक्तः आहारो येन तस्य सम्बुद्धिः । अत्र मुक्ताहारं प्रति मल्लिकायाः कण्ठमूल स्तनहृदय संस्पर्शरूप फलप्रदः कोनु तपो विशेष स्त्वयानुष्ठित इति मारुतस्य प्रश्ने प्रस्तुते अप्रस्तुतः । प्राग् जल मध्यवर्त्तनेन नारीवशङ्कर चामुण्डादि मन्त्र-साधन तपस्या मनुष्ठाय तत् फलतया काम्पि साध्यनायिकां कण्ठग्रह स्तनाश्लेष हृदय स्पर्शादिकामवेद विधि विधानप्रकारेण अनुभुञ्जानं कञ्चित् प्रियवयस्यं नायकं प्रति अन्यस्य अनाहार जल प्रवेशादिना प्राक् त्वदनुष्ठित नारीवशङ्कर तपस्या प्रकारं मम ब्रूहीति सादर मनुनयः प्रतीयते । इति समासोक्तिरलङ्कारः ।

जणो कहं णु पेसिज्जइ जइ सो अज्जसहस्स हिअओ हवे-
ताणो वरयत्त (प्रयत्न) चावलं एव्व सिक्खइ ।

मारुतः । सावक्षेपम् ।

मा मा त्वदेक जीवितं आशङ्केथा स्त्वमन्य सक्तं मां ।
इच्छत्येरण्डलतां लोलम्बः किन्तु कमलिनीं लब्धुम् ॥(२३)॥

कालिन्दी । स्वगतम् । एदाए अप्प णअणेहिं अदट्ठुण
सव्वहाणा पअयो होइ । प्रकाशम् । णं भणामि पआसिदं
एव्व अणुराअ सव्वस्सं पुणो सिहामणिदाणेणेत्ति । शिखा-
मणिं करतलेन परामृशन् । तदिदं हाटकेति पठति

मारुतः । अहो विधेरतिदुर्घटस्यापि घटने पटी-
यस्ता । क्वायं सिंहलद्वीपस्थो मणिः क्व यं मगधपुरमण्डने
मल्लिका । मणिं प्रति ।

आवां द्वावपि रक्तौ तव पुनरन्या शिखामणे नियतिः ।
यत् सुरभिनीलमस्याः कराञ्चले नालकान्तमामुष्णसि (२४)॥

---

(२३) मामेति । पूर्व्वार्द्धस्य स्पष्टोऽर्थः । तथाहि लोलम्बः भ्रमरः कमलिनीं लब्धुं इच्छति । इति काकुः। किन्तु आहोस्वित् एरण्डलतां लब्धुमिच्छति इति योजना । दृष्टान्तोऽलङ्कारः ।

(२४) आवां द्वावपीति । रक्तौ अनुराग विशिष्टो वर्णविशेष विशिष्टश्चेत्युभयम् । अत्र शिखा मणिं प्रति आवयो रक्तत्वेन साम्येऽपि सुरनील नायिकाकच स्पर्श प्राप्तिरूप विधि सहायवत्तयात्वमुत्कृष्टोऽसीति मारुतवचने प्रस्तुते कयाचिन्नायिकया सह कचग्रहाद्य सम्भोग विशेषमनुतिष्ठन्तं कञ्चिन्नायकं प्रति अन्य नायकस्य असूया वचनं अप्रस्तुतं प्रतीयते इति समासोक्तिः । समासोक्तिः परिस्फूर्तिः प्रस्तुते ऽप्रस्तुतस्य चेदेति लक्षणात् ।

नेपथ्ये । कालिन्दि ! अत्थि भअवदीए आदेसो ।

सर्वा आकर्ण्य । सारिसि आए विअ सरो ।

कालिन्दी । मम्हे भअवदीए आहूदम्ह । ताअत्ति गच्छम्ह ।

मारुतः । आकर्ण्य सविषादं । अहो विधेर्वैलोम्यम् ।

तृषितचकोरकचञ्चौ पतिता यच्चन्द्रिकेव जलदेन ।
अपनीयतेऽक्षिपथतश्चिरकाङ्क्षित लब्ध दर्शना सुमुखी ॥

सर्वा निष्क्रम्य लतागुल्मान्तरिताः प्रविशन्ति ।

मल्लिका । कालिन्दि ! अवि सच्चं मारुओ एत्थ वट्टइत्ति ।

कालिन्दी । कहं भणिस्सदि सारसिआ ।

नव । सहि ! अज्ज सोम सरम्मि ण्हादुं गच्छन्तीए एदाए किं ण तुह कसो कहिअं ।

कालिन्दी । स्वगतम् । ण कहइस्सं सब्बरअस्स अविणअं उब्भिसं खु मन्तवीजं ण फलसस कप्पइ । प्रकाशम् । णं एदं एव्व अदिमुत्तलआमण्डवे णिउड्ढो वट्टइत्ति ।

मारुतः । हन्त गतैव मल्लिका ससखी । निर्गच्छति ।

मल्लिका । दृष्ट्वा सहर्षम् । हन्त जलहर मण्डलादोविअ चन्दो णिग्गओ लआमण्डवादो मारुओ । सशङ्कम् । हन्त एक्कोएव्व । णं हिअअं मण्डव सञ्चारिणीए पिअसहीए एव्व ससहाओ मारुओ ।

मल्लिका । अहो मणोरहाणं आदिप्पसङ्गो ।

कालिन्दी । कोएत्थ अदिप्पसङ्गो । णं तुमं एव्व दट्ठु कामो वञ्चिअ सअल परिअणो लआ मण्डवणिउड्ढो एत्थ एक्को एव्व वट्टइ ।

मल्लिका। सानन्दम्। हुं जइ एव्वं आअसिदाइ खु-
तेण धीरहि अएण तेण वअणाइं अह्माणं वअणाइ।

नव। सहि अह्मेवि सुणिस्सामो एदस्स मअण
ज्जर गाढ़तत्तस्स तारिसाइं एव्व वअणाइं।

मल्लिका। सप्रत्याशम्। अवि एव्वम्। निर्वर्ण्य। सहि
अज्ज पड़िच्छन्दं अणुहरइ एसो। संस्कृतमाश्रित्य। वर्णा-
न्तरेणेति पठति

मारुतः। सोत्कण्ठम्।

प्राथमिकी घनवृष्टिः प्राप्ता शिखिना निदाघतप्तस्य।
आकस्मिकेन सा पुन रपनीता क्वापि पवनेन। (२५)

नव। सहि। अविदइं महाभाअस्स वअणम्।

मल्लिका। णोमालिए! अणिवुभिसाभिप्पायं खु एदं।

मारुतः। स्मरपीड़ां नाटयन्। यावत् तस्याश्चरणाम्बुजा
क्रान्तदेश माश्रयामि।

मल्लिका। साशंसम्। का णाम तं कहेण सम्भाविस्सदि।

मारुतः। परिक्रम्य। अत्र कुसुमान्यपचितानि
मल्लिकया।

मल्लिका। सपुलकम्। स्वगतम्। अह्महे महणामम्महण
मेत्तेण रोमञ्चिआ तणुयट्ठी।

---

(२५) प्राथमिकीति। इह अप्रस्तुतेन शिखिवृत्तान्त कथनेन मारु-
तस्य स्वकीय गाढ़कठोर स्मर सन्तापानन्तर सद्य प्रथम दर्शनाया
मल्लिकायाः मन्दाकिन्या स्नान रूप प्रतिबन्धकवशात् निर्गमनरूप प्रस्तुत
वर्णनं प्रतीयते इत्यतोऽप्रस्तुत प्रशंसालङ्कारः। अप्रस्तुत प्रशंसा स्यात्
सा यत्र प्रस्तुताश्रया इति लक्षणात्।

मारुतः ।

एता धन्यतमा लता नखमुखैः सूनानि संगृह्णती
सा सर्व्वाङ्ग सुगन्धिरिन्दुवदना याः स्पृष्टवत्यात्मना
वृन्तग्रन्थिषु तत्र तत्र लगता मद्यापि माध्वो लिहां
रावैर्हन्त रुदन्ति तत् करतलस्पर्शेन दूरीकृताः ॥ (२६)

मल्लि । महुर महुरं वस्सिउं जाणइ महाभाओ

मारु । अधो विलोक्य ।

लाक्षाङ्कैरनुमीयते तत इतः सुव्यक्तमग्राङ्गुलि
न्यासैरत्नलताग्रपुष्पहरणे यत् तत् पदाग्रस्थितं ।

अन्यतो विलोक्य ।

एता हन्त परिच्युता सुमनसो मत्तालिमालाभय
व्याधूतात् करपल्लवादिह पुनस्तस्याः कुरङ्गी दृशः ॥

मल्लिका । सलज्जस्मितम् । अम्महे सव्वं पच्चक्खो किम्
एव्व महाभाएण ।

---

(२६) एता इति । नख मुखैः सूनानि संगृह्णती सर्व्वाङ्ग सुगन्धिः इदं साभिप्राय विशेषणं पद्मिनीत्वादिति भावः । यदुक्तं सुरत पयसि यस्याः सौरभं दिव्यमङ्गे इति । सा इन्दुवदना मल्लिका या लताः स्पृष्टवती अतएव धन्यतमाः एता लताः इदमेव कष्ट तस्याः मल्लिकायाः करतल स्पर्शेन दूरीकृताः विरहिता सत्यः तत्र तत्र वृन्त ग्रन्थिषु तत् करतल स्पृष्टेषु निखिल कुसुम-बन्धनेषु अद्यापि लगतां कूजतां नायिकायाः सर्व्वाङ्ग सुगन्धित्वात् तत्करतल स्पर्शेन वासनावत्सु वृन्तेषु गुञ्जतामित्यर्थः । अन्यथा वृन्तानां गन्धाभावात् गुञ्जनानुपपत्तिरिति भावः माध्वीलिहां आत्मना भ्रमराणां स्वरूपेण रुदन्ति इति मन्ये इत्युत्प्रेक्षा हन्तेति खेदे ।

नव। सहि! किं अज्जवि अणिब्भिणो एव्व अहिप्पाओ।

मल्लिका। सव्वाआर महुरस्स णिसग्ग पेसलेहिं आलावेहिं णासंकिज्जइ उब्भिणो विसेसिणिदुम्।

मारुतः। स्मृत्वा। अयि प्रियतमे! मल्लिके! सर्वथा अनाश्वास शीलासि! यतस्त्वत्कटाक्ष लवप्रतीक्षस्यापि मम हृदय मन्यसंक्रान्त माशङ्कसे।

सख्यौ। सुणादु तस्स हादो एव्व पिअसही।

मल्लिका। सहर्षम्। महाभाअ! अज्ज आसासिदं एव्व जं पियदमासहेण अक्कारिदह्मि।

मारुतः। तदिदं त्वदङ्गकेष्वेव परिवर्त्तमानं कथं नाम न जानीषे। तथाहि मे।

लग्नं पादतले नखेषु विलुठत् संसक्त मूर्वोर्युगे
विश्रान्तं जघनस्थले निपतितं नाभौ सरोमस्थले।
शून्यं मध्यमवेक्ष्य रोमलतिका मालम्बमानं क्रमा
दारूढं स्तनयोः प्लुतं नयनयोर्लीनं मनः केशिके॥ (२७)

मल्लिका। आकाशे। भअवं णिक्कारण कारुणिअ रइरमण पमज्जिओ एव्व तुए (२८) अवालाजन दंसि एकं

(२७) लग्नमिति। मनःकर्त्तृ नयनयोः प्लुतं मण्डूकवत् किञ्चिदुड्डीय पतितमित्यर्थः। तथाचात्र मनसः एवमेकस्थानव स्थिति प्रतिपादनेन उन्मादः सूच्यते।

(२८) अपालाजनेषु अतितरुणी जनेषु दर्शितं यत् एकान्त निष्ठुरं त्वं नियमेन क्रूरत्वं तेन निरूढ़ विरूढः प्रवादः अपवाद इत्यर्थः। (अपाला

तणिट्ठुत्तण णिरूढ़ो पवादो जेण एव्वं विहाणि पण-इवअणाणिवि सुणाविम्ह ।

मारुतः । परिक्रम्य । तदेतत् प्रियतमा वस्थान धन्यं लतामूलम । यत्र नवमालिकया वर्णितो रमणीयो धृति कम्पदश्च तस्या मान्मथो व्यतिकरः । यावदत्रीपविशामि । अभिश्रावम् । सखि ! नवमालिके ! ।

नव । भट्टिदारिए ण सक्कुणोमि महाभाएस गहिअ णामावि आणवेहिन्ति उवसप्पिदुं ।

मल्लिका । मा मा पच्चासेहि सुणिज्ञामो खणं एदस्स सौसं भालावम् ।

मारुतः । पश्य ते प्रियसख्या उपालम्भं । यत् पर-व्यसनानभिज्ञं मां मन्यते । न मन्यते पुनर्ममाप्यवाङ्मनस गोचर मसुमनङ्ग ज्वरोद्दाहं ।

(१८)मया विश्रूयन्ते श्रवण ।परुषाः कोकिलरवाः
समीराः सह्यन्ते चलित नव माकन्द कलिकाः ।

---

कीर्त्तितानि तरुणीत्यय मूचे इति मङ्गत् प्रयोगः) एवञ्च जीनं मनः कैयिके इत्यादिकाऽनेक विधत्वदुपरचित वाधा वाहुल्य सूचक मत् प्रियतम व्याहाराणां श्रूयमाणत्वे न तव युवपुरुषेष्वपि नितान्त निष्ठुरत्व स्फुटीभावात् त्वं युवति जनानेव निर्दयं पीड़यसि नैवं युव जनानिति प्राक्तनोऽपवादस्तव मिथ्याभूत एव समुत्पन्नोदिति भावः । निष्कारण कारुणिक इति सम्बुद्धा एवंविध प्रणयिवचन श्रवणहेतुत्वेन त्वया मम महोपकारः कृत इति भावः ।

(१८) मया विश्रूयन्ते इत्यादि मूर्च्छाव्यतिकराः मोहविशेष जल

तथा निस्तीर्थन्ते निशि निशि सुधा पिच्छिलकरे
सन्निधाने चन्द्रे कति कति न मूर्च्छा व्यतिकराः ॥

मल्लिका। सानुतापम्। अह्महे मह किदे तेल्लोक्क मङ्गल
न्दरंगस्स एदस्स एआरिसं वसणन्ति ण जाणिदं मए।
ाश्रम्। अहवा जाणन्तीवि किं करेमि।

नव। जनान्तिकम्। कालिन्दि! एसाखु भट्टिदारिआ
वक्खिअ मारुआणुराआ गुरुअण वसे वट्टन्ती ण पारेइ
अं एव्व अप्पाणं समप्पिदुम्।

कालिन्दी स्वगतम्। जुज्जइ सरिसं खु एदं विसुद्धस्स
लकस्सआ सहावस्स। अविदु कालक्खे वा सहो मअ-
ओ। ता एव्वं भणिस्सं। प्रकाशम्। सहि मल्लिए एव्वं
णुरत्तो तुइ सअल जण णअणाणंदो महाकुलप्पसूदो
ारुओ पलआणलकप्प कंदप्प सरपडण ढ़ज्जन्त सुउमारङ्गो
लिअं खु किलं मइ। ता जइ खणंवि उवक्खिज्जइ
ासे अणुवंद एव्व मोहोवा अस्सं किम्बिवा भविस्सदित्ति।

मल्लिका। सखेदं। मा मा अमङ्गलाइ संकेसि। इति
ाणं ध्यायति। प्रविश्य चित्रफलकहस्तो भ्रमरकः। णाह!
इव्वगन्धेण लोआ मां जाणइत्ति मालिआ णाणीदा चित्त-
लअं उण एदं। इत्यर्पयति।

मारुतः। भ्रमरक! उपायज्ञोऽसि। इति चित्रफलक-

---

सनानि इत्यर्थः। अथ व्यतिकरः पुंसि व्यसन व्यतिषङ्गयोरिति
दिनी।

मादाय । यावत् चण लब्ध प्रियतमा दर्शनयोर्दृशोर्यु
मानन्दयामि तत् प्रतिच्छन्ददर्शनेनापि । निर्वर्त्तयति ।

कालिन्दी । मर्षे तं एव्व एदं चित्तरम्मण जं भमरए
कहिअं । सर्व्वाः सविस्मयं पश्यन्ति ।

नवमा । वेच्छ वेच्छ अच्चेरं विअडसिहर सहस्स मण्डि
कोवि कोवि गिरीन्दो लिहिओ । पुनर्निर्वर्ण्य । तस्सिं
हंसकवलिअ विमल सलिलो कोवि णिज्झरो वि । सहर्ष
एदस्स उण तीरुज्जाणघरम्मि अदिट्ठ अरोहिं दिव्वरूवा
सहअरीहिं परिवुदा पिअ सहीवि एसा ।

मारुतः । भ्रमरक ! एतद्दर्शनादारभ्य विस्मय स्तिमित
मे हृदयं । कथं द्वीपान्तरस्थेन चित्रकरेण मल्लिका दृष्टा
कथञ्च सा दिव्यजनचं क्रमोचिते पर्वते लिखितेति । पश्य

शैलेन्द्रो हिमवानयं प्रतितटं विद्याधरै राश्रितः
क्रीड़द्दिग्गज गण्डदान कलुषा सेयञ्च भागीरथी ।
अस्यास्तीर लता गृहे पुनरसौ मध्ये सखीमण्डलं
क्रान्ता कन्दुक खेलनेन लिखिता मज्जीवितं मल्लिका ॥

मल्लिका । सोत्कण्ठा कारणं । अम्महे चिरपरिद्दिओ वि
एसोपदेसो एदाओ पिअ सहीओ ।

नव । सासूयमिव । अम्मो कह ण लिहिया ए
सही मण्डले ।

भ्रम । सच्चं भणिदं णाहेण । गन्दुअखेलणेण कि
लिन्तेति । एदाए उण पल्लव पाडलम्मि करअले कम
विअ राजहंसो लक्खिज्जइ मोत्तिअ गन्दुओ

मारुतः । निर्वर्ण्य सस्पृहं ।

विश्लिष्यन् पतयालुरंसविधृतो धम्मिल्लभारो महान्
घर्माम्बुच्छुरितं मुखं स्तनतटोच्छ्रितच्युता कञ्चुली।
नीवीकिञ्चिदिव श्लथा मणिमयी विस्रंसिनी मेखला
ड़ान्ते सविशेष सुन्दरमिदं तन्व्या वपुर्लङ्घयते॥

नव। भट्टिदारिए एदं दट्ठुण अह्माणं णीलापव्वम्र
लणाणि सुमरिज्जन्ति।

मारुतः। समदनोन्मादं। अस्याः खलुः।

सालस नयनान्तं खिन्नालिक लग्नकुन्तल स्तवकम्।
दन मवलुप्त तिलकं मदनं नेदयति द्रवयति धृतिं मे॥(१८)

मल्लिका। सेर्ष्यं पराहत्य। सहीओ अवि सच्चं अहं एव्व
तहिदम्हि।

नव। जनान्तिकम्। कालिन्दि! वेच्छ णिअं पाड़-
छन्दं असोत्ति संकंती ईस मुसमि आलि अपड़िआ लग्न-
र्ल किअ सुन्दरवअण कमला भट्टिदारिआ। प्रकाशम्।
दि माणिणि! मा कुप्प माकुप्प किं णदिट्ठा वामकुम्र-
प्प पल्लत्था सहम्रा मालिआ।

मल्लिका। विलोक्य सलज्जम्। हति जाणिदों एदाहिं
हईसा कलुसिदो भावो।

मारुतः। सानुकम्पम्। हन्त न विरमत्यस्याः परिश्रमः।
मरक! आनीयतां नातिदूर भाजः सोमसरसः कम-
नी दलानि। यावदहं शनैः वीजयामि।

---

(१८) खिन्नालसेति। नेदयति सन्निभापयति द्रवअति दूरीकरोति
र्थः।

सख्यौ । भट्टिदारिए दिट्ठिआ वड्ढामो महाभा
परिअणो विअ तुह वोअणं मि पवट्टइ ।

मल्लिका । अहं विअ एसोवि सच्चं पड़िच्छन्दं मणे इ

भ्रमरकः । सविषादम् । णाह ! वित्तं क्खु एदम् ।

मारुतः । भ्रमरक ! सत्यमात्थ ।

क्वचिदभ्रं क्वचन घनः क्वापि सरोऽन्यत्र कुवलय द्वन्द्वम् ।
एकत्र चापवल्ली परत्र मौर्व्वीति चित्रमेवेदम् ॥ (४०)

मल्लिका । स्वगतम् । हन्त अज्जवि ण णिवुत्तो ए
अणुरत्तं पच्छा गदुअ परिरक्खु कामह्मि ।

---

(४०) क्वचिदभ्रमिति । भ्रमरकेण स्वोक्त्यार्थकतया चित्रमित्यु
तस्य स्वयमद्भुतार्थकतामभिप्रेत्य तथात्वमेव समर्थयन्नाह । क्वचिदि
क्वचिदेकत्र अभ्रं गगनं क्वचन अन्यत्र घनः मेघः क्वापि एकत्र सर
अन्यत्र कुवलयद्वन्द्वं एकत्र चापवल्ली परत्र मौर्व्वी ज्या इति हेतो
इदं चित्रमेव अद्भुतमेवेत्यर्थः । लोके हि सुप्रसिद्धतया सह भा
मापन्नयोः अभ्रघनयोः सरः कुवलययोः चापमौर्व्योश्च साम्प्रत मभूतपूर्व
पृथक्त्वेन वर्त्तनमिति हेतोरद्भुतमेवेति भावः । अत्र अभ्रघन स
कुवलय चापलता मौर्व्वीपदैः क्रमात् मध्यकच नाभिनेत्रभ्रू कर्णपाशा
सङ्ग्रहः । मौर्व्वीपदेन रोमलतायाः वा सङ्ग्रहः क्वचित् रोमलताया
रज्जुसादृश्येन वर्णनात् । यथा, स्तनकनक कलसयुगलीं पूरयि
नाभिकूपकान्यस्तं चिपा यौवन कल्पग्रा रज्जुरिवाभाति रोमरेखे
इत्यादि । प्रकृते उपन्यस्तानां अभ्रसरश्चापानां घनकुवलयमौर्व्वीणां
क्रमात् परस्परमाधाराधेय भावेन एकत्रवर्त्तनं लोकप्रसिद्धं इह पु
तथात्वेन एकैकस्य एकैकत्र वर्त्तनं इति इदं अप्रसिद्धं आश्चर्यमेवेति
भावः । रूपकातिशयोक्तिरलङ्कारः । रूपकातिशयोक्तिः स्यान्निगी
र्याध्यवसानतः इति लक्षणात् ।

सख्यौ । सहि ! अज्ज तुमं एव्व परव्वसणं ण जाणासि ।

भ्रमरकः । णाह ! णं भणामि पड़िच्छन्दो एसोत्ति ।

मारुतः । सखेदम् ! किं प्रतिच्छन्दएव । हन्त !

अतिदुर्लभां सुधांशोरम्भः प्रतिविम्बितां मूर्त्तिम् ।
चापलमस्यनुकृतवान् वालस्यादातु कामस्य ॥

सोत्कण्ठा मोहसन्तापम् ।

आश्लिष्टः प्रलयानलैः किमथवा स्पृष्टः पटीरानिलैः
आहोस्वित् परितो वृतोऽस्मि सकलैः सम्भूय चन्द्रातपैः ।
जाने नाहम किं पचा न विभवः कोऽप्यङ्गमङ्गं दहन्
रुन्धानः करणान्युदेत्य विरतं तापोनु मोहोनु वा ॥(४१)

सोन्मादम् । भ्रमरक ! कोऽयं प्रदेशः

सर्वाः । सावेगम् । अह्महे महन्तोखु पमादो ।

मल्लिका । सहीओ ण जाणें किं मए दाणिं कादव्वंति ।

भ्रमरकः । सभयं । णं वसन्त वणुज्जाणं एव्व ।

मारुतः । परितो विलोक्य । युज्यते एतत् ।

अयमयं हि तरुण माकन्दतरोर्मूले ॥ (४२)

---

(४१) आश्लिष्टः प्रलयानलैरिति । अहं न जाने इत्यन्वयः । किन्तु ायमानमिदमित्याह । अकिम्पचान विभवः अक्षुद्रमहिमा कोऽपि निर्वचनीयः अङ्गमङ्गं प्रत्यवयवं वीप्सायां द्विरुक्तिः । दहन् करणानि न्द्रियाणि रुन्धानः विषयेभ्य प्रवर्त्तयन् तापः ज्वरो नु मोहोनु वा ोः रय्युक्त गुणवैशिष्ट्येऽतुल्यत्वादन्यतरत्व शङ्का अविरतं उदेति अन्वयः ।

(४२) वसन्त वनोद्यानत्व मभ्युपेत्य तत्र हेतुमाह । अयमयं हि

सन्धाय पञ्चचास्त्रं भ्रं कुर्व्वन् मौर्व्विकार्म्मुकं मदनः ।
कर्षति रति कुचमण्डल काठिन्या द्वैत साक्षिणा दोष्णा ॥
(४२) असुहरणोद्यत मेनं यावत् क्षण विलम्बाय प्रार्थये ।

साञ्जलिबन्धम् ।

अयि शृणु चरमं मे प्रार्थनं पुष्पकेतो-
क्षणमिव विरमास्मादुद्यमादञ्जलिस्ते ।
सकृदवहितबुद्धि स्तामनदन्ताम्बरं तद्-
वदनमलसनेत्रं मल्लिकायाः स्मरामि ॥

इति नयने निमीलयन् मोहं नाटयति ।

---

तरुण माकन्दतरोर्मूले सन्धायेति । हि यस्मात् अयमयं इत इतो दृश्यमानः (इति हस्ततो निर्देशः ।) त्रासाद्विरुक्तिः । उभयत्रोक्तञ्च । इदमस्तु सन्निकृष्टमिति । संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगइति च । मदनः कर्त्ता तरुणमाकन्दतरोः तरुणचूतवृक्षस्य मूले पञ्चानां पूरणं पञ्चमं नान्तादसंख्यादेरिति डटो मट् । तच्च तत् अस्त्रञ्च तत् सन्धाय संयोज्य । कार्म्मुकं धनुः कर्म्म भ्रं कुर्वती मौर्वी यस्मिन् कर्म्मणि तद्यथा भवति तथा भ्रं कुर्वन्मौर्वि । अथवास्य कार्म्मुक विशेषणत्वेनान्वयः । रति कुचमण्डल काठिन्याद्वैत साक्षिणा स्वप्रिया स्तनमण्डल कार्कश्या-ऽभेद शंसिना स्वानुभूत तत् कुचमण्डल काठिन्य सदृश काठिन्य प्रकाशके-नेति यावत् । स्वस्य अविरहित्वाद्विरहि दुःखविचारं विना क्रौर्य्य धुरं धरेणेति भावः । दोष्णा करेण कर्षति तस्मात् युज्यते एतदिति पूर्वत्र सम्बन्धः । भ्रं कुर्व्व भ्रमर सम्भृत कुसुम पूरित माकन्ददर्शनादियमुक्तिरिति बोध्यं ।

(४२) यावत् प्रार्थये निश्चयेन प्रार्थयामीत्यर्थः । यावत् पुरेत्यादिना यावदिति निश्चयार्थको निपातः लट् च ।

मल्लिका । सकरुणानुराग सम्भ्रमावेगम् । हन्त मुज्झन्ती विश्र दीसइ । सर्व्वाः सत्वरमुपसर्पन्ति ।

सख्यौ । सहि । धारेहि उच्चं गेण ।

मल्लिका । सपुलक मङ्के धारयति ।

भ्रम । दृष्ट्वा सानन्दम् । प्रणम्य । स्वगतम् । एदावि इह ठिश्रा । प्रकाशम् । दिट्ठिश्रा संपत्ताहो तत्तहोदीश्रो ।

कालिन्दी । णोमालिए । करश्रल मण्डिश्रकप्पूर पल्लव सारेण णिगाल हिसे सिञ्चह्म । उभे तथा कुरुतः ।

भ्रमरकः । णाह पड़िबुज्झश्च णं तत्तहोदीए मल्लिश्राए सश्रं धारिश्रोसि । पुव्वंवि तेसु तेसु मुज्झाश्र मेसु एदाए णामग्गहणा मेत्तेणेव्व पड़िवुज्भसि ।

मल्लिका । सकम्पं करतलं वक्षसि निधाय । महाभाश्र ! किं ण सुणिज्जइ भमरश्रस्स वश्रणम् ।

मारुतः । प्रबुध्यमानः सरोमाञ्चम् । स्वगतम् ।

स्पर्श एष हृदयङ्गमः सुधावर्षवद्वपुषि को विभाव्यते ।
चन्द्र चन्द्रमणिहार मालती गन्धसार घनसार शीतलः ॥४४

चक्षुषी उन्मील्य पश्यति ।

सखौ । सहि ! दिट्ठिश्रा वड्ढामो जो णहा

---

(४४) स्पर्शएष हृदयङ्गमः सुधेति । चन्द्रस्य चन्द्रमणिहारस्य मालती-जातीकुसुमानि च गन्धसारः चन्दनरसश्च घनसारः कर्पूरश्चेति द्वन्द्वः । तद्वत् शीतलः उपमानानि सामान्यवचनैरिति कर्म्मधारयः । यद्रूप-मालङ्कारः । यदुक्तं । अनेनैव कविनान्यत्र चन्दनोदक चन्द्रांशु चन्द्रकान्तादि शीतलः । स्पर्शस्तवेत्यतिशयं बोधयन्ती वद्रूपमेति ।

लिङ्गिओ विश्र कुमुदा अरो पड़िवुज्भो महाभाओ ।

सर्वाः हर्षं नाटयन्ति ।

भ्रम । सानन्दम् । याह मुज्भा अमे लोअण णिमीलिणेण सुचिए इमादो वल्लोणि उ'जादो भत्ति सदअ सभमं आगदुअ लम्बिओसि तत्तहोदोए ।

मल्लिका । लज्जां नाटयति ।

मारुतः । सहर्षम् । हन्त न गतमेताभिः ।

उपकृतं मयि मूर्च्छे यत्त्वया स्वीकृतेम-

प्यगणित गुरुशङ्काव्रीड़मासाद्य सद्यः ।

वहल पुलक पालो पक्ष्मलोत्तुङ्गपीन

स्तनकृत परिरम्भं कातराक्ष्या धृतोऽस्मि ॥ (४५)

नेपथ्ये । भो भो जनाः ! पलायध्वं पलायध्वम् ।

एतौ द्वावपि तर्कितावपि मदौ विद्राविता धोरणौ

धावंधावमितस्ततः पथिजनान् व्यापादयन्तौ रुषा ।

वितण्डौ पृथुदन्त दण्ड विकटावुच्छृङ्खला वेनयो-

रेकः सोम सरः परस्त्विह वसन्तोद्यान माढौकते ॥

सर्व्वे आकर्ण्य ससम्भ्रममुत्तिष्ठन्ति ।

मारुतः । विलोक्य । अति कष्टं वर्त्तते ।

दूरान्निर्धावमानानपि लघुगमनः पृष्ठतोऽनुद्रुतः सन्

उच्चैः फोट्कारदानश्रवणनिपतितान् सङ्घशः सङ्घशोऽयम् ।

(४५) उपकृतं मयीति । अगणिते गुर्व्यौ शङ्काव्रीडे यस्मिन् कर्म्मणि तद्यथा भवति तथा अगणित गुरु शङ्काव्रीडं सद्यः क्षणात् आद्य इत्यन्वयः ।

पादाग्रक्रान्तदेहत्रुटन घट घटत् कुर्व्वंदस्थिप्रमथ्यन्
नीषादन्तोकषान्धः किमपि तनुमतः पिष्टपेषं पिनष्टि ॥

भ्रम ! णाह ! एसो णिब्भरो सणिब्भिस देहु प्पाड़िश्र पाडलं तमाला वेढ़िश्र कराल दन्त मुसलो साश्रर मन्थण वेला विलग्ग विण्हुमण्डल मण्ड्रिश्र सिञ्जोविश्र मन्दरो उब्भिज्जन्त गण्डमूलहोरन्त मुहुर भमरसण्ड जयडिण्डिम घोस सुदूश्रा श्रमणो अड्ढत्थुड़िश्रा इट्ठ लोहसिङ्खला खलखला अन्त चलणो ईसि चउरिश्र पिङ्गल लोश्रण भीसण मुहाभोश्रो इदोमुहं एव्व आश्रच्छइ दुट्ठ वारणो।

सर्व्वाः सकम्पम्। महाभाश्र ! परित्ताश्रदु परित्ताश्रदु।

मारुतः। माभैष्ट। अहमेनं निवारयामि दुष्ट वारणं।

इति सत्वरं वद्ध परिकरो निष्क्रान्तः। (४६)

मल्लिका। सविषादम्। हत्थि हत्थि अहिमुहं धाविश्रो एव्व महाभाश्रो।

भ्रम। सहर्षम्। हन्त दूरप्पसारिश्र सुण्डादण्डं सोवाणं कदुश्र आरूढ़ मत्थएण णाहेण कसमूल घड्डिश्र णिट्ठुरं गुट्ठपीड़ण भरोमुक्क फिक्कारं णिवट्टिश्रो एव्व दुट्ठ गश्रो। जाव श्रहंवि पिट्ठ दो होमि।

इति निष्क्रान्तः।

सर्व्वाः। हं णश्रणपहं अदिक्कन्दा एदे।

---

(४६) सत्वरं वद्ध प्ररिकरो निष्क्रान्त इत्यत्र। वद्धः परिकरः दृढ़तर गात्रिका वन्धो येन स तथाभूतः सन् इत्यर्थः। अथेत् परिकरः सङ्के-प्रर्थङ्क प्ररिवारयोः प्रगाढ़ गात्रिका वन्धे इति मेदिनी।

पुनर्नेपथ्ये ।

इह रमयन्तिका ललति सीमसरःसलिले

प्रइह तदन्तिकं झटिति धावति दन्तिवरः ।

सर्व्वाः । हद्धि हद्धि हा सहि रमअन्तिए ! कहं कम-लिणी विअ कुञ्जर हत्थगआसि ।

पुनर्नेपथ्ये ।

शिवशिव खाद काण्ड शतकोटिरिवाद्रितटे ।

निपतति मस्तकेऽस्य कलकण्ठ मृगाधिपतिः ॥ (४७)

सर्व्वाः । आकर्ण्य सविस्मयम् । साहु कलअण्ट ! साहु ।

पुनर्नेपथ्ये । सहि रमअन्तिए ! मा मा भीलुआ होहि दूरं णीदो एव्व कलअण्ठ कण्ठीरवेण दुट्ठगओ ।

सर्व्वाः । श्रुत्वा । एदं सारसिआए आसासण वअणं ।

कालिन्दी । सहि मल्लिए जीविद संसआदो मुक्कं रमअन्तिअं आसा सह्य । इति निष्क्रान्ताः सर्वे ।

इति तृतीयोऽङ्कः ।

---

(४७) शिवशिव खाद काण्ड शत कोटिरिवाद्रि तटे इत्यत्र । अद्रितटे खात् गगनात् अकाण्डे अकाले जातः शतकोटिः अशनिः इव अथवा न विद्यते काण्डः कालः यस्य सोऽकाण्डः अजलदकाल इत्यर्थः । सचासौ शतकोटिश्च अकाण्ड शतकोटिः आकस्मिकाशनिरित्यर्थः । सह इवेत्यु-पमा । अस्य गजस्य मस्तके कलकण्ठो मृगाधिपतिः सिंह इव कलकण्ठ मृगाधिपतिः निपतति अवितर्कितः कुतः प्राप्तवानिति भावः ।

इति तृतीयोऽङ्कः ।

---

# अथ चतुर्थोऽङ्कः ।

---

ततः प्रविशतौ हस्तिपकौ ।

एकः । अहे वव्वलअ ! हि माण हे दंअपशु कठकुकामुआहणाह अम्बलअ लाह मण वेक्किद दोरिअअदि जुउच्छदे उअ मे । जं चंदओअलं अह्यवेअ क्कणं विवस्सलेलूवलं चविजिदल दिवसहे । माकुदे मणुलत्ता ललिअके टुअतस्स गूढमणंम्मि पवट्टसइ । पेस्सि बिलदो णिम्मदअघे एक्के एव्व वअन्त मणुस्साणं वि विअं देवेसि देलिचाल पुलिआ असकिदं गुणिअओ अधदाणिण कुत्तलाहउम्मादणि गणि तु मं वि णि उत्तह्म । सविस्मयम् । तह णामउम्मादिदे लोसामलि अपलवसे मह वालणो तेण महापुलिशेण उआणदो झत्ति णिग्गदुआ लीलाणव्व आलूढ़ेढूलुलक्कन्ते विवुदु स्तअव्वे दूल दूणं णीदे ।

वर्वरकः । धीह सुह ! माहु भणिदं तुए णाह अम्बलआ हअदि जु उच्छिच्छिदे उअमेत्ति । होहिह्मो एव शलेसेखु विसह्म पुलिसेत्ति कथिदे लसो णाहिं ॥

जे कलेदिअ च्चि लाअ मयजे भजलं तहिअ आसु वह्नसु ।

सिंहमुखः । अह सोमसलं मि कलअंसो विधं धाविदोअ तुह वालणस्सका अवत्था ।

वर्वरकः । सेक्कुसलि लक्किलाविलो लव्विसु णुलाअ रत्तं समअन्तिअं घेत्तुकामो जलमज्झं पविढे ।

सिंहमुखः । सानुतापं । हद्दि लमअन्ति आवि तस्सिं एव्व वट्टेदि ॥

वर्वरकः । विहस्य । सिंघमुह ! जाला तुह बालणी उआणं पस्तिदे ताला मल्लि आवि तस्सिं एव्व वट्टेदि चिट्ठइ ।

सिंहमुखः । सोद्वेगम् । भीमाणहे किं मल्लिआव तस्सिं एव्व देसे सोत्थि णाह बब्बल आह वञ्चए जदि उच्छुलदाविअ सित्थलेण घेप्पइ मल्लिआ ता सव्वं वि हले एव्व लमअन्तिअं उद्दिसिअ वणालि दकले अणुहमेत्तं तलिए दोगघट्टे हाकालमहलेसु लोएसु अवलिलादो अवक्कन्दिअ मत्थए कलअणहेण कणहीलवेण विअ थोणि वत्तिदे मणि जडणिअ ढुक्काणणं एव्व धाविदे ।

सिंहमुखः । हीमाणहे कुवभ लाविअ अवहिदा एव्व । विहस्य । होहि भाइदुं गहीदह्मि अध कधेहि मल्लिआ कहिं चिट्ठइत्ति ।

वर्वरकः । साखु सोमग्रलं मि । सुलिअं लमअन्तिअं आसासन्तो ठाइ ।

नेपथ्ये । हद्दी हद्दी । गअमलु गप्पमहणो णाहो ।

उभौ । आकर्णयतः ।

सिंहमुखः । एसो भमलअ दंसिअ मग्गे आगए एव्व वसन्त वणअमीरेण मअणाहि लामि मालुदे । ता गच्छम्ह आआअवाणीपओअ पण्डिदक्खणादि दूले वसाणे ख अअकल विद्धअम्ह णाह पि अणिस्स ख एदं वुत्तन्तं कथम्ह । इति निष्क्रान्तौ प्रवेशकः ।

ततः प्रविशति मारुतो भ्रमरकश्च ।

मारुतः। भ्रमरक! क्व नाम गच्छेत् कुञ्जरकोलाहलोद्वेजिता मल्लिका?। अपि वसन्तोद्याने पुनर्दृश्यत एव।

भ्रमरकः। मण्णे रमयंतिअं दट्ठुं सोमसरं गएत्ति।

मारुतः। युज्यत एतत्। तदाविशाव सोमसरः सरणीम्।

भ्रमरकः। इदो इदो। उभौ परिक्रामतः।

मारुतः। सानुक्रोशम्।

अभिमुखपतयालुक्रूरमातङ्गमल्ल-
प्रतिभयकलहं होद्वेपितायाः स्मरामि।
स्थितमतिदयनीयं द्रुमशार्दूलकण्ठ-
स्वनचकितकुरङ्गीकातरप्रेक्षितायाः॥

आश्चर्य्यम—

सत्यं सहस्रगुणमुत्तपनात् अभूमा
कामानलो दहति गात्रमिदं तथापि।
तस्या घनस्तनभरार्पणलोभनीया-
द्द्यापि नो गलति सा पुलकालिरङ्गात्॥

भ्रमरकः। णं णिम्मदीकिओ दूरणिरत्थो क्खु सो णाहिणा पअंडो वेअंडो।

मारुतः। भ्रमरक! अपि सत्यं रमयन्तिकोपकण्ठं उपसर्पन् अपरः करी कलकण्ठेन निवर्त्तित इति।

भ्रमरकः। णाह! णं भणामि। णाहस्स पिट्ठदो अणुधावन्तेण मए दिट्ठो सोमसरकूडादो मणिजडपव्वअमूलकाणणमज्झं पविसन्तो सत्तुरधावन्त सिन्धुरकन्धरारूढ़ो णाहकलअंठोत्ति।

मारुतः। सवितर्कं। भ्रमरक!

हृष्यामि निष्ठुरकृतान्तमुखप्रपन्ना-
सा विश्रुराततनया प्रतिपालितेति।
दूये च दुर्म्मदमतङ्गजनीयमान-
माकर्ण्य काननगतं कलकण्ठमेकम्॥

भ्रमरकः। जाणन्तोवि पिअमित्तस्स भुअसौंडीरं कहं णाम खिज्जइ णाहो।

मारुतः। सत्यमात्थ।

अपि कुञ्जरकोटयःप्रभिन्नाः प्रभवन्ति चणमुद्भटं विसोढुं।
अपि कुण्ठपराक्रमस्य युद्धे कलकण्ठस्य कथं नु चण्डिमानं॥

तथापि

प्रत्यायते स यावत् तावत् खिन्दान एवास्मि
आशङ्कते ह्यपायानपदेऽपि स्नेहकातरं चेतः॥

ततः प्रविशति पथिकवेशधारी ससम्भ्रमः शम्बरकशिष्यः कलपिङ्गकः।

कलपिङ्गकः। (मारुतं विलोक्य)।

सएष मारुती गूढ़ं यस्मै द्रुह्यत्यमेधधीः।
मल्लिकारल्लकाविद्धहृदयो मद्गुरुः स्वयं॥ (१)

सत्यमुक्तं सिंहमुखबर्व्वरकाभ्यां वैसन्तोद्यानान्निर्गच्छन्दृष्ट इति।

मारुतः। दृष्ट्वा।

इतस्ततः कण्टकविक्षताङ्गो रजश्छटाकीर्णकरालजङ्घः।
परिस्खलन्नद्य परिश्रमेण प्रतिष्ठते कश्चन पान्थ एषः।

(१) रल्लकः सीमन्तः।

कलपिङ्गकः। सविषादं। हन्त निष्फलोऽस्मद्गुरोः कुञ्जरोन्मादनप्रयासः। भवतु उपायान्तरं प्रयोक्ष्ये (प-श्चाद् मनुपसर्पति)।

भ्रमरकः। णाह! ब्रह्मसुत्तलंच्छिअवच्छो दुआदो विअ लक्खिज्जदु।

मारुतः। द्विजन्मन्! कुतस्त्वमध्वखिन्नः सम्भ्रमापन्न इव च लक्ष्यसे।

कलपिङ्गकः। आवेगं नाटयन्। क्षणमात्मानमवस्थाप्य सर्वमाख्यास्यामि। अद्यापि वेपते मे हृदयं। गजमयीरिव दिशः पश्यामि।

मारुतः। स्वगतं। हन्त अयमपि मतङ्गजादुद्वेजितस्तपस्वी। प्रकाशम्। भीरो! विस्रब्धं ब्रूहि। क्वाद्य कुञ्जरः।

कलपिङ्गकः। निश्वस्य। श्रूयतां।

आन्ध्रेष्वहं जनपदे हरदत्तनामा
गोदावरी परिसरस्थितिमान् द्विजोऽस्मि।
संसारपङ्कचकितः शिवमौलिमाल्ये
मन्दाकिनी पयसि गन्तुमनाः प्रयामि॥

मारुतः। दिष्ट्या तीर्थयात्रापान्थोऽसि।

कलपिङ्गः।

तत्कन्धरस्थितिरनङ्कुश एव कश्चि-
दाधोरणः कनकचम्पकगौरगात्रः।
पादाग्रघट्टनविमोटितकर्णजाहः
कारुण्यवारिधि रचेष्टत तन्निरोद्धुम्।

मारुतः । जनान्तिकम् । गतः संशयः । ननु निरङ्कश-मपि मतङ्गजमनङ्कुशो नियमयत्येव कलकण्ठः ।

प्रकाशम् । ततस्ततः ।

कलपिङ्गकः । बाष्पं नाटयन् । मम नातः परं प्रसर्पति वाणी ।

मारुतः । साशङ्कं । कथय किं ततो वृत्तं ।

कलपिङ्गः ।

सोऽयं शैलेन्द्रसारोऽप्यहह वलवता क्रोधनिर्धूतमूर्द्धा ।
प्रक्षिप्तोऽवाक् तदुर्व्यां ।

मारुतः । हा सखे कलकण्ठ ! कथं पतितोऽसि ?

प्रशिथिलवसन सम्भ्रमादुत्पतिष्णुः ।

मारुतः । सप्रत्याशं । ततस्ततः ।

कलपिङ्गः ।

आक्रान्तो दुर्मदेन द्रुतमिभपतिना हा सखे मारुतेति
क्रन्दन् व्यावेष्टमानो गतघृणममुना दन्तघातैरघानि ॥

मारुतः । सवाष्पाक्रन्दं । हा हा वन्धु जनेन्दो ! हा हा परिपन्थिशैल शतकोटे ! । हा हा मारुत जीवित ! हा हा कलकण्ठ ! किमिदमापतितं । इति मूर्च्छन् पतति ।

भ्रमरकः । सवाष्परुदितं । मारुतं धारयन् । हा णाह कलअण्ठ ! कहं णु तं तारिस परक्कमो पहसिअमहेदस्स तुह करिकीड़ादो विणिवादो ।

कलपिङ्गः । सहर्षं । स्वगतं । फलितप्रायोऽस्मन्नीतिद्रुमः हा कष्टमप्रिया वेदकोऽस्मि । भद्र ! कथय कोऽयमीदृशः प्रस-नानुचितो महाभागः कस्य पुनरेतत् प्रेमास्पदं ।

मदन्तिकरकेलिकरः स महापुरुषः।

भ्रमरकः। एसो महाप्पहाव वसीकिअसअल भूमण्ड-लस्स अमच्चब्रह्मदत्तस्स कुमारो मारुओ। सोअ एदस्स पिअ मित्तं कलअंठो णाम।

कलपिङ्गः। मिथ्याविषादं नाटयति।

मारुतः। चक्षुरुन्मील्य। सखे कलकण्ठ! किं एकपदे एव मां परित्यजसि। निश्वस्य।

हा हन्त निर्म्मलसुधाकर विम्बवक्त्रं
आजानुलम्बिभुजदण्डमवद्यशून्यं।
गात्रं कथं नु तव वज्रकठोरधार
वेतण्डदन्तमुसल क्षतिपात्र मासीत्।

कलपिङ्गः। दुःसहानि खलु सुहृद्विपत्ति व्यसनानि।

मारुतः।

नोल्लिप्ता यशसा दिशो न गुरवः शुश्रूषया तोषिता
न प्राप्तश्च ऋणत्रयापहृतये पुण्यो गृहस्थाश्रमः। (२)
नो वा पूरितमर्थिनामभिमतं न श्लोकथापि श्रुता
हा हा निष्करुणेन दग्धविधिना नीतोऽस्यकाण्डे सखे!॥

भ्रमरकः। हन्त परूढ़मत्तो एव्व पारिजादपोदओ खुड़िओ अमुणि अपड़णेण सुक्कणिग्घादेण।

मारुतः। सगद्गदं।

(३) किमालम्बं धैर्य्यं भवतु ननु शून्या सुजनता

---

(२) ऋणत्रयस्य। देवर्षि पितृणाम्बस्य अपहृतये परिहाराय।

(३) किमालम्बेति। सम्प्रति त्वन्नाशात् उत्तमाः सर्वेऽपि गुणा-

निराधारा नीतिः प्रियवचनमेकान्तविरतम्
विनष्टो विस्रम्भः शमितमखिलं वान्धवतपः
कथामात्रा सत्ता मम हि कलकण्ठ ! त्वयि गते ॥

तदलं निरर्थकैः परिदेवितैः कियद् विलम्ब्यते । याव-न्मणिकूटमुपेत्य भृगुपातेन प्रियसुहृदः पन्थानमनुगच्छामि । भ्रमरक ! याहि नीयतामस्मन्नगरमेव स्कन्धावारः ॥ (४)

भ्रमरकः । सविषादं । किं एदं अस्स आरद्धं । चरण-योर्निपत्य । णाह ! परित्ताअदु२ । सराअ अंसवन्धु वम्म सराअ उत्त मण्डलं सगअ तुरअ पदातिकं सअलं वि कुन्तललोअं । जस्स तुमं एक्को जीविअंसि ।

मारुतः । शून्यवदन एव विहस्य ।

---

नष्टा इत्याह । किमालम्बमिति । हे कलकण्ठः ! त्वयि गते नष्टे सति इत्यर्थः । कथामात्रां सत्तामहह कलकण्ठ इति पाठान्तरं । तत्र कथामात्रां वचनमात्रां नतु प्रत्यक्षत्वेन सत्तां सद्भावं गते सति इत्यन्वयः । नाम मात्रेण भूवर्त्तिनीति भावः । धैर्य्यं धैर्य्याख्य गुण इत्यर्थः । किं आलम्बं यस्य तत् किमालम्बं यदवलम्बि इत्यर्थः । भवत् स्यात् इति प्रश्ने । भूधातोः कर्त्तरि परस्मैपदात् संप्रश्नार्थे लोट् । ननु अये सुजनता सज्जनस्य समूहः शून्या नास्ति भूता । नीतिः निराधारा प्रियवचनं मनोहरभाषितं किम्वा प्रियः मित्रमिति वचनमित्यर्थः । एका-न्तेन नियमेन अपरिहारत्वेनेत्यर्थः विरतं अवसितं विस्रम्भः विश्वासः विनष्टः अखिलं वान्धवतपः शमितं तद्व्यतिरिक्तस्यैव ततपः फल-स्याऽभावादिति भावः । मम सत्ताहि सद्भावस्तु कथामात्रा तिष्ठामीति तद्वचनमात्रका त्वां विना जीवामीत्यपवादमात्रफलकेति भावः ।

(४) स्कन्धावारः सेनेत्यर्थः ।

यो दुःखितेन दुःखी सुखितेन सुखी मयानुपाद्यं
तव यशःशेषतनौ सख्यौ जीवन् न जिह्रेमि ।

कलपिङ्गः । सानन्दं स्वगतं । नियतमुपरममित्येव एषः । अहो मे आकाशवाणी प्रयोगकोविदस्य सर्वंकषो मति-प्रकर्षः । तथाहि ।

(५) भ्रूक्षेपविभ्रमनियोजितसैन्यचक्र-
नासीरवीरशकलीकृतशात्रवस्य ।
एतस्य विक्रमनिधेर्विनिपातनेऽस्मिन्
सेयं मम प्रभवति स्वयमूर्ज्जिताधीः ॥

तदमुना उदन्तेन यावदस्मत् गुरुमानन्दयामि । विमृश्य । अथवा अनेनैव पथिकवेषेण अमुमेव मारुतोपरमं सोम-सरस्तीरवासिन्या मल्लिकाया निवेदयामि । येन अस्मा-न्निवृत्तानुरागा स्वयमेव मद्गुरुद्वाहमनुमंस्यते । विश्वा-वसुना तु कात्यायनी वचनैक प्रमाणेन प्रतिपन्नमेवैतत् ।

भ्रमरकः । कलपिङ्गकं प्रति । तुम्हे निवारेह । अह्माणं साहस्स अदिदारुणं आरम्भं ।

कलपिङ्गः । भद्र ! एवमनुरक्तस्यास्य महापुरुषस्य दुर्नि-वारोऽयमध्यवसायः । न चमे चैतादृशानि द्रष्टुं । तदहं मार्गा-दनशनो ह्यसोढ़ः क्षणविलम्बमपि यास्यामि । इति निष्क्रान्तः ।

---

(५) भ्रूक्षेपेत्यादौ । भ्रूक्षेपविभ्रमेण नियोजितं यत् सैन्यचक्रं सेनासमूहः तस्य नासीरे पुरोभागे विद्यमानाः ये वीराः तैः शकलीकृत-शात्रवस्य ध्वस्तपरिपन्थिन इत्यर्थः । सैन्याग्रभागे नासीर इत्यभिधानम् अत्र नासीरपदस्य वशंकरीरादिवद्विशेष्यमात्रपरत्वम् ।

भ्रमरकः । स्वगतं । अदि णिसंसो विअ एसो पडिभाइ । प्रकाशं । णाह ! तह णाम अणुरत्तहिअआ वि कहं उवेक्खिज्जइ ।

मारुतः । मुग्ध !

त्यजतासूनपि येन स्नेहार्द्रेणाहमाहृतः ।
तेन वियुक्तस्याद्य मल्लिकया जीवितेन वा किं मे ।

ततः प्रविशति कलकण्ठः ।

कलकण्ठः । सानुरागं ।

भ्रान्त्याश्रुप्रताननविलोलविलोचनश्री-
विष्वग्विकीर्णकमलोत्पलमम्बुमध्ये ।
तस्याः पयः कणकरम्बितमुग्धगण्ड-
मद्यापि मुञ्चति न मानसमाननं तत् ॥

यावदहं दूरनिरस्तहस्तिनं प्रियसुहृदं वसन्तवनसविधेऽन्विष्यामि । परिक्रामन् विलोक्य । सविषादाशङ्कं । एषः ।

वाष्पायमाणनयनविनिवेदितशोकभारः
चरणनिपतितेन भ्रमरकेण सप्रार्थनं किमपि निवार्य्यते ।

उपसर्पति ।

भ्रमरकः । णाह ! जइ एव्वं पुड़मं एव्व भिउम्मि पडिस्सदि सअलो वि खन्दावारो ।

कलकण्ठः । सभयविषादं । किं प्रथममेव भृगौ पतिष्यति स्कन्धावार इति ।

मारुतः । अश्रुत्वेव । ऊर्द्ध्वमवलोक्य । सखे ! कथं मामपमत्य गच्छन् स्वच्छन्दतोद्यमान् न विलज्जितोऽसि ।

कलकण्ठः । हन्त ! जीवन्तमेव मामन्यथा सम्भावयति प्रियवयस्यः ।

मारुतः ।

क्षणं विलम्बस्व गजेन्द्रगामिन् !
जवादहं यावदनुव्रजामि ।

कलकण्ठः। शान्तं पापं शान्तं पापं प्रतिहतममङ्गलं । त्वरितमुपसृत्य । वयस्य ! किमिदमस्थान एव सकलमहीमण्डलमण्डनमात्मानममङ्गलेन ननु वचसा योजयसि ।

मारुतः । हन्त ! कलकण्ठस्य स्वरोऽयं ।

भ्रमरकः । विलोक्य। णाह ! दिट्ठिआ वड्ढामो पच्चाठाओ एसो णाह कलकण्ठो ।

मारुतः । सहर्षगद्गदं । एह्येहि सखे कलकण्ठ ! देहि कण्ठग्रहं मम पुनर्न प्रभवती बाष्पायमाणे द्रष्टुं विलोचने ।

कलकण्ठः । सस्नेहमालिङ्ग्य । वयस्य ! किमेतद् वर्त्तते।

भ्रमरकः । णाह ! गोदावरीतीरवासो त्ति कोवि पहिओ आगदुअ तह कहिदवन्तो कुञ्जर उत्तंतं । जेण णाहो वि भिउपड़णंमि सज्जिओ ।

कलकण्ठः । विमृश्य । मन्ये कुह न विदा शम्बरकान्ते वासिना कलपिङ्गकेन विप्रलब्धः प्रियवयस्यः । द्रुह्यति चास्मभ्यं मल्लिकार्थी शम्बरकपशुः ।

नेपथ्ये । हा सअलजीअलोअणाणन्दाण फलमहाभाअ कहं तुइ अणुरत्तं मं परिच्चइ असगविलासिणी लोलुवो सि ता जाव ओहसिअ कुसुमाउहगव्वं तुमं अच्छारओ अप्पवसंणअंति दाव झत्ति आगदुअ अहं णिवारेमि।

सर्वे आकर्णयन्ति ।

मारुतः । साकूतं ।

नादः स एष मृग शावविलोचनायाः
चेतो विकर्षति विलोलयते धृतिं मे ।
व्याधेषु विहृतनिजवल्लभतीव्रशोक
विप्लुष्टबालकुररीरवमुग्धतारः ॥

कलकण्ठः । मन्ये मल्लिकामप्यमूमुहत् मुसलयः कलविङ्कः यावदेनां चरितमभ्यवपद्यामहे । सजवमुपसर्पति ।

भ्रमरकः । णाहं ! एसो तत्तहोदीए सीमन्त परिब्भुट्ठो दिप्पइ सिहामणि ।

मारुतः । मन्ये मतङ्गजभयव्याकुलाया गमनसम्भ्रमच्युतेनानेन भवितव्यं ।

उद्धृत्य सस्नेहं ।

मन्ददुतो मताङ्ग्या श्चिकुरे जलदे यथा तडित्पुञ्जः ।
सम्प्रति शोच्योऽसि मणे ! तस्याश्चूडापदात्परिभ्रष्टः ॥

पुनर्नेपथ्ये । कालिन्दि ! धारेहि धारेहि मुज्झन्तिणिपडइ पिअसही मल्लिआ ।

सर्वे आकर्ण्य त्वरितमुपसर्पन्ति ।

ततः प्रविशति नवमालिका कालिन्दीभ्यां धार्य्यमाणा मूर्च्छानिमीलिताक्षी मल्लिका सम्भ्रान्ताश्च रमयन्तिका मधुकरिका सारसिकाः।

रम । सविषादं । हद्धि ! णिप्फन्दा अज्जवि पिअसही मल्लिआ ।

नावमलिका । सवाष्पं । कस्स किदे रुदिस्सामो किं महाभाअस्स उद मल्लिआए ।

र्गाः । हा मल्लिए ! तुमं वि किं महाभाअं अणुगच्छसि ।
र । कालिन्दि ! कहिं णु पव्भट्ठो मुच्छाहरो सीमन्तमणी ॥

नवमालिका । हा मल्लिआ हिअअ वल्लह ! महाभाअ
रुअ ! धारेहि । तुह किदे मुच्छागअं णं ।

मारुतः । ससम्भ्रममुपसृत्य । नवमालिके ! अयमहं धार-
मि ।

सर्वाः । विलोक्य । सानन्दं । पिअं णो पिअं णो अक्खअ-
सरीरो पच्चागदो महाभाओ ।

नवमालिका । सहर्षगद्गदं । महाभाअ ! हरिसपारवस्सेण
लाउला ण किंवि सक्कुणोमि भणिदुं । धारेहि । जीविद-
सस्सअं पत्तं पिअसहीं मल्लिअं ।

मारुतः । सविषादानुरागं धारयति ।

रम । अपवार्य । महुअरिए ! सो एसो पच्चक्खविम्महो
हाभाओ मारुदो । जो महजीविदप्पदाणमहोवआरोण
अ पिअसहो । सरिसो क्खु मल्लिआए एदस्सिं पणअवन्धो ।
ट्ठिआ असच्चाणि तस्स पहिअहदअस्स वअणाणि ।

मधुकरिका । सहि रमअन्तिए ! सो किल दुट्ठहि-
ओ सविआरिदं पुणो पुणो पेक्खिदवन्तो ।

रमयन्तिका । चिट्ठदु तस्स हदासस्स पसङ्गो ।

कालिन्दी । सहि पवुज्झस्स पवुज्झस्स ।

कप्पन्दहोहाउ संपेच्छ महाभाअं ।

मल्लिका । प्रत्यागच्छति ।

मारुतः । सानन्दं । नवमालिके मा मा रुदिहि ।
ुध्यते तव प्रियसखी ।

कृष्णस्निग्धकनीनिके विकसत: कर्णान्तदीर्घे दृशा-
वुत्कम्पो हृदयस्य वेपितकुचा भोग: शनै: शाम्यति ।
धत्ते शीतरुचोविधुन्तुदमुखान्मुक्तस्य लक्ष्मीमिदं
मुग्धाङ्ग्या विगलद्विमोहतिमिरं वक्त्रं प्रसीदत्क्रमात् ।

मल्लिका । स्वगतमभिनीय । सहिओ कीं असु अप्पवाहे पड़िअह्मि । अहवा मुआ गदुअ तेण महाभाएण सङ्गमङ्गअह्मि ।

नवमालिका । सहि मल्लिए ! णहि णहि सगम्मि एत्थ सोमसरत्थलं च्छिअलच्छीविलासप्पासादे महाभाअस्स वच्छठ्ठले पाड़िआसि ।

मल्लिका । सहर्षं विलोक्य । महाभाअ ! दिट्ठिआ तुमं पुणोवि पेच्छामि । अवि सच्चं जीवसि ।

मारुत: । अपवार्य्य । सम्प्रति जीवाम्येव त्वयि नामैवं प्रसन्नायां । नोचेदनङ्ग वह्निज्वालादग्धस्य कात्र जीवकथा

कलकण्ठ: । उपसर्प्पति ।

रमयन्तिका । सहर्षं । महुअरिए ! दिट्ठिआ पत्तो कलअण्ठोवि ।

मधुकरिका । दिट्ठिआ एदस्स अमङ्गलाइ ण कहिआइ तेण णिसंसेण असुहा अणहविज्ज । तुएवि मल्लिआए विअ एदं मुच्छा वसणं होज्ज ।

कलकण्ठ: । अपि भवत्योऽपि तेन पथिकवेषधारिणा शम्बरकान्तेवासिना वञ्चिता: स्थ ।

सर्व्वा: । किमहो ! किं सम्बरअसिस्सो हदासो काहिअ तेण मोदाणाई तीरवह्मणो वाराणसी पहिओ अहन्ति ।

सारसि। जनान्तिकम्। कालिन्दि! णं भणिदं मए
[द]दस्स वि करभघग्घरो सरो आआसवाणिं अणुहरइत्ति।

मारुतः। स्वगतं। उपक्रान्तमपकर्त्तापि तेन कलपिङ्गकेन।

श्रुत्वा मिथ्यामद्विपत्तिञ्जिहासो

स्त्यक्ता शङ्कं जीवितं कातराच्याः।

मन्त्रव्याजं प्रेमसर्वस्वमस्या

विस्रम्भाणां स्थानमध्यच्चितं यत्।

[ने]पथ्ये। भो भो भुजस्तम्भसंस्तम्भितप्रतिभटकुम्भीघटाः सेना-
भटाः! अन्वेषयन्तु मणिकूटकटकेषु वसन्तवनोपकण्ठेषु
सोमसरः कूलोपशल्येषु स्वामिनं परिपन्थि गजकेशरिणं
कुमारमारुतं समराणंव मन्दरचण्डदोर्दण्डमलकण्ठं च।
अजानन्काविव सोमसरश्रोतीरे भ्रमरकमात्रपरिजनौ सङ्गतौ
किल तत्कालप्रभिन्नमदरोषामर्षदुरुपसर्पाभ्यां कुञ्जराभ्यां।
[स]र्वे आकर्णयन्ति।

कालिन्दी। विलोक्य। अम्महे एसो पअलंतकुलाअल
सहस्स सारिच्छभीषणगत्र घडाणि कड पुरोभाअोवग्गन्ततुरअ
खुरपुटतालुद्दलिअ धरित्तितलचलिअ धूलीधूसरिअ दिसा-
मुहो एत्तो मुहो आगदो एव्व महत्तो सकलणिवहो।

मारुतः। भ्रमरक! गच्छ निवार्य्यतां मा मा सम्भ्रमः
कार्य्य इति।

भ्रमरकः। जं णाहो आणवेदित्ति निष्क्रान्तः।

नउमालिआ। अह सो भमरअ वअणादिअ णाहवअण
वेलाणि रुन्धप्पसरो तहीं चिट्ठिओ सेणाणअरो।

मल्लिका। जनान्तिकम्। अम्महे एत्तिअस्स सेणाचक्कस्स

णाहो वि महकिदे एक्को एव्व ठिओ महाभाओ सअललो-
अमण्डणा भूदोभयं अस्स कुञ्जरस्स अभिमुहं धाविओ ।

नवमालिका । सहि ! एव्वं ठिए वि तुए णं सुट्ठु
अनुट्ठिज्जइ । जं अप्पणेव्व अप्पाणं । णस मप्पेइ ।

मल्लिका । निःश्वस्य । सहि किं करोमि । ताद वस-
वट्टिणि । तादेण घडिसादं किल राअसखिहह्मि । मल्लि-
आए वरणिसए णाहं पमाणं । अपितु भअवदी कच्चाइ-
णीएव्वेत्ति ।

प्रविश्य प्रतिहारी कनकलता ।

णोमालिए दुस्सहसोअदुमिअ हिअआ भट्टिणि-
आणवेदि भट्टिदारिआझत्ति घरं आणेदव्वेत्ति पड़िपालइ
वसन्तवणविरन्ते सअल परि अण परि उदो कञ्चोरहो ।

नवमालिका । सायङ्कं । कणअलए । कीस दुस्सहसोअ-
दुम्मिआ भट्टिणी ।

कनकलता । सविषादं । णं भअवदोए गोरीए अदि-
ट्ठो समचो भट्ठिदारिआए सस्वरओ वरोत्ति ।

मल्लिकामारुतौ विषादं नाटयतः ।

सार । जनान्तिकम् । महु अरिए ! अमणोरमं आरद्ध
वम्महेण जो परोप्पर सरिसाणुराआइमे अड्ढे विहड़इ ।

मारुतः । सनिर्वेदं । स्वगतं ।

एतस्याः प्रथमावलोक समये गाढ़ं प्ररूढ़ः क्रमात्
संवृद्धोद्धत पल्लवः कुसुमितोमन्ये फलिष्यन्नपि ।
सोऽयं हन्त मनोरथ द्रुरधुना शाखोपशाखाञ्चितः
कष्टं हन्त कृतान्त वैशसमहादम्भोलिना भज्यते ॥

मल्लिका। स्वगतं। हा मल्लिए! एत्तिअ मेत्तजीविअ फलासि। अह अम्ब गोरि! कहं रक्ख सहत्थे दिस्सं ह्मि।

मारुतः। मल्लिकावदनं विलोक्य। स्वगतं।

मातर्भवानि! मयि दारुण दुःखदूने
मा नाम चित्तमनुताप परिप्लुतं भूत्।
एनां विषण्णवदनामवलोकयन्त्याः
किं ते कृपा स्खलितेन विलोचनैस्तः॥

कनकलता। णोमालिए! अदंसणेण अहिअं किलम्मइ भट्टिणि। ताझत्ति भट्टिदारिअं घकूण गच्छह्म।

नवमल्लिका। सविषादं। इदो इदो भट्टिदारिआ।

मल्लिका। सवाष्पगद्गदं। अप्पणअणाभिराम महाभाअ आपुच्छदि मरणे कसरणा मन्दभाइणी मल्लिआ।

नवमालिका। भअवदि! अम्बिए णादि जलहिअ-आसि। कहं तुह चरणेकालम्बणा मल्लिआ जीविद संसअं आरो विज्जइ। अहवा ण एव्वं विहो तुह आदेसो एदं वि तमस सम्वरसिस्सखच्चणं तक्केमि।

सार। जनान्तिकं। कालिन्दि! सच्चं अहिहिदं णोमालिआए।

कनकलता। इदो इदो।

मल्लिका। स्वगतं। हा मल्लिए! एत्तिअमेत्त जीविद-फलासि। भअवदि गोरि कहीं रक्खसहत्थे दिस्सह्मि।
नवमालिकया सह निष्क्रामति।

रम। सारसिए! कहंवि मल्लिअं अणुगच्छामि। ण सक्कुणोमि आपुच्छिदुं जीविददाणमहोवआरिणं महाभाअं।



सार। महाभाअ ! एसा तुए दिस्सं सरीरं धारअन्ती घरं गच्छइ रमअन्तिआ।

कलकण्ठः। सन्तु गृहाः परिष्कृताः।

कालिन्दी। सारसिए ! पेच्छ पेच्छ हिअउब्भरंत ग्गइ भाविविरहवेअणाणुसन्धाण अविसेसवड्ढान्त मअणा- णलवम्भमंणविसेसदोहर णीसासं उद्दामविब्भमोल्लसिअ मालिआ कलिअ कड़क्ख पेक्खिदगाअणाराअ सव्वसम सम्वग्गिअ सोअ सलिलपत्त परोप्परप्पोडिअ बिंवलंग घ- गाढ़परिरम्भ सहुब्भिण्ण पुलअजालरमणिज्जं रमअन्तिआ कलअण्ठ.णां अवठठाणं।

कलकण्ठः। सानुरागं। स्वगतं।

प्रणय चपलाः प्रेमस्फाराः प्रसूतमनोभुवः

च्यपितधृतयश्चेतश्चौराश्चला चलतारकाः।

शिव शिव मयि प्रेङ्खन्त्यस्यास्तरङ्गित घूर्णित-

स्तिमितमधुरस्निग्धा मुग्धा विलोचनविभ्रमाः॥(६)

मधुकरिका। हद्दी हद्दी।

---

(६) प्रणयचपला इति तरङ्गिताश्च घूर्णिताश्च स्तिमिताश्च मधुराश्च स्निग्धाश्च इति द्वन्द्वः तथा मुग्धाः अतएव प्रणय चपलाः प्रेमस्फाराः प्रसूत मनोभुवः च्यपितधृतयः चेतश्चौराः चलाचल तारकाः अस्या विलोचन विभ्रमाः मयि प्रेङ्खन्ति शिवशिव इति हर्षे। अत्र तर- ङ्गितत्वादि मुग्धत्वान्तानां षस्नां विशेषणानां प्रणयचपलत्वादि चलाचल तारकत्वान्तेषु षट्सु विशेषणेषु क्रमेण हेतुत्वं वोध्यं तरङ्गितादि लक्षणं तु प्रथमाङ्के निरूपितमस्माभिः।

रमयन्तिका। अपवार्य। महुअरिए! कदा पुणोवि किखस्सं पुणचन्दसुन्दरं महाभाग्रं।

मधुकरिका। सहि अगग्रो। कहराग्रो सम्बरग्र क्ख वदित्ति संकीअदि। अवि असहा सुलहं क्खु, दंसणं खंवि।

रमयन्तिका। निःश्वस्य। कथं कथमपि निष्क्रामति।

मल्लिका। णोमालिए! इन्दीवर दुल्लह दंसणं कसंत- ोहर विसाल लोअणपुण्डरीअं पुणोपेक्खिस्सं महा- ाअस्स मुहचन्द मण्डलं। इति विचलित सखी सवष्मं पश्यति।

सारसिका। कालिन्दि! पेच्छ सकरुणाणुराग्र ावट्टिग्र मुहचन्दाए मल्लिआए वाहहर पूर पूरि आइ सारकरकं विग्रं कमलकलिग्रा मित्ताइ णेत्ताइ। ता ाम्महे गदुग्र आसासणिज्जा।

कालिन्दी। महाभाग्र! एव्वं ट्ठिएण पहवन्ति ालणा फत्तिदुं वि।

मारुतः। अनुसर्त्तव्या भवतीभ्यां मल्लिका।

कालिन्दी। महाभाग्र! एदंवि वाराणसी पड्डिग्र अणादो अदिरित्तं मणेहि।

ारसिग्रा वि भणइ अज्जवि आआसवाणीए विग्रसरीत्ति।

कालिन्दी। सारसिके! अपि श्रुतं त्वया आकाशभाषितं।

सारसिका। अहइ।

कालिन्दी। स्वगतं। युज्यत एतत्। एतादृशानि तत्रास्य ःनयविलसितानि।

मारुतः। स्वगतं। आश्वासनानि खलु एतानि। प्रकाशं।

कालिन्दि! सएष मल्लिकायाः सीमन्तलालितो मणिः इत्यर्पयति ।

कालिन्दी । आदाय । हन्त असेसिदोवि एसोण्ण दिट्ठ अह्मेहिं । निष्क्रामतः ।

मारुतः । निःश्वस्य । हन्त अदृष्टपारे व्यसनसागरे पतितोऽस्मि ।

(७)मूर्च्छा स्वेच्छं स्फुरन्तु द्यतु वपुरिषुभिः पूर्णकामः सकामो
भूयादाधिः समिद्धोरणरणिकपरिस्फूर्त्तिरूर्जस्वलास्तु ।
वैधुर्य्यं वर्द्धतां द्राक् द्रवतु धृतिरपध्वंसतां सौख्यचिन्ता
हन्तासौ तुल्यरागं जनमसुलभयन्नस्तु धाता कृतार्थः ॥

कलकण्ठः । सखे ! युवयोर्मल्लिका मारुतयोरनुरूपं पाणिग्रहणमङ्गलं सर्व्वमङ्गलानसं मन्यत इति कथमेतत् सङ्गच्छेत । पश्य

मूर्त्तौ युवां प्रसादीयस्याःपरिवस्यया प्रसन्नायाः । (८)
तद्वचनोपज्ञमिमं प्रत्यूहन्नेव विश्वसिमः ॥

मारुतः । कलकण्ठ ! विचित्रेषु कर्म्मणां विपाकेषु कथं नाम विश्वसनीयमेतत् । पश्य

शुभमितरद्वा प्राचरं कर्म्मसुखं दोग्धिदुःखं वा ।
दैवं पुनस्तटस्थं तदुभय मनुभाव यदुदास्ते ॥

---

(७) मूर्च्छेति । रणरणिकपरिस्फूर्त्तिः उत्कण्ठापरिस्फुरणम् इत्यर्थः । ऊर्जस्वला स्थिरतरेत्यर्थः द्यतु खण्डयतु इत्यर्थः ।

(८) परिवस्यया पूजया तद्वचनं सर्व्वमङ्गला वाक्यं उपज्ञा आद्यज्ञानं प्रमाणमिति यावत् । यस्य तं प्रत्यूहं विघ्नं इत्यर्थः । प्रसन्नया प्रत्यूहा सन्ति रविश्वसनीयेति भावः ।

कलकण्ठः। कथमेवं भाषसे प्रत्यच एव कलपिङ्गक वृत्तान्तो वयस्यस्य।

मारुतः। विचिन्त्य। हन्त संशये स्थापितोऽस्मि। स्वगतं किमत्र कर्त्तव्यं। सावष्टम्भम्।

प्रणतजन पारिजातवल्लीं भवानीं प्रसादयिष्यामि।
गत्वा गौरिगृहानिको मोच्ये वा निष्फला नसून्।
आराध्य देवीं शर्व्वाणीं लप्स्ये वा मल्लिकां प्रियाम्॥

प्रकाशं। सखे कलकण्ठ! तवापि हृदयमनुप्रविष्टेव रम यन्तिका।

कलकण्ठः। सलज्जस्मितं। सत्यमुपलचितं वयस्येन।

उद्भिन्नवाष्पकणिकानुपगूढ़भावान्
उत्कण्ठितान् मयि मुहुः चिपती कटाचान्।
सेयं नितम्बभरमन्थरमन्दयाना
यान्ती गृहानपि सखे! हृदयं गता मे॥

मारुतः। कलकण्ठ कथमेनां जिघृच माणएव मदकरि णिखादवप्लुतोऽसि।

कलकण्ठः। अहं खलु भ्रमरकमात्र परिजनं वसन्त वनगतं वयस्यमुपसृत्य त्वरितमुपगच्छन्मध्ये सरणि सन्नि हितया सारसिकया सोमसरः कूलं नीतोऽस्मि।

मारुतः। ततस्ततः।

कलकण्ठः। ततश्च

स्नातोत्थिता सलिलविन्दुतरङ्गिताङ्गी
सा सुन्दरी तटगते मयि दत्तदृष्टिः।

संसक्तसूक्ष्मविमलाम्बरलोभनीय
श्रोणीभरा मनसि मे लिखिता स्मरेण ॥

मारुतः । सखे ! हृदयङ्गमानि खलु तरुणि मशिल्प-समुल्लिखितानि नितम्बिनीनामङ्गकानि विशेषतः स्नातोत्थितानाम् ।

कलकण्ठः । ततश्च तत्कालाढौकितस्य मदेभस्य झटित्यारूढपादपः स्कन्धदेश मास्कन्दितवानसि ।

मारुतः । सहर्षं । सखे ! सिद्धमेवाभिलषितं मन्यस्व । पश्य

तद्रूपविभ्रमविवर्त्तितरागवृत्तिः
प्रागप्यसौ तव वयस्यकरं गतैव ।
अद्य प्रसह्य चिकुराग्रविसारिहस्ता-
द्दुन्मोचिता किमुत दुष्टमतङ्गजेन्द्रात् ॥

कलकण्ठः । वयस्य ! अस्याः पुनरग्रतो रुद्रराननामा शम्बरकपक्षपातीति सन्दिह्यते ।

मारुतः । किमेतावता ।

समहृदयौ चेत्तरुणौ किं प्रतिकूलेन बन्धुवर्गेण ।
अनुकूलेनापि पुनर्नार्थस्तौ चेद्विरागौस्तः ॥

तद्यामः शिविरं । इति निष्क्रान्ताः सर्वे ।

इति चतुर्थोऽङ्कः ।

पञ्चमोऽङ्कः ।

ततः प्रविशति विप्रवेषधारी राक्षसः ।

अहो अतिमनोहरं अकुतोभयं अस्मत्कुलचरितं ।
निर्वर्त्त्यन्ते नृमांसैर्निजरणविधयः पीयते रक्तसीधुः
स्वेच्छासम्भोगसौख्यं भवति हठहृतैरन्यदारैरुदारैः ।
वैतानीनां क्रियाणां विमथनमधिकं जायते हृष्टहृद्भि-
र्येन स्वच्छन्दहृद्यं न भवति तदिदं राक्षसं जन्म तुच्छं ॥

मया पुनरति शोचनीयोऽस्मज्जाति विरुद्धोऽप्ययं वेषः
सिंहलद्वीपवासिनः सख्युर्विकटग्रीवस्य कृते समभ्युप-
गतः । आदिष्टोऽस्मि हि प्रियसखेन । सखे खड्गजिह्व !
सन्ति मे तवापि दृष्टानि त्रीणि विशिष्टानि वस्तूनि ।
एकं सकलमूर्च्छाहरं रत्नं अपरं चित्रमयं कन्यारत्नं ।
अन्यद्विमलं दिव्याम्बरञ्चेति । पतितानि च तानि प्रमा-
देन लङ्कापुरगमनसम्भ्रमाकुलेन मया मन्निवास एव वट-
मूले कथितञ्च लङ्कापुरवास्तव्यैः दैवज्ञैरेतद्वस्तुत्रयनाशादर्श-
नीय एव ममायुरिति । अतस्तदन्वेषणाय त्वया प्रयत-
नीयमिति । सहर्षं । दृष्टञ्च विप्रवेषधरेणान्विष्यता मया
अस्मिन्नेव कुसुमपुरे । सविस्मयं । अहो या सा तादृश सौन्द-
र्यनियन्त्रित सकललोकलोचना चित्रकन्या । यस्य दुकूला-
ञ्चलिखितौ मरकतभङ्गरुचिस्तरुणाः । ताविह स्थाविव स्तः ।
तस्य । मोष्टागारवपि तावेव । विकटं परिक्रामति । पुरतो
विलोक्य । कोऽयं सायं सन्ध्यावतारविरलसञ्चारमप्यन्धकारं
रयन्नभ्रंकषस्तमालप्रायो महानारामः । निर्वर्ण्य । मन्ये

कुसुमपुरोपकण्ठवासिन्याः कात्यायन्या विहाराक्रीडोऽय
यः शर्वरीषु तत्कालसन्निधानसकलपरिवारमण्डलो मनुज
दुष्प्रवेश इति श्रूयते । तथाहि

क्रीडन्ति प्रमथार्भकास्तत इतो मूलेषु पृथ्वीरुहां
श्रूयन्ते घनगर्जितप्रतिभटा हेरम्बकण्ठारवाः ।
दूरादेव पुरद्विपैः परिहृताः सन्त्रासफीत्कारिभिः
वान्त्येतेऽपि च गौरिकेसरिसटासंघट्टिनो मारुताः ॥

साशङ्कं । तदस्माकं दुरुपसर्पोऽयं देशः । निसर्गदे
षिणो खल्वसुरराक्षसेषु मायाविनो वसुदेवनन्दनस्य सोदरी
असामान्यप्रभावा दुर्गा । तथाहि—

एषा विषाणकोटिव्यस्तमहेन्द्रोपवाह्यस्य ।
अविषह्यमहिषस्य शिरः किसलयमुग्धेन चरणेन

अथवा । कातरजनप्रशंसागोचरोऽस्या विक्रमः ।
प्रागस्मद्वंशजातः स किल दशमुखोद्दामदोर्दण्डशाखा-
स्थेमानं सन्दिदृक्षुः चटचटिति समुत्पाट्य कैलासमद्रिम्
किं ब्रूमस्तामवस्थां प्रचलति शिखरे भीरुरन्तर्हसन्ती
नत्वा श्लिष्यत् स्वदोर्भ्यां पुरमथनमियं चाटुवादानपेक्षम् ॥

मार्गान्तरेण परिक्रामति । सकौतुकं कोऽयमभिनवारूढ
यौवनारम्भो गजकुमारमन्थरसञ्चारः प्रविविक्तत्यविशङ्क
दुर्गायतनारामं । य एषः ।

गरुडशिलारुचिः शरविपाण्डुरगण्डतलः
पृथुभुजदण्डमण्डलकरालकृपाणलतः ।
नयनविलोभनोऽपि च विभर्त्ति भयङ्करतां
विटपनिषण्णमेचकफणीव पटीरतरुः ॥

निवर्ण्य । अये ! सोऽयमस्मद्दुकूलाञ्चललिखितस्तरुण: । यस्याम्बरे सा चित्रकन्या । साशङ्कं ।

दूरादेव तमस्यपि धाम्ना स्वेनैव लक्ष्यमाण वपु: ।
मन्ये दुरासदोऽयं मृगपतिरिव यौवनोद्रिक्तः ।

तन्मन्ये दुर्लभैव एतत्करवर्त्तिनी चित्रकन्या । अथवा । सत्यां सत्यकन्यायां किं चित्रकन्यया । तद्याव-न्मणिकूटशिखरागतस्य सख्युर्विकटग्रीवस्य सर्वमिमं वृत्ता-न्तमावेद्य स्वेच्छं गच्छामि । नभो विलोक्य । अस्मत् सञ्चरणो-चितश्चायं समयः ।

(८) यदिह नवनवास्रग्घोरणीदिग्धमांस-
प्रचयमिव नभोऽन्ते साध्यमैधिष्ट तेजः ।
तदखिलमति दृप्तैर्यातुधानैरिवैतैः
समसमयमघासि ध्वाङ्क्षवृत्त्या तमोभिः ।

इति निष्क्रान्तः । शुद्धविष्कम्भः ।

---

(८) यदिहेति । इह पूर्वोक्तसमये नभोऽन्ते गगनान्तराले नव-नवास्रग्घोरणी दिग्धमांसप्रचयमिव स्थितमित्युत्प्रेक्षा । अत्रजो द्वितीयक्षणिकत्वनिरासगर्भं नवनवेति पदम् ।

द्वितीय क्षणिकत्वे हि आकृष्यभङ्ग इति भावः । असाध्यम् अप-रिमितं यत् तेज ऐधिष्ट वद्धे । अखिलं समस्तं तत् पूर्वोक्तविशेषण-विशिष्टं तेजः कर्म अतिदृप्तैः यातुधानैरिव अतिदुर्मदराक्षसैरिव स्थितैः इत्युत्प्रेक्षा ।

एतैः पुरोवर्त्तिभिः तमोभिः कर्तृभिः समः समयः यस्मिन् कर्मणि तद्यथा भवति तथा समसमयम् एककाले इत्यर्थः ध्वाङ्क्षवृत्त्या वायसवृत्त्या काकभोजनप्रकारेणेति भावः अघासि कवलितमित्यर्थः ।

ततः प्रविशति यथानिर्दिष्टो मारुतः ।

मारुतः । साशङ्कं ।

आः पालीश्यामकृतकघनप्रेमविस्फारितानां
सव्रीड़ानां सकलकरुणानन्दनाडिन्धमानां ।
तेषां तेषां हृदयनिहिताकूतनिष्यन्दिनेत्र-
व्यापाराणां पुनरपि तथा सुभ्रुवो विभ्रमाणां ॥

हन्त पुनरिदमेव स्मारं स्मारं प्रतिसारं हृदयं ।

अन्येन पाणिमवरुद्ध्य जिघृक्षमाण-
मन्तर्विभिन्नहृदया सदयं प्रयान्ती ।
वक्त्रं तदिन्दुमधुरं परिवृत्य भूयो
वाष्पाकुलेक्षणमवैक्षत यन्मृगाक्षी ॥

पुनः सायासं ।

तदङ्गमपि नाम तत्सहजकान्तिपूराप्लुतं
सुवर्णकदलीदलोद्दलितगर्भगौरवं पुनः ।
कठोरमदनव्यथापिशुनपाण्डिमाधिष्ठित
प्रथिमकुचमण्डलं परिरभेय वीक्षेयवा ॥ (१०)

---

यद्वा यत् असाध्यं तेजः तेजोरूपं नवनवाङ्गखोरणी दिग्धमांस-प्रचयं कर्त्तुं इह तेजो निष्ठाऽभेदप्रतियोगित्वं विशेषणविशिष्टमांस-प्रचयस्येति रूपकम् । नभोऽन्ते पैधिष्टेव अवर्द्धतेवेत्युत्प्रेक्षा । अखिलं तत् कर्म पूर्वोक्तमांसप्रचयमित्यर्थः अतिदृप्तैः एतैः तमोभिः तमोरूपैः यातुधानैः अत्रापि तमोनिष्ठाभेदप्रतियोगित्वं यातुधाना-नामिति रूपकम् । समसमयं धाष्ट्र्यतया अधावि इवेत्युत्प्रेक्षा इति योजना ।

(१०) परिरभेय आलिङ्गेय वा अथवा परिरम्भाभावे इत्यर्थः

अपि भूय एवैतत्।

आसीनः स इव स्थितः प्रचलितः स्वप्नायितो जाग्रविः
पश्यन्मीलितलोचनो व्यवहरन्मौनं प्रपन्नोऽथवा।
तां प्रेमाकुलवीक्षितां स्मितमुखीं सव्रीडमन्दागमां
श्लिष्यन्तीं प्रणयार्द्रमुग्धलपितां पश्यामि नक्तन्दिवम्॥

अन्यतो विलोक्य। सहर्षं।

कुरवकचम्पककेसरतमालबद्धिन्तालमण्डलाकीर्णं।
अपहसितनन्दनवनमन्तदिदं कात्यायनी गृहोपवनम्॥

सानुशयं। एतत् खलु निशि निशि साचाङ्गवत् सर्वं
वेद्वन्दतया मनुजैः दिवसैकगम्यमिति श्रूयते।

नेपथ्ये। कलकलः।

मारुतः। विलोक्य सविस्मयानन्दं। अहो! अहं पूर्विकाप्रण-
तावर्ज्जितमणिकिरीटपरस्परसंघट्टस्रस्तस्रस्तकुसुमापीड़े
विविड़ितं मृड़ानी भवनमुपर्य्युपर्य्यम्बरमापतद्भिरमृता-
शिभिः। निर्वर्ण्य सकौतुकं।

अवतरति विचित्रदर्शनोऽयं
विकसितनेत्रपरम्परो विड़ौजाः।
कमलवनवृतो मरुद्दिशोर्णां
नभस इवामरसैन्धवः प्रवाहः॥

सवहुमानं।

त्रैलोक्यं स्वविधेयं वलिजिद्वरजः सेवितारो निलिम्पाः

---

वीक्षेय इत्युभयत्र संप्रश्ने लिङ् प्रार्थनायां वा वीक्षणमात्रे-
तमिति भावः। अभिलाष विप्रलम्भः शृङ्गारः।

सन्तृप्तैः सप्ततन्तुस्तुतिरचितकवाग्मोघ्यतिः खग्निवाहः ।
स्वर्णाद्रिः सद्मवापीगगनसरिदसौ निष्कुटः कल्पवाटः
पौलोमी नेत्रपेयं वपुरिह किमिति स्लाघ्यता नो मघोनः ॥

अन्यतो विलोक्य । कोऽयं तडिदालोक इव प्रतिहन्ति

नयनरश्मीनतिमप्रचानप्रकाशः ।

विभाव्य । साधारणं क्रतुभुजां वदनं पुरस्त्री

सौभाग्यलोपि गिरिशस्य तृतीयमक्षि ।

तेजस्तिरस्कृततमस्स्वयमाविरस्ति

स्वाहातपः फलमुषर्बुध एव साक्षात् ॥ (११)

सस्मितं । मन्ये एतद्दर्शनादीषदुन्मीषितमन्दाक्षं स्मरि-
ष्यति स्मरदाहस्य हरमहिषी । अन्यतो विलोक्य । अयमिह
भीषणोज्ज्वलाकृतिः भगवान् मृडदेवः ।

प्रादुर्भवद्दुरितहतात्मनां जनानां

प्रायश्चित्त्युपकृतये प्रयुक्तदण्डः ।

देवस्य प्रियतनयः सरोजबन्धोः

केन स्यात् पितृपतिरेष नो नमस्यः ।

---

(११) साधारणमिति । क्रतुभुजां साधारणं वदनम् । अग्निमुखा
देवा इत्युक्तेरिति भावः । पुरस्त्रीसौभाग्यलोपि त्रिपुरदाहेन तत्स्त्रीणा
वैधव्यदानादिति भावः । गिरिशस्य तृतीयं अक्षि शङ्करभाललोचनस्य
वह्निमयत्वादिति भावः तिरस्कृततमस्स्वयं परिहृतध्वान्तसंघं इत्यर्थः
स्वाहा तपःफलं स्वाहादेव्याः तपःपरिणामभूतमित्यर्थः तेजः उषर्बुधः
वैश्वानर एव साक्षात् प्रत्यक्षतः आविरस्ति । इह क्लीवलिङ्गमपि
तेजसो विशेषणं तच्च उषर्बुधस्येति बोध्यम् ।

विहस्य । हन्त अदसीयस्योपवाद्यस्याकस्मिकोऽयं सम्भ्रमः ।
यथाहि ।

नमस्तुभ्यं मातर्महिषमथनीति प्रणमतां
गिरो गीर्वाणानां भयचकितमाकर्ण्य परितः ।
निरुद्धोऽपि स्वीयैर्जवधुतविषाणः प्रतिभयो-
घणात् कुर्वन् घण्टां द्रवति महिषो दक्षिणदिशं ॥

अन्यतः चक्षुषी चारयन् साशङ्कं ।

विकटवदनो विद्युत्पुञ्जप्रकाशशिरोरुहो ।
धृतनरशिरोमालस्तालप्रमाण महाभुजः ।
ज्वलननयनः शालप्रांशुस्तुतोऽपि भयङ्करः ।
क इह गगनाभोगात् दीप्यन्नवा तरदिकक्कः ॥

विमृश्य ।

मन्ये स एष रक्षःपतिः निरृतिः यो दिक्पालपङ्क्ति
निविष्टः पठ्यते ।

विहस्य । अहो महत्सौहार्दमस्मिन्नम्बिकापरिवर्गस्य ।
प्रत्युद्गच्छन्त्यग्रे स्निह्यन्ति स्वागतानि पृच्छन्ति
कथयन्त्यवसरमुचितं प्राप्तेऽस्मिन्निरृताविह प्रमथाः ।

स्पर्शसुखमनुभूय । कथमिदं शीतलकन्दमग्नमिवाच्छन्नमङ्ग
विलोक्य ।

मधुराननो धृतहारकुण्डलो
नयनं धिनोति सलिलाधिपतिः ।
परिपूर्णशीतकरविम्बधरः
नभसोऽवकाश इव तारकितः ॥

अहो इतरतेजः परिभावुकमेतस्य तेजः ।

अथवा। नाद्भुतमिदं यदन्यत् व्यभावयति प्रचेतसस्तेजः ।
इदमध्युषितामाशां प्राप्यच निर्वान्ति येन तेजांसि ।

अन्यतोऽवलोकयन् सौरभातिशयं विभाव्य ।

कएष तावत् सकलेन्द्रियतर्पणेन परिमलेन लिम्पतीव प्रपञ्चं । निर्वर्ण्य ।

कतृणं येन श्वसिति भुवनं मित्रवान् वीतिहोत्रः
लब्धाहारं फणधरकुलं शम्भुरन्यूनमूर्त्तिः ।
सोऽयं चूडाकलितसुमनः शेखरोद्भिन्नमाध्वी
लुभ्यद्भृङ्गी निनदमुखरं गन्धवाहः समेति ॥ (१२)

सचमत्कारमिव । कथमेतद्दर्शनेन किमप्युत्सुकमिव हृदयं । हृष्यति हृषीकमस्मिन् स्वात्ममतिर्जायते च किमिदं मे सचिन्तं । (१३)

अथवा समान नाम्नां सङ्गे स्यादैक्यधीर्यथा पयसोः ।

कथमप्यन्यतश्चक्षुरासज्य । कोयमकपिङ्गलाभ्यां सन्निधत्ते समग्र भूषणमणिप्रभाप्रकलितशार्वरान्धकारोन्मेषः पुरुषोऽध इति विभाव्य ।

---

(१२) कतृणं येन श्वसितीत्यस्मिन् पद्ये मित्रवान् प्रशस्तमित्रः भूम निन्दा प्रशंसास्वित्यदिना प्रशंसायां मतुप् । अन्यूनमूर्तिः परिपूर्णमूर्त्तिः अष्टमूर्तित्वादिति भावः ।

(१३) अथवा पक्षान्तरे इत्यर्थः समाननाम्नां एकाभिधेयानां सङ्गे ऐक्यधी एकत्वबुद्धिः स्यात् । दृष्टान्तमाह पयसोः पयश्च पयश्च पयसी तयोः यथा क्षीर नीरयोरित्यर्थः दुग्धोदकयोर्मेलने यथैकत्वबुद्धिः स्यात् तद्वदेकनाम्नोर्मेलनेऽपीतिभावः ।

अस्तोकसम्पदलकापुरसार्वभौमः
स्वच्छौषिभृत्तटनिवेशितचन्द्रचूड़ः।
यत्राधिराज्यकमलातडिदम्बुवाहो
दिक्पालमौलिमणिरेष विलिप्त एषः॥

सप्रश्रय हर्षं। अहो अवाङ्मनस गोचरं मम सौभाग्यं तथाहि।

देवोऽप्येष पुरान्तको नयनयोरध्वानमाढौकते
दूरादेव सुरै विंमुक्तसरणिर्दुग्धेन्दु कुन्दच्छविः।
एच्चै कलसदौपवाह्यवृषभ स्कन्धानुवृत्तिस्खल-
च्चूड़ावल्गितसिद्धसिन्धुलहरी झाङ्कारकोलाहलम्॥

सम्प्रति हि।

नाथे समेयुषि समीपमुपोढ़हर्षं (१४)
उत्थाय देव्यपि कुचस्खलितोत्तरीया।
प्रायः ससम्भ्रमतया करदत्तहस्ता
प्रत्युद्गमिष्यति शनैः कतिचित् पदानि॥

पुनर्विलोकयन्। अति मनोहरं वर्त्तते।

गन्धर्वसिद्धसुरकिन्नरसुन्दरीणां
आसामुदारनयनैर्वदनारविन्दैः।

---

(१४) नाथे समेयुषि इत्यस्मिन् पद्ये करं दत्तहस्ता कराय दत्तौ हस्तौ ययेति विग्रहः। स्वनाथस्य दत्तहस्तादानाय प्रसारित निजहस्ता सतीति भावः। यद्वा सख्या इति शेषः करे दत्तौ हस्तौ ययेति विग्रहः सख्या दत्तहस्ता इति यावत्।

सञ्जायतेऽद्य परितः परिपूर्य्यमाणं
सम्पूर्णचन्द्रशतदन्तुरमन्तरीचं ॥

यावदिमां प्रणमामि

इष्टानिष्टापादकच्छेदकेभ्यः शक्रादिभ्यो दिक्पतिभ्यो नमोऽस्तु।
सर्व्वैरेतैः सर्व्वदोपासितायै देव्यै भूयः शैलपुत्र्यै नमोऽस्तु ॥

इति प्रणम्य ऊर्द्ध्वमवलोक्य। हन्त शून्यमेव गगनतलं।
न सुरा नाशापतयो नाप्सरसो नो विमानानि।

पुनरपि तदेव केवलमवशिष्टं भीषणं तिमिरं।
मन्ये निवर्त्तितं शर्व्वाणिदर्शनैर्गतमेव गीर्व्वाणैः ॥

सहर्षं।

अत्र मम पश्चिमाणि प्रायश्चित्तप्रायस्तपांसि सम्यञ्चि।
देवोऽपि सार्द्धममरैर्येन प्रत्यचितस्त्वरचः ॥

तत् इदानीं अवसरो मम सर्व्वमङ्गलाचरणमूलोपसर्पणस्य। यावदुपसर्प्पामि। परिक्रामन्। साशङ्कं। अपि नाम प्रसीदेदम्बिका।

उपचितघनरागो रागकल्पव्रतत्याः।
प्रसभमखिलविघ्न ध्वान्तसङ्घस्य हन्त्रा।
कमलमिव करेण प्रातरर्को नलिन्याः।
कुवलयनयनायाः किन्नु पाणिं ग्रहीष्ये ॥

अग्रतोविलोक्य। इदमुपवनद्वारं यावत् प्रविशामि। प्रवेशं नाटयन्। स्खलनमभिनीय। सनिर्व्वेदं

कथमिदमविषमेऽपि स्थले स्खलितचरणः। अथवा इहैव स्थित्वा प्रसादयिष्यामि देवीं। कृताञ्जलिः।

वल्लद्विषि गतत्विषि द्रविणराजि हाहास्रजि

प्रचेतसि विचेतसि त्रिनयने त्रपामीलने ।

सुरद्रुहि रणद्रुहि त्रिभुवनद्रुहो मस्तकं

समर्दि महिषस्य यत्तदिह नौमि देव्याः पदम् ॥ आकाशे सश्लाघं ।

केलीरावोऽयरंसीन्न किल विजयया सार्द्धमावध्यमानो

नाकृष्टा दृष्टिपाताः किल विजयजुषश्चन्द्रचूड़स्य वक्त्रात् ।

उत्क्षिप्ते पादपद्मे किलमणिकटको नोच्चकैर्वा शिशिञ्जे ।

मातःशैलेन्द्रकन्ये ! महिषविमथनं नाम कोऽयं विलासः ॥

निमित्तं सूचयित्वा ।

दुर्लभे प्रियतमापरिरम्भे स्पन्दसे किमिति दक्षिणबाहो ! ।

हन्त वेत्सि न गिरं गगनोत्थां मल्लिका विघटनैक-

कठोराम् । निःश्वस्य । आकाशे ।

तत्तादृशं युवतिरत्नमदृष्टमूल्यं

दुष्प्रापमल्पसुकृतस्य ममेति युक्तं ।

त्वद्वाक्यमत्र किल यत्र जनित्वमूलं

तत् किं तवाम्ब ! सदृशं करुणार्द्रतायाः ॥

अथवा स्वकर्म्माधीन सुखदुःखः किमित्युपालभे देवीं

अतदर्हां कात्यायनीं ।

अतः प्रियतमालाभनिःसम्बलजीवन स्तोषयिष्यामि

स्वयमुपहृतैरहं कुसुमैराथ्याम । पुनश्चाकाशे ।

पश्याम्बिके प्रणतकामितकल्पवल्लि

सा मल्लिका प्रियतमा यदि दुर्लभा स्यात् ।

अस्तु स्वहस्त करवाल विदूनकण्ठं

वक्त्रं ममाद्य पदयोस्तव रक्तपद्मं॥ इति कौक्षेयकमुत्क्षिप्य सप्रार्थनं।

अस्तु ममभक्तिरतुला त्वत्पदयोर्देवि पद्मपाटलयोः ।
अपि च जननान्तरे वा प्रेयस्या सङ्गमोऽस्तु मल्लिकया ।

इति खड्गं कण्ठे न्यस्यति। आकाशे हा णाह मारुअ! परित्ताअसु परित्ताअसु कहं ण पेच्छसि मं रक्खसहत्थगअं णं तुए पुढमं वि कुञ्जरहत्थादो रक्खिदह्मि। हा अम्ब गोरि सच्चं रक्खस हत्थे दिस्संह्मि। हा ताद! हा अम्ब! एसा हदह्मि तुह्माणं गोरिप्पसादलद्धं एक्कउत्ती मल्लिआ।

हा माइ णिव्विसे से भअवदि एषा तुहअस्स मसमोविण णीदह्मि।

जाएसिणीहे ण हिमगिरिं उज्झिअ आगआसि।

हा सहि णोमालिए! हा कालिन्दि! दुल्लहं इदोवरं तुह्माणं दंसणं।

मारुतः। ससम्भ्रमाकूतं। खड्गं कण्ठादपनयन्।

कथमयं गगनगोचरः करुण करुणो मल्लिकायाः स्वरः।

सविषादवितर्कं।

किम्प्रासादशिरःस्थिता जलधरैर्नीता तड़ित्शङ्कया
किंवा मण्डयितुं दिवं सह सुरैराखण्डलेनोद्धृता।
अहोस्वित् शशिनः कला निपतिते धात्रा स्वयं शम्भुना
केन व्योमनि भीरुरार्त्तकुररी तारस्वरं क्रन्दति॥

ऊर्द्ध्वमवलोक्य। हन्त महान् प्रमादः।

कोऽप्येष व्योम्नि घोरश्चयइव तमसां भीमदंष्ट्राकरालं
बिभ्राणोवक्त्रमुग्रभ्रूकुटि पृथुशिराः पिङ्गलश्मश्रुकेशः।
व्यक्तं नक्तं चरो द्राक् द्रवति हहधिक् देवमास्वाङ्कदेशात्
प्रभ्रष्टा वेपमाना पतति तडिदिवाम्भोधरात् मल्लिकेयम्॥

सबाष्पं । हा ! निष्करुणता विधातुः ।

या सोपानपथादपि प्रियसखीवृन्दैरहर्म्यूर्ध्विका
दत्तां हस्तपरम्परामवतरत्यालम्बमाना शनैः ।
सेयं भङ्गुरमध्यमापतति हा ! तुङ्गात्क्रमः शृङ्गतो
मत्तैरावतलोलितेव नलिनी मन्दाकिनीपाथसः ॥

यावदेनां धारयामि । खड्गं निधाय प्रसारितोत्तानकरस्तिष्ठति ।

ततः प्रविशति मारुतहस्तगता वेपमानाङ्गी मल्लिका ।

मल्लिका । हा ! पड़ि अह्मि ।

मारुतः । सबाष्पं । महाभागे ! मा भैषीः ।

चेतःसमुच्छ्वसतु शाम्यतु वेपथुस्ते
नातः परं निशिचराद्भयमन्यतो वा ।
मन्वस्य मे परिजनस्य वराङ्गि ! हस्त-
पर्य्यङ्कदेशमकुतोभयमागतासि ॥

मल्लिका । सहसा विलोक्य । अह्म हे महाभाओ हा महाभाअ ! इति कण्ठमालिङ्गय ।

मारुतः । महाभागे ! किमेतत् ।

मल्लिका । सुचिरं निश्वस्य सलज्जं । आआसवाणो पामाआदो तुलहं महाभाअ संलपासिस्सूसणं मसन्ती अज्ज णिसीहे णोमालिअं विवज्जिजण मरणकिअणिच्चआ भवणुज्जाणं गएव्व तक्खणागएण । सभयं । केणवि रक्खसेण झत्ति घेत्तूण गअणमग्गेण आगदुअ अज्ज तुह हत्थे पाड़िदह्मि ।

मारुतः । सोच्छ्वासं ।

दिष्ट्या वर्त्से जनप्रिये मम हृते स्राच्यानसूनाम्मुचः
दिष्ट्या ते कुणपाशिना नवसुधा हृद्यं न लुप्तं वपुः ।
दिष्ट्या तस्य करच्युतासि गगनात्तूर्णं पतन्ती पुनः
दिष्ट्या चम्पकमालिकेव दयिते प्राप्तासि वक्षो मम ॥

मल्लिका । तुम्हे ण देवदादुईस्रा कहं एत्थ सण्णिहिदा ।

मारुतः ।

सोऽहञ्च सुन्दरि ! शिरः कमलार्चनेन ।
त्वामेव लब्धुमभिराद्धुमना भवानीं । कण्ठे हस्तेन प्रदर्शयन् ।
तमेनमधिशिरस्य करेण खड्गं ।

मल्लिका । ससम्भ्रमं । महाभाअ मामा साहसमणुचिट्ठेहि । इति हस्तं रुणद्धि ।

मारुतः । सस्मितं ।

आक्रन्दितेन तव भीरु ! निवारितोऽस्मि

मल्लिका । स्वगतं । हन्त अदीदो उत्तन्दो एव्व वण्णिदो । सकरुणानुरागं । अम्महे मह किदे पाणपरिच्चाए ववसिदो महाभाओ । नेपथ्ये । आः को नाम नृपशुरस्मदुत्सङ्गवर्त्तिनीमचूचुरन्मनुजकन्यां अद्य सा न दृश्यत एवाङ्गदेशे यामहमिकोत्पाते सिंहलद्वीपं नेतुकामोऽस्मि । उभावाकर्णयतः ।

मारुतः । विहस्य । हन्त देवीप्रभावेण मत्करपतितां नाज्ञासीदिव मूर्खो राक्षसः ।

मल्लिका । सभयं । हद्धि ! पुणोवि णि वट्टइ रक्खसो वेपते ।

मारुतः । विहस्य । महाभागे ! मा भैषीः । क्षणमत्र पादपान्तरिता तिष्ठ । तदहमेनं निहन्मि दुष्टराक्षसं ।

मल्लिका । कहं महाकाएण रक्खसेण सङ्गच्छइ ग्राहो।

मारुतः । विहस्य । भीरु ! किं महाकाय इति ।

तीव्रोग्रादुर्विषवीर्य्यभृतः परेषां
तेजस्विनो न गणयन्ति वपुर्महत्त्वं ।
यत्पद्मरागशकलाकृतिरद्रितुङ्गं
कार्त्स्न्येन भस्मयति काष्ठचयं स्फुलिङ्गः ॥

मल्लिका । सभया पादपान्तरिता तिष्ठति ।

मारुतः । खड्गमुद्वृत्य सावष्टम्भ मास्ते ।

ततः प्रविशति गवेषयं
नाटयन् यथोद्दिष्टः सम्भ्रमो राक्षसः ।

सोऽहं सिंहलदेशकाननपतिर्य्यस्याग्रतो नामतः
मृत्युः कम्पितकूटशाल्मलिरपि स्थातुं न च क्षमते ।
तस्यैवाद्रि तटस्थितस्य विकटग्रीवस्य रक्षःपते
रङ्कस्थां मम कन्यकामपहरन् किं नो गतायुर्नरः ॥

मल्लिका । सभयं । अह्म हे एदेण भअङ्कर सरीरेण कहं णु कुवलअदलकोमलस्स महाभाअस्स सङ्गमो होइ ।

मारुतः । दृष्ट्वा सविस्मयं । अहो एतस्य वपुः प्रकर्षः ।

उद्ग्रीवैः परमोच्चितत्वमचलाभोगं शिरोभ्रङ्कषं
विन्ध्यप्रस्थविशालभीषणमुरस्तालोपमानौ भुजौ ।
भूयः कम्पितभूतलश्चचरणन्यासस्तदेतद्वपुः
सृष्ट्वा प्राक् परमाणुतां गमितवान् मन्ये विधिः पर्वतान् ॥

रक्षः । रे रे अमङ्गलस्पर्श !

क्रव्याशिनीं किसलयादपि कोमलाङ्गीं (१५)
शृङ्गारसागरसुधां स्मरजीवनाड़ीं ।
तामिन्दुविम्ववदनां सृशतः कथन्ते
क्रव्यादपाश शतधा न पभालमूर्द्धा ॥

राक्षसः । मारुतं विलोक्य । सत्यमयमेव चौरः । सोपहासं
साधु रे परिस्पन्द ! साधु !

कस्त्वं करालविषभीषण कालसर्प-
स्फारस्फटाफलकरत्नशिलाविशिष्टां ।
तां कन्यकामहह सम्प्रयमस्मदङ्क-
पर्य्यङ्कमध्यविधृतामसधाविशङ्कं ॥

मारुतः । सक्रोधं । आः लोकविद्विष्टाचार ! कन्यका-
चोर ! भूयः किमेवं तव व्यवहारः । सावधीरणं ।
रे रे पापमते प्रतीच्छसि कथं वालां पलाशाधमि-
स्त्वेवाज्याहुतिमाशु धाव चपल त्वं चेत् तवासि प्रियः ।
नो चेदेष करोमि खड्गदलितत्वत्कन्धरान्तःशिरा
नालष्ठ्यूतकवोष्णरक्तलहरी मेदस्विनीं मेदिनीम् । (१६)

राक्षसः । सभ्रूभङ्गम् । आः ममापि विकटग्रीवस्य
पुरतस्तिष्ठन् मुक्ताशङ्को विकत्थते च । निर्वर्ण्य सप्रत्यभिज्ञं

(१५) हे क्रव्यादपाश राक्षसापसद इत्यर्थः याप्ये पाशप् इति कुत्-
सितार्थे पाशप् नपफालनविशीर्णे इत्यर्थः । भिफला विशरणे इति
धातोः परस्मैपदाल्लिट् ।

(१६) रे रे इतराश्विन् पद्ये त्वं तव आत्मनः प्रियोऽसि चेत् धाव
पलायस्वेतर्थः जीवितेच्छा चेन्नेह तिष्ठेति भावः ।

न्तं । अयमेव मद्दुकूलाञ्चल लिखितलक्षणः । यथिल कन्या चोर इति खड्गजिह्वेनोपदिष्टः । प्रकाशम् । मूढ ! जीवनिरपेक्ष ! मनुष्यडिम्भ ! दिष्ट्याऽऽगतस्त्वमिह तिष्ठतु ताम कन्या ।

त्वामेव कोमलकलेवरमात्मपेषं ।
पिष्ट्वा पिबामि मधुरं रुधिरं यथेष्टं ।

इति मारुतं स्कन्धे उद्धृत्य धारयति ।

मल्लिका । सत्वरं पादपान्तरान्निर्गम्य साक्रन्दं । भद्द रक्खस ! एषा तुह अग्गलो मुञ्च महाभाअं मं उण भक्खेहि ।

राक्षसः । अनाकर्णितकेन निष्क्रान्तः ।

मल्लिका । सबाष्पं । हन्त णीदो एव्व रक्खसेण महाभाओ । सकरुणं । हा सअललोअलोअण चंद ! हा कंदप्प णो हरंग ! हा सज्जण चूड़ामणि ! हा लच्छी विहारमंदिर ! हा मल्लिआ हिअअ वल्लह ! मारुअ ! कहं ण दे सव्वलक्खण लक्खिओ तारिसो विग्गहो रक्खसाहारो मासि । हत्थि अहं एत्थ पापा मन्दभाइणी दे सव्वअणस्स पुणो पुणो कारणम्हि । निःश्वस्य । णिप्फलजणाए मरणं वि दुल्लहं एव्व आसी । अम्ब भअवदि विस्सरे ! देहि मे विवरं । दिशो विलोक्य । हन्त कालञ्जणं लुणीरन्धे भुवणे कहं गच्छामि । कं सरणं अक्कन्दामि । ति रोदिति । प्रविश्य अपटीक्षेपेण मन्दाकिनी ।

मन्दाकिनी । वत्से ! मामैषीः ।

मल्लिका । विलोक्य । सबाष्पं । अम्हहे भअवदी ! भअवदि ! परित्ताअसु परित्ताअसु । इति पादयोः पतति ।

मन्दाकिनी । सकरुणमालिङ्ग्य ।

अयाथि भीरु ! युवयोः सरसानुबन्धो
ज्ञानात्मकेन नयनेन मयैष: सर्व्वः ।
रक्षांसि यान्तु विलयं विविधाश्च दोषाः
दैवं प्रसीदतुतमां शिवमस्तु भूयः ॥

अपिच ।

रक्षो हस्तगतो मारुत इति मास्म करोर्मनसि सन्तापं ।

विख्यात विक्रम विडम्बित फल्गुनस्य
रक्षांसि नो परिभवे प्रभवेयुरस्य ।
किं जृम्भमाण किरणस्य तिरस्क्रियायां
बालस्य वासरमणे रलमन्धकाराः ॥

नेपथ्ये । चटचटध्वनिः ।

मन्दाकिनी । विलोक्य सहर्षं । अज्ञातमारुतपराक्रमे !
अस्य महाभागस्य चण्डिमानं । एष खलु ।

स्कन्धे स्थितोऽस्य गतभीरसिना शितेन ।
छिन्ने शिरो विरटतः पिशिताशनस्य ।
दम्भोलिकोटिकठिनेन नखाङ्कुशेन
पञ्चाननः करिपते रिव कुम्भकूटं ॥

मल्लिका । सहर्षं । सभयं च पश्यति ।

मन्दाकिनी । सानन्दम् ।

अभिहतमस्तकः पतति वेपितभूमितलं ।
रजनिचरो गिरीन्द्र इव वज्रभिन्नतटः ।

सविस्मयं ।

इहइह कबन्धतोऽस्य धृतदिव्यवपुः पुरुषः

प्रचलित भूषणो झटिति कोऽपि समुत्पतितः ॥

सविस्मयानन्दं ।

मल्लिका । भअवदि ! अच्चेरं एदं अदिभीसणादो रक्खसादो दिव्वपुरुसो उट्ठिओत्ति । पेच्छ पेच्छ पदक्खिणी कदुअ सविणअकलिअंजलि पल्लविअ मोलिदेसो पणमइ अ महाभाअं ।

मन्दाकिनी । देवपात्रभूतोऽयं मन्ये कोऽपि पुरुषः शापवशेन राक्षसत्वमापन्न इति ।

नेपथ्ये । कलकलः । आकर्णयतः ।

मल्लिका । सभयं । भअवदि ! रक्खसभयेण मसेमि पुणो वि रक्खसा आअच्छन्तित्ति ।

मन्दाकिनी । विलोक्य । वत्से ! एते सबाष्पवदनं तातममात्य विश्वावसुं पुरस्कृत्य त्वदन्वेषिणः परिभ्रमन्तः सत्वरमितस्ततो गृहीतविविधायुधा वीरपुरुषाः । पुनर्नेपथ्ये । हा पुत्रि मल्लिके । नन्विन्द्रनीलालोकादपि तिमिर वुद्ध्या बिभेषि ।

मल्लिका । सबाष्पं । हा तादो अ कन्दइ ।

मन्दाकिनी । एहि वत्से ! त्वद्दर्शनशोकविह्वलं तातमाश्वास्य प्राणदान महोपकारिणं विजयिनं मारुतमपि सम्भावयाव: । इति निष्क्रान्ते ।

इति पञ्चमोऽङ्कः ।

---

## अथ षष्ठोऽङ्कः ।

ततः प्रविशति काषायाम्बरयुगलहस्तः पुरुषः ।

पुरुषः । सहर्षं । अहो ! विहसिअ वहण्णइ णाअण्हावलुहिज्जंत मल्लिआ कग्गहणा मङ्गलशिलाहणिज्जोणाह संवर अंमिमहंतो खु सिणेह वंधो विअ्ङुराअ उत्तसकहराअस्स जेण अज्जसिण्हिदविवाहसम्भाविअ महाजण णिस्सम्बाहसञ्चारजोग्गो णिजहवणेक्कदेसो विभज्जिअ दिण्णो। अविअ अक्खिअ णिच्चिन्दं वितंदविअ्ङुराअं अगणअन्तो णिअसोअरीं रमअन्तिअं अज्जकलपिङ्गसस दाउं पवट्टइ आ। विहस्य। सोमसर कूलदंसणं आरभिअ महन्तो क्खु अहिलासो अज्जकलपिङ्गसस रमअन्ति अभि जेण साहिलासेहिं णअणं चलेहिं पुणो पुणो पेच्छइ। सओ एव्व अमग्गे गदुअ किंवि किंवि संल्लवइ पोसेइ अणिअनअणेण वि अप्पणो भिच्छापदाणइ। पुनर्विहस्य। सा उण विसम्बिअ परिहरदि एदस्य दंसणं। विमृश्य। जं होदि तं होदु। सव्वहा लहिस्सदि एव्व रमअन्तिअं अज्जकलपिङ्गओवि! जेण अघडिअ घरणेक्क शिलाहणिज्जा मन्दाइणो आवज्जोअदि। णाह सम्बरएण तेहिं तेहिं सक्कारेहिं। जइ सा मसेइ कमलिणीं चन्दाणंवि परप्पराणुराअं उव्भावेदि कुमुदिणीं वा चण्डअरेण संघडेइ। दिस्संअ महहत्थे णाहेण अभिणवुम्मिसन्तकोअणदपसवसस्स कोमलं एदं कसाअम्वरजुअलं

ताए एव्व दाव जाव बिवाहमङ्गलोवअरणव्वापुड़ं भअ-वदीं दट्‌ठुं एदं गोपुरणदकंचण सालभञ्जिआ पुञ्जप्पभा-वड़िअ विज्जुल्लआ पिच्छिलं अमच्चवीसवसुमन्दिरं पवि-सामि । प्रवेशं नाटयित्वा पुरतो विलोक्य । एसा रमअन्तिआए पिअसही महुअरिआ इदो एव्व भवणादो आअच्छइ । प्रविश्य मधुकरिका । सानन्दं स्वगतं । साहु अवि गोओ सम्ब-रअ वअणीवाओ दिट्‌ठो अणिअरसाइरण महप्पहावाए भअवदीए मन्दाअणीए । निःश्वस्य । सनिर्वेदं । हन्त सहजो कोवि सत्तू एव्व रहराओ पिअसहीए रमअन्तिआए जोमालिअं विअ मक्कडअस्स णं कलपिङ्गअस्स संघडअइ । सोच्छ्वासं । एदं वि उवदिट्‌ठो एव्व महकणोपिअ सहीए विअ जाणिदव्वो वाओ भअवदीए । पुरुषं विलोक्य । अज्ज एक्कघरवासपरिअएण जाणीअदि । सम्बरअस्स परिअणो चवलओ णाम एसो ।

पुरुषः । उपसृत्य । महुअरिए ! अवि जाणीअदि कहिं भअवदि मन्दाइणी वट्टइत्ति ।

मधुकरिका । स्वगतं । कीस एसो भअवदिं असेसइ होदु पुच्छिस्सं दाव । प्रकाशं । चवलअ ! कीस भयवदी ।

चप । विहस्य । णं एसा इमस्स किए मुगवेन्दुसेहर विलासिणीए समुल्लसिअं आआसभासिदं ति णाह सम्ब-रअस्स सव्वीसम्भभट्टाणं वट्टइ ।

मधुकरिका । स्वगतं । भअवदि णमो तुम्हाणं वंचण-प्पहावस्स ।

चप। स्वगतं। कहदूस्सं। रमअन्तिआवुत्तन्दं। प्रकाशं। अज्जविसेसदो दट्टव्वा। जं रमअन्तिआ अणुजल- दृदव्वा सा क्खु अग्गएण रुद्दाएण दिस वि वाम- सीला णाणुमस्सदू कलपिङ्गअस्स परिणाअं।

मधुकरिका। सोपहासं। स्वगतं। अज्जअं चरणताडणा फलो भविस्सदि हदासस्स कलपिङ्गअस्स परिस्समो। प्रकाशं। चपलअ! ईसक्करं क्खु रमअन्तिआए अणाजलणं भअवदीए नेपथ्ये॥ नवमालिके किमिति विलम्बयते। भअवत्या देशको नाम समयः सुरभिमारुतागमनसुभगं लीलोद्यानं प्रवि- ष्टायाः त्वदागमनं प्रतिपालयन्त्या मल्लिकायाः। तद्‌याहि विविक्ते सविशेषं मण्डयतां अद्य विवाहोचितैर्माङ्गलिकै भूषणैः। यावन्न परापतति सम्बन्धिवर्गः। उभावाकर्णयतः

मधुकरिका। स्वगतं। जुज्जइ मारुओ वि तहिंचिअ कलअण्ठव्भमरअसहाओ सारसिआए निउढं आणिओ वट्टइ ता अहं वि उद्दूए संविहाणे पवट्टामि। प्रकाशं। चपलअ एदे कञ्चुइणो भअवदीए आदेसं ववहरन्ति। ता गच्छ समोवट्‌ठिआ। सुलहदंसणा एव्व भअवदी। इति निष्क्रान्तौ प्रवेशकः।

ततः प्रविशति मारुतः कलकण्ठो भ्रमरकश्च।

मारुतः। भ्रमरक! अपि सत्यं उपकण्ठवर्त्तिलता- मण्डपमध्यास्ते मल्लिका।

भ्रमरकः। णाह! णं भणामि। कालिन्दि णोमा लिआ किं पारइमङ्गलमण्डणविहिं चिट्‌ठन्ति।

मारुतः । सोच्छ्वासं ।

(१७) आशंसाभिरहर्दिवं ह्यधिरुजा यल्लिप्सितं प्राङ्मया-
नैराश्यं यदलाभकातरधिया प्राणेष्वपि प्रस्तुतं ।
हस्तप्राप्तमिवाद्य जीवितफलं तद्भाति न ज्ञायसे
मातस्त्वं भवितव्यते! कथमिव प्रादुर्भविष्णो पुनः ॥

---

(१७) आशंसाभिरिति । अहर्दिवं आशंसाभिः अप्राप्तस्य प्राप्तुमिच्छाभिः हेतुभिः अपि लभेय मीप्सितवस्तु इत्यपरिमिताभिराकाङ्क्षाभिरित्यर्थः । अधिरुजा तु अधिकरुजाऽपि इत्यर्थः । तु पादपूरणे भेदे समुच्चये ऽवधारणे इति मेदिनी । अनवरत चिन्तोत्थ मानस महाव्यथेनापि इति भावः । मया प्राक् यत् वस्तु लिप्सितं पुनरपि इच्छितं वाञ्छाहेतुक दुःसह मनोव्यथा सम्भवेऽपि न वाञ्छासन्त्यक्तेति भावः । तदपि हन्त तदन्तर शायिनी लगति चिङ्कगीव लगेत्त्वेत्यादिना प्रागुक्त प्रकारेणेति बोध्यं । नच तावन्मात्रं अपितु शरीरत्यागे प्रावर्त्तीत्याह । प्राक् मयेति अत्रापि काकाक्षिन्यायात् इत्युच्यते । प्राक् मया यदलाभे यस्य वस्तुनोऽलाभे कातरा या धीः तया हेतुना । यद्वा यदलाभकातर धिया मया इत्यन्वयः । प्राणेष्वपि नैराश्यं निस्पृहत्वं प्रस्तुतं प्रस्ताव विषयीकृतं अनुष्ठितमिति यावत् । अपिच जननान्तरे वा प्रेयस्या सङ्गमोऽस्तु मल्लिकया इति खड्गं कण्ठे न्यस्यतीति प्रागुक्त प्रकारेणेति बोध्यं तत् जीवितफलं जीवितफलभूतवस्तु मल्लिकेत्यर्थः । अद्य हस्तप्राप्तमिव भाति । हे मातः! जनदस्त्व भवितव्यते! भवितव्यता देवि! पुनः भूयः कथमिव केन प्रकारेण प्रादुर्भविष्णो प्रादुर्भाव मेष्यन्ती इति न ज्ञायते न बुध्यते ज्ञा धातोरात्मने पदात् भावे लट् । न ज्ञायसे इति पाठे न बुध्यसे इत्यर्थः । कर्म्मणि लट् । साम्प्रतिकस्तव प्रादुर्भाव एव मत्वाञ्छितत्वेन परिणामवान् दृश्यते । किन्तु जगदन्बात्वेन अनियम्याया स्तव भूयो भविष्यन् प्रादुर्भावोऽनेवं विधैवं विधत्वाभ्यां संदिह्यत इति भावः । अत्र भावि-

कलकण्ठः। मा मा सन्दिहीष्ठाः। ननु ते हस्तप्रा
मेव जीवित फलं भवान्याः प्रसादतः। यतः स्व कण्ठच्छे
साहस निःशङ्क प्रवृत्त एव हस्ते पातिता मल्लिका।

भ्रमरकः। णाह एसो लदावलयन्तरेण लआमण्ड
मग्गो।

मारुतः। भ्रमरक! नीरन्ध्र पत्र पटल मांसललतापु
निरुद्धेऽपि प्रदेशे परिजनापातशङ्का दुःस्थित हृदयो
पारयामि प्रचलितुं।

भ्रमरकः। णाह! भअवदीए आदेसेण वेत्तपाणी
उज्जाणादो दूरणिरत्थीक्खु परिअणो।

मारुतः। सहर्षं। ननु सर्व्वथा प्रमादिनी भगवत्या
नीतिः। तदादेशय मार्गं।

भ्रमरकः। इदोइदो। सर्व्वे परिक्रामन्ति।

कलकण्ठः। विलोक्य। अहो सर्व्वतः प्रत्यासन्न परि
णअमंगलपिशुनोदात्त परिष्करणममात्य विश्वावसोर्भ
वनम्। तथाहि।

---

तव्यते इति पदस्य भवितव्यं कर्म तस्य भावः भवितव्यता इति व्यापार
धर्मत्वेन अर्थकल्पन मयुक्तं तथात्वे संबुद्धे वैयर्थ्यात् किञ्च मातरि
विशेषणस्य असाङ्गत्यात्। तन्नामक देवतीर्थकत्वे तस्या अनियम्यत्वे
च प्रमाणन्तु जातएष महाक्रूरः सर्वसंहारकारकः एतस्य मोहनार्थाय
देहि भार्य्यां यथोचितां। एवं शिववचः श्रुत्वा स्वकं पृष्ठं ददर्शह ततो
देवी समुत्पन्ना योच्यते भवितव्यता रूपलावण्य सम्पन्ना पीनोन्नत पयो-
धरा इत्यारभ्य ततः प्रीतात्तु सा प्राह देव्यग्रे प्रणता स्थिता ममाधी-
न मिदं विश्वं ब्रह्मविष्णु शिवात्मकं कालस्यायं ममाधीनः कोपि मां नच
वेत्त्यत्र इत्यादीनि।

(१८) दत्ता नूतनचित्र पङ्क्तिरमले प्रासाद भित्तिस्थले
नद्धा वन्दनमालिकास्ततस्ततो द्वारेषु माध्वीमुचः ।
किञ्च क्षौमवितानमण्डलकृत प्रालम्बमुक्तावली
शुम्भत्काञ्चनतायमानसुभगा वाह्याङ्गणक्षोणयः ॥
अपिच ।
ारादावाद्यलिन्दध्वजशिखरपटीपल्लवान् लोलयन्तो ।
ोढ़ारस्तोरणस्रक्कुसुम नवसुधा विप्रुषां गन्ध वाहाः ॥
र्षन्तो वल्गुवल्गत् कुचभरमभितः कुङ्कुमोत्कर्षवेगा
ुर्वे क्षद्योल्लतानां परिजन सुदृशां कङ्कणाक्कि ङ्कृतानि ॥
भ्रमरकः। कर्णं दत्त्वा । णाह ! किं कङ्कणणादो एव्व केवलं

---

(१८) दत्ता नूतनचित्रेति । नूतनचित्र पङ्क्तिः अमले प्रासादभित्ति-
स्थले दत्ता तथा द्वारेषु स्वालम्बि पुष्पमालासु माध्वीमुचः मकरन्द
ार्त्रिणयः वन्दनमालिकाः तोरणानि तत स्ततो नद्धा यद्धाः । वुधै-
न्दनमालातु तोरणं परिकीर्त्तितं इति हलायुधः । तोरणं नाम
ोरणोऽस्त्रीवहिर्द्वारमित्यमरोक्तत्रा वाह्यः प्रतीहार इति केचित् तत्
। तथात्वे प्राक् गृहयज्ञन कालएव वद्धानां तोरणानां प्रकृत पद्ये तत
तो नद्धा इति सर्वत्रापि नवीन वद्धत्वोक्तौ रसाङ्गत्यापत्तिः । अत
तदुक्तिवशात् यद्धि परस्परेण तिर्य्यक् वद्ध पुष्पमालादिकं स्तम्भद्वयं
ाम्बद्वये च संस्थाप्यते तत् वहिर्द्वारादिपदैरुच्यत इत्यन्येषां व्याख्यानमेव
क्तं प्रतीमः । किञ्च अपिच क्षौम वितानानां मण्डलेषु निवहेषु
ता वद्धाः प्रालम्बमुक्तावल्यः ऋजु लम्बिमुक्ताहाराः ताभिः शुम्भन्ति
ासमानानि (शुभ शुनुभ भासने इति धातोर्निष्पन्नं) हार प्रतिफलनेन
रस्पर किरण सम्पर्केण चेति भावः । यानि काञ्चनानि तैः ताय
ाना: विस्तारीभवन्त्यः (तायृ सन्तानपालनयोरिति धातोर्निष्पन्नं)
तएव सुभगाः मनोहराः वाह्याङ्गण क्षोणयः सन्ति इति शेषः ।

कहिदो एसो इदोतदोप धावन्तवार सुन्दरीणिअम्बविम्बलम्बि मणिमेहलासहस्स झङ्कारमुहरोघोलन्त सअलं त्तिउरज णभूषणारवणिमज्जन्तमङ्गलमुअङ्ग सङ्काहलपणवणिस्सणो सणिहिदभूदेववग्गपरिज्जजन्त पुण्णपुण्णाहघोस मङ्गलो गीत्त जरं मण्डलाभत्तवपित्तप्पव्वइ लच्छीपरिणओ। णच्चण मङ्गल सङ्गीअ महुरो-हाम-वेस-वंहि बुंह वड्ढिअ जअसद्द हलह लामेदुरो महन्तो क्खु एसो उच्चअ कोलाहलो।

मारुत:। निश्वस्य। सखे कलकण्ठ!।

परिणयसमय स्तन्वत्रा यथा यथा भजति सान्निध्यं।
संशय दोलारूढ़ं तथा तथा वेपते हृदयं॥

भ्रमरक:। णाह आअदं ह्म लआभवणपेरंत्तं।

मारुत:। सहर्षं। किमिदमेव मल्लिकाधिवाससुभग लताभवनं।

कलकण्ठ:। ननु श्रूयते प्रसाधन समय सम्भाव्य मणोत्पन्न विरतो भूषण झङ्कार:।

भ्रमरक:। णाह! एसा मङ्गल न्हाणविसुद्धसुद्धपरिक्खाम पण्डुरंग सविसेस लोहणिज्जदंसणा। णोमालिआ णिव्व ट्ठिअ विवाहणोवच्छमहुग्घोदाररमणिज्जवेसा एत्थ लअन्त रेण। लज्जाण लच्छि विअ सक्खा लक्खिज्जइ तत्तहोदी

कलकण्ठ:। पत्रजालान्तरेण विलोक्य। एषा खल्वि वलितमुखी कालिन्दी नवमालिकाभ्यां किमपि संलपति तदिह लतान्तरेण प्रविश्य गूढ़ं पश्याम:। तथा कुर्वन्ति।

ततः प्रविशति यथोद्दिष्टा मल्लिका नवमालिका कालिन्दी च

मल्लिका। सहिओ तुह्माणं उप्पलं भवअणेण एव्व
णुमदो मए एसो मण्डणविद्धी।

नवमालिका। सहि! मा मा असहा सम्भावेहि।
मारुतं विलोक्य सहर्षं जनान्तिके। कालिन्दि! आअदो
एव्व पिट्ठभाए महाभाओ किं पआसिस्सामो। जेण
पच्चप्पच्चओ होइ पिअसहीए।

कालिन्दी। सहि मामा पआसेहि समए एव्व पआस-
णिज्जो।

नवमालिका। स्मित्वा। सहि मल्लिए! णं तुएवि अह्मे
विप्पलद्धह्म।

मल्लिका। सानुतापं। कदा।

नवमालिका। णं रत्तिअं अह्मे वि वञ्चिअ पाणपरि-
चाए पवुत्तासि।

मल्लिका। लज्जते।

कालिन्दी। दिट्ठिआ तक्खणासादि अरक्खसेण।
वेक्कूण महाभाअस्स हत्थे पाडिआसि।

कलकण्ठः। सखे! यत्रैव पतिता मल्लिका कथं
तत्रैव स्थले सन्निहितोऽसि।

मारुतः। अहं खलु अन्तरुपवनं विविक्तुमरणस्ख-
लितेन सशङ्कस्तत्रैवातिष्ठं।

मल्लिका। कालिन्दि णह्नि सो रक्खसो। अविदु कोवि
दिव्वपुरुषो एव्व। कहिअं भअवदीए महाभाअस्स जणण-
न्तर मित्तं सोत्ति। उभे विस्मयं नाटयतः।

कलकण्ठः। सखे ! क्व गतः स महापुरुषः । यस्त्वया जुगुप्सिताद्वयोजन्मनो विमोचितः ।

मारुतः। स खलु मां सुहृत् स्नेहेनाऽऽभाष्य सखे ! यदा मां स्मरिष्यसि । तदा सन्निधास्ये विधास्ये च तवाभिमतमिति वदं स्तिरोऽभूदेव ।

नवमालिका । ता तुमं एव्व विप्पलंभसीला ।

मल्लिका । उइओ आलम्भो ।

नवमालिका । सहि ! कहेहि किं अणुऊलो तुह एसो मणहरणविहि णवेत्ति ।

मल्लिका । सलज्जस्मितं । सहि ! मह एसो ईरिसोत्ति ण पारेमि लज्जाए पसंसिदुं । दूरे क्खु वअणाणं पिअसहीए पसाहणगो वुणो ।

कलकण्ठः। सम्यगुक्तं मल्लिकया वचनानां दूर इति । नन्वेकैकं इति वर्णनमतिक्रामति । इदमेव तावत् पश्य ।

अस्याः सुगन्धिनवकुङ्कुमपङ्कदत्तो-
मुग्धश्यकास्ति तिलको मदिरेक्षणायाः ।

मारुतः । साभिलासं ।

आविष्टरागमभिराममुखारविन्द-
निष्यन्दलग्नमिव मे हृदयं द्वितीयं ॥

कलकण्ठः । सस्मितं । सखे ! अपहृतमेव मम वचनं ।

भ्रमरकः । णाह ! पेच्छ पेच्छ । एसा णाहेण दिण्णा वेढइ हारयट्ठी कन्धरामूलम्मि तत्तहोदीए ।

कलकण्ठः । निर्वर्ण्य । सत्यं सैवेयं वयस्य दीरन्तर विहार दुर्ललिताहार वल्ली । विहस्य ।

मुक्तावलीस्मर विदाहविपाण्डु मूले
नष्टा चकास्ति जित कम्बुनि कण्ठकाण्डे ।

मारुतः ।

निश्चिन्वती मृगदृशो वदनं मृगाङ्कं
नक्षत्र पङ्क्तिरिव सम्पतिता नभस्तः ।

कलकण्ठः । सप्रश्रयं । वयस्य ! ननु सर्व्वोत्तरस्ते प्रति-
ोत्कर्षः ।

मारुतः । सखि ! सञ्जप्रतिभाङ्कूरमुदार विरचितमूल
म्मिल्ल गर्भक ग्रथितमालती कुसुम सौरभ्य लुभ्यदिन्दिर-
न्दरी मधुरसमारब्ध मङ्गलसङ्गीतकं अनर्घ्यताटङ्क करप-
वित कोमल कपोल विन्यस्त पत्र लता सङ्कुलं अति
रभि हिमजलशबल कुङ्कुम घनसार सरसाङ्गराग
लित घनतुङ्ग कुचकुम्भाभोगप्रेङ्खोलहारं विशालनिविड़
ानितम्बमण्डल मण्डितकाञ्चन काञ्चीगुण पद्मरागमयूख
ञ्जमञ्जिष्ठारञ्जितमङ्गलक्षौमं आमुक्तमौक्तिक नूपुरकिरण
विमहंससंसेवितचरण पुण्डरीकं अभिराममस्याः
वाहनेपथ्यं । निर्वर्ण्य । अथवा पुनरुक्तान्येवानवद्याङ्ग्या
ण्डनानि । निःश्वस्य ।

(१०) नेत्रोपान्तवतंसिते श्रुतिपुटे नीलोत्पलं निष्फलं
हासस्योपरिकल्पिते स्तनतटे हारोऽवहारः कथं ।

---

(१०) नेत्रोपान्तेति । वामाक्ष्याः सुन्दरदृशः नेत्रोपान्तवतंसिते
त्रोपान्तेन अपाङ्गेन लक्षणया कटाक्षेणेत्यर्थः वतंसिते कर्णपूरीकृते
ुतिपुटे नीलोत्पलं निष्फलं अक्रियाकारित्वादिति भावः । वतं सिते

पिण्डालक्तकपातनं चरणयोः पीड़ाफलं ताम्रयोः
वामाक्ष्या वपुषि स्वभावसुरभौ व्यर्थानुलेपव्यथा ॥
भ्रमरकः । कहं ण दीसइ चूलापदेसे सिहामण
नवमालिका । सहि ! इमस्सिं रअणमुउरे पेच्छ
अवअवलच्छी मण्डिअं मङ्गल मण्डणं । इति दर्प
दर्शयति ।
मल्लिका । सलज्जं पश्यति ।
मारुतः । सखे ! पश्य ।

एतावति त्रिभुवने नवयौवनोद्यत्
उद्दामरूपमहिलाजनमण्डितेऽपि ।
नास्त्येव विभ्रमनिधेरुपमानमस्या
यद्यस्ति रत्नमुकुरे प्रतिविम्ब एषः ।

---

इत्यत्र वष्टिभागुरिरल्लोपमित्यल्लोपमित्यल्लोपः । अवतंसो न स्त्रियां
कर्णपूरे च शेखरे इति विश्वः । हास औपरिकर्मिते मन्दहास
परिष्कृते स्तनतटे हारोनु मौक्तिकमाला वा अहारः कथं निष्क
किं इत्यर्थः । कलहायत एवेति भावः । हारोमुक्तावलौ युद्धे
विश्वः । ताम्रयोः चरणयोः पिण्डालक्तक पातनं लाक्षारस सम्प
पीड़ाफलं पीडैव फलं यस्येतिविग्रहः । पीडामात्र प्रयोजकमि
भावः । स्वभाव सुरभौ पद्मिनीत्वात् सहज पद्मगन्धे इत्यर्थः । तदु
कमलमुकुल मृद्वी फुल्लराजीवगन्धः सुरत पयसि यस्याः सौरभं तद्द
इति । वपुषि शरीरे अनुलेपव्यथा उद्वर्त्तन प्रयासः व्यर्था निष्प्र
जनेत्यर्थः । अत्र नेत्रोपान्तवतंसिते हास औपरिकर्मिते रत्न
स्वभाव सुरभौ इति साभिप्रायेण विशेषण चतुष्टयेन स्थानविशे
मण्डन वस्तुविशेषाणां नैष्फल्य कथनात् परिकरालङ्कारः । अलङ्का
परिकरः साभिप्राय विशेषणैः इति लक्षणात् ।

नवमालिका। सहि! पेच्छ पेच्छ। णिसग्गसिणिद्धणील-
अणुप्पल सोहादुल्लक्खविसेस कज्जललेहं सिणिद्धमहुर-
लदुव्वलगण्डमूलप्पान्तपल्लत्थ कत्थुरिआ पत्तलआ विभा-
अ सोहादिमअं मणभरकुङ्कुम दिलअ लंच्छिअ
ोज्जणिड़ालदेसप्पड़िविम्बिअ गोरी चरणलग्गलक्खारुण
ङ्कुर शिरचन्दलेहासोहं उदार सीमन्त पहादिसमुन्दर
न्दूर कन्दलिअ कन्दप्पपआवङ्कुरं। सअलजणलोअणाणं
ान्दमण्डलं पड़िविम्बइ तुह वअणम्बुअं॥

मल्लिका। णोमालिए! कीस सिहामणिणा ण
सिदह्मि।

नवमालिका। सहि! किं विसुमरिदं णं तुए एव्व
हेअं रक्खसादो णिपड़ंतीए पुणो वि पव्भट्टो सोत्ति।

मारुतः।

ई शिखामणे! किं पुनरपि पतितोऽसि पश्य दौर्भाग्यं।
दिष्ट्या कथञ्चिदस्याः प्राप्तवतस्ते पुनः सङ्गं।

नवमालिका। ता पसीद। मारुतं कटाक्षेण दृष्ट्वा। एदस्स
ु वड्ढाणुराअस्स सम्बरअसस् देहि करकमलं। आणंदेहि
ुवग्गं।

मल्लिका। सान्तर्मन्युभारं। सहिओ तरुणसिहण्डि
च्छ सिणिद्ध सामल मङ्गलङ्गस्स महाभाअस्स मारु-
स दंसणादो पहुदि जं अस्सो पुरुषो हिअएणवि ण
न्तिओ तेणेव्व सच्चेण सपामि दूदो वरं वि णाहं अस्स
केवस्सं महाभाअ पुसलाअसमुहावारिहिप्पवाह विगाह
वत्त हिं तेहिं णेत्तेहिं।

कलकण्ठः। सखे ! चूषय श्रवणपीयूषं।

मारुतः। सानन्दं। अयि मन्मानसविहार मल्लिकामल्लिके !।

तव हृदयसमूढ़ प्रेमरागैः शुभाङ्गि !
प्रति नवपरिवाहस्यन्दहृद्यैर्वचोभिः।
स्मरहुतवहदग्धः शीतलैः सर्वतोऽहं
स्नपित इव सुवाणि ! प्राणिमि प्राणनाथे॥

पुनर्नेपथ्ये। नवमालिके ! ननु भण्यते त्वय्यैतामभिहितस्य मौहूर्त्तिकगणगृहीतः परिणयसमयः। आकर्णयन्ति।

मल्लिका। सवाष्पं। हद्धि ! पुणोवि भअवदी आदिसइ सहि णोमालिए उट्ठेहि उट्ठेहि जाव इ एक्कदा। आअमिस्सदि भअवदी ता एत्थ लआवलअन्तं गदुअ किम्पि तुह्मो पत्थ इस्सामि।

नवमालिका। सहि। आणादाणा जोग्गो जणो कीपत्थीअदि। ता जहिट्ठं अह्मे अहिलसिए अत्थे णिओइअ णिव्वट्ठेहि भअवदीए आदेसं।

मल्लिका। सहि ! विसाद संभमवे विरंगी ण पारिउट्ठिउं वाह पूरन्तइअ णअणा ण सक्कुणोमि दट्ठुं वि ता तुमं मह हत्थं ओलंविअ उट्ठावेहि। इति हस्तं प्रसारयति।

सख्यौ। संज्ञया मारुतं पाणिग्रहाय चोदयतः।

मारुतः। साध्वसं नाटयति।

कल। सखे ! नायं साध्वस समयः। अनुभूयतां चिरकालकाङ्क्षित मल्लिकायाः पाणिग्रहण महोत्सवः।

मारुतः । लतावलयान्निर्गत्य मल्लिकायाः पाणिं सपुलकं
गृह्णाति ।

मल्लिका । सहर्षं । सहि ! णोमालिए ! अणारिसो
ह हत्थ सोहग्गो जं गहिअ मेत्ते एव्व हत्थे अमुअ
रेस सित्ताइं विअ णिव्वुदाइं मह अंगाइं ।

मारुतमवलम्बमानैवोत्तिष्ठति ।

मारुतः । अदत्त प्रतिवचन एव मन्दमन्दं नयति ।

सख्यौ । सस्मित मनु गच्छतः ।

कालिन्दी । सहि मल्लिए ! पत्तम्ह लअं इरिदा कहेहि
हणिज्जं ।

मल्लिका । सनिश्वासं । सहि णोमालिए ! कस्सिं लदा
ले आअदह्म ।

नवमालिका । इदं वहललआ सुमरस परिवाह मेदुर
रिमल लोल लोलम्ब पुञ्ज वद्ध तिमिरं मन्दारमूलं ।

मल्लिका । सवाष्प गद्गदं । हन्त मए एव्व वड्ढिदो एसो
न्दारो । सानुनयं । ता विवित्ते एत्थ पदेसे किम्वि तुम्हे
त्थेमि ।

कालिन्दी । अवहिदह्म ।

मल्लिका । जीअउ जीविदणिव्विसे सो मारुओ । इत्य-
क्ते वैलक्ष्यं नाटयति ।

सख्यौ । परस्परं पश्येते ।

मल्लिका । अइ जीविदणिव्विसेसे णोमालिए पिअसहि
ालिन्दि जस्स परिपुण्णचंद सुन्दराङ्गस्स महाभाअस्स
लण सुस्सूसण सोहग्ग पच्चासा पडिट्ठाविअ विहडन्त

जीविआए मए पुढमदंसणादो पहुदि एत्तिअं सम
पेच्छन्तीए सहिदाअ मन्दमन्दचलिअचरदीहिआरविन्द
अरन्दवाहिणो उज्जाण मारुआ। आअणिदाअ पअण्ड
अरहअभुअदण्डकुण्डलिअ धणुहदिढ टङ्कारघोरा म
अरहुङ्कारा। अहिवाहिदाअ पल्लविअ माअन्दकु
विहरन्तकुहमुह घडिउड्डमर पञ्चमः पवञ्चा वसन्त
दिअहा। आआसिदा अ तुह्मे किसलअ तप्पकप्प
हिं मुणालभङ्ग हाररअणेहिं कदलीदलधप्पितवीअणे
कप्पूरक्खोदचच्चिक्क सम्पादणेहिं अणेहिं वि तेहिं ते
मअणोवआरेहिं। जेण वा तह रक्खसहत्थादो पव्भ
गअणम्मि णिपड़न्ती तस्सिं णिसीहे रक्खिदम्हि। त
सुसभाइणीणं एव्व सुलहस्स महाभाअस्स जइ दुल्लहो ए
सङ्गमो ता मणे सुहं पावएसु ण एक्कतमं खणंवि म
जीविअधारणंति। ता आमन्तेमि तुह्मे पुणोवि जणणा
दंसणस्स। सप्रश्रयं अञ्जलिं बद्धा। सगद्गदम्। सहि! म
किरि एव्वं पणमिअ विवित्ते विसाविदव्वो तुए सुन्द
वभुलआ लंच्छिअ दीहर णिमिद्दलोअण पुण्डरीओ सो
जणो जह परलोअ गदाए वि मह जलञ्जलिदाइं होइ
इति रोदिति।

मारुतः। सकरुणं। स्वगतं।

(११) एतानस्याः शिव शिव तनुत्याग वद्योद्यमायाः
कल्याणाङ्ग्याः करुण मधुरान् शृण्वतो मे विलापान्।

---

(११) एतानिति। अस्याः विश्वावसोः गौरीप्रसाद कन्याया

दाक्षिण्येन द्रवति हृदयोल्लीयते मोहवृत्त्या-
स्ग्लायत्यार्त्त्या स्फुटति हृदयं हर्षतस्फायते च ॥

कालिन्दी । पडिहदं दे अमङ्गलं ।

नवमालिका । अश्रूणि वर्त्तयति ।

मारुतः । प्रकाशं ।

(१२) वीणाभिराम कलकोमलवाणि ! रामे
मा मा वरोरु ! करुणं भण वाम वामे ।

---

इत्यर्थः । सन्निकृष्टत्व बोधनाय इदं शब्दप्रयोगः । शिव शिव इति खेदे अयं च वक्ष्यमाणस्य अमङ्गलत्वाभिप्रायेण तनुत्याग बद्धोद्यमायाः शरीररक्षामकृत प्रयत्नायोः कल्याणाङ्ग्याः जगन्मङ्गल गात्र्या मल्लिकाया इत्यर्थः । करुण मधुरान् दीनमनोहरान् एतान् विलापान् इमानि परिदेवनानि शृण्वतः मे हृदयं मनः कष्टं दाक्षिण्येन वर्द्धमानेन द्रवति दयया उल्लीयते प्रणश्यति । मोहवृत्त्या मोहविरणेन मोहप्राचुर्य्येणेति यावत् । वृत्तिर्विवरणाजीव कैशिक्यादि प्रवर्त्तने इति मेदिनी । ग्लायति ताम्यति अर्त्त्या पीड़या स्फुटति दलति हर्षतः प्रीत्या स्फायते प्रचुरीभवति च ॥ अत्र मनसः द्रवीभावाद्यवस्था पञ्चकोक्ति क्रमेण प्रयुक्तैः कतिपयपदैः तदवस्था बीजान्यपि दर्शितानि । यथा अस्याः इत्यनेन विश्वावसोः गौरी प्रसाद लब्धेति दाक्षिण्यं तनुत्यागबद्धोद्यमाया इत्यनेन प्राणहानेच्छुरिति दया । कल्याणाङ्ग्या इत्यनेन अतिदुर्लभ मनोहराङ्गीति मोहवृत्तिः । करुण मधुरान् इत्यत्र करुणा इत्यनेन परलोअगदा एवि मह इत्यादिना दीना विलापा इत्यार्त्तिः । मधुरा इत्यनेन तु सो जणो इत्यादिना स्वविषया विलापा इति हर्षः । इह अर्त्त्येति प्रयोगः साधुरेव तथाच प्रयोगाः शिरोऽर्त्तिं नाशयत्याशु रसोऽयं सुचुकुन्दकः ॥ अनुशोचति यः कृत्वा सोऽर्त्तिं प्राप्नोति केवलां इति ॥

(१२) वीणाभिरामेति । हे वरोरु ! वीणाभिरामकलकोमलवाणि !

हा हन्त बन्धुजन चित्तसरोज हंसि
दूरं विमुञ्च सहचारिणि साहसानि ॥

अतएव रामे मनोज्ञे इत्यर्थः। यद्वा अङ्गने इत्यर्थः। रामः पशु-विशेषे स्यात् इत्यादिना मनोज्ञेऽपि च वाच्यवत् रामाङ्गना हिङ्गु लिन्योरिति विश्वः। वाम वामे अतिसुन्दराङ्गने इत्यर्थः। यद्वा अतिमनोहरे इत्यर्थः अवस्तु आवाधे च इति द्विर्भावः पुंवद्भावश्च। कामि वाक्यत्वादनेन स्वपीड़ा द्योत्यते वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे। इत्यादिना वामापि च स्त्रियां इति विश्वः। करुणं दीनं मा मा भण मैव वादीः इत्यर्थः मामेत्यादरात् द्विरुक्तिः। श्रवण काटवेन किमयं निषेध इत्यत उक्तं वीणाभिरामकलकोमलवाणि इति दीनत्वेऽपि श्रवण मनोहरं ते भणनमिति भावः। श्राव्यत्वे कुतो निषेध इत्यत उक्तं। वाम वामे इति त्वत्करुणभणने त्वन्निष्ठं वामात्वं तव तदनौचित्य-मत्या अस्मत्पीडा हेतुरिति भावः। लोके ह्युत्तम वस्तुनः पीड़ायां तन्निष्ठेनोत्तमत्वेनैव तस्य तदनौचित्य मत्या तदभिज्ञानां पीड़ेत्यनुभवः तथाह महाकविः। यद्यपि न कापि हानिः परकीयां चरति रासभे द्राक्षां। अनुचितमिदमिति मत्वा हा हा हाहेति तप्यते चेतः। इति इयं च द्राक्षा स्वाद रसिकस्योक्तिः। तथाच प्रकृते संवोधप्रवृत्ति वा-मात्वं तद्रसिकस्य संवोधकस्य कामुकस्य पीडां द्योतयतीत्यतः आवाधे चेति शास्त्रप्रवृत्तिं युक्ता मेवेत् पश्यामः। हा इति विषादे हन्त इत्यनुकम्पायां हन्त हर्षेऽनुकम्पायामित्यमरः। हे वन्धुजनचित्तसरोज हंसि! वन्धुजनानां चित्तान्येव सरोजानि तेषां हंसि इति संबुद्धिः इह रूपकनिदर्शनाभ्यां यथा हंसी सरोजानां प्रावृट् प्रतिवन्धकत्वेन आश्रयि दुर्दशायां आश्रयदुर्दशा तथा तद्दुर्दशायां त्वदेकाश्रयाणां वन्धुजनानामपि दुर्दशा इत्याशयः सूच्यते सहचारिणि मया सह संचरमाणे इत्यर्थः साहसानि मस्से सुहं पावएस इत्यादीनि दूरं विमुञ्च इति योजना सहचारिणि इत्यनेन तु मत्समीपवर्त्तिन्यास्तव मद्दौर्लभ्याभिप्रायेण साहसान्य साम्प्रता नीत्याशयः सूच्यते।

नवमालिका। जनान्तिके। कालिन्दि! अह्मारिसजणो इए वाअड़े वि समाणं एव्व महाभाअस्स वअणं ता मसे ण जाणइ पिअसहो अज्जवि महाभाअं।

मल्लिका। सहि मुग्धे! साहसंति कहं भणिज्जइ जेण मम्मअ जोवलोएण मल्लाह भङ्काअरहिअएण तह णिसीढदुग्गमे पदेसे एक्केण गदुअ सअलभूमण्डले क्क मण्ड-णम्म कम्बुराअ सुन्दरे कन्धराकण्ठे खग्गप्पहारेण साहसं अणुट्ठिअं। तम्मि दुल्लहे जीविअपरिच्चाअ साहसं अणु-चिट्ठामि एव्व ता ण एत्थ पड़िज्जला होहि। विसवेहि पुणो वि मह वअणेण महाभाअं। सगद्गदम्। णाह साहं मन्दभाइणी एक्कस्सिम्मि खणे तुह सहपरिरम्भा ता जण-णन्तरे वा तुह पिअसङ्गमं कंखेमि, सा उण मह सहजा मालिआ णाहेण मरगअ कवाड़ सिणिद्ध विसाले वच्छ-त्थले मणिव्विसेसं सव्वदा धारणिज्जा। इति मारुतं हठं आलिङ्गति। सानन्दं साशङ्कं स्वगतं। कहं पिअसहीए सव्वङ्गीण चन्दणसारवरिस सरिसो महाभाअ परिरम्भ संवादी फससो। मणे हिअअ सण्णिहिदो मं सुहावेदि। प्रकाशं। सहि णोमालिए! जाणेहि एदं पच्छिमं परि-रम्भं।

सख्यौ। सभितं। स्वगतं। णहि णहि पच्छिमो परि-रम्भो अविदु पुढ़मो दुईओ वा।

मारुतः। परिरभ्यमाण एव सानन्दं।

कल्याणाङ्गरुचाऽनुरक्तमनसा त्वं येन सम्पार्थ्यसे

यस्यार्थे सुमुखि! त्वया पुनरसुत्यागेऽपि सन्नह्यते।

मल्लिका । स्वगतं । कीस मक्कहिअं अङ्गिकिअं पिअ-सहोए । प्रकाशं । सहि ! कहिं सो ।

मारुतः ।

सोऽयं सुन्दरि ! पञ्चवाणविशिखव्यालीढ़दोरन्तर
स्वैरोत्पीड़ितपीवरस्तनतटस्त्वद्दोर्लतापञ्जरे ।

मल्लिका । अम्महे महाभाओ । सहर्षसाध्वसं । सलज्ज झटित्यपक्रामति ।

मारुतः ।

मामा ससाध्वसमवेहि विलोलनेत्रे
दासे जने किमिति सम्भ्रमकातरासि ।
किं युज्यते वत मया चिरकाङ्क्षितस्य
मध्ये वराङ्गि ! परिरम्भसुखस्य भङ्गः ॥

मल्लिका । सव्रीडं सास्रयञ्च । सहिओ साधु साधु ।

कलकण्ठः । सहसोपसृत्य । कल्याणि ! मैवं वादीः ।

विश्वोत्तरं प्रियसखं मम भूषयन्ती
नत्वं समस्तगुणशालिनि विप्रलब्धा ।
त्वत्प्राप्ति लोभमृगतृष्णिकयावगाढ़ो
दिष्ट्या सखम्बरक एव तु विप्रलब्धः ॥

ततश्च । सौरभ्यसम्पदिव चन्दनपादपस्य (१२)
ज्योत्स्नेव शीतकिरणस्य मणेःप्रभेव ।

---

(१२) सौरभ्येति हे शोभने ! त्वं अस्य मारुतस्य इत्युद्देश्यपदं चन्दन पादपस्य सौरभ सम्पदिव शीत किरणस्य ज्योत्स्नेव मणेः प्रभाकान्तिरिव विभूषणं भव । ते तव अमुना मारुतेन सह लब्धः

त्वं शोभने ! भव विभूषणमस्य तासां
तैर्व्वाभुनास्तु तव चाभ्युदयाय लब्धः ॥

भ्रमरकः। उपसृत्य। णोमालिए! दिट्ठआ वड्ढाम णाहाणं अवभुदयेण।

प्रविश्य प्रहृष्टवदना मन्दाकिनी।

मन्दाकिनी। ह्रीवी लक्ष्मीः पार्वती वागधीशा
सीतेन्द्राणी रुक्मिणी सत्यभामा।
सावित्री सारुन्धती याज्ञसेनी
शर्मिष्ठा च स्वस्तिदा स्युः प्रहृष्टाः ॥

सर्वतो विलोक्य। साशङ्कं। क्व नाम इतोगता भवेल्लताभवनान्मल्लिका। लतान्तरेण दृष्ट्वा सानन्दं। हन्त पूर्णा इव मनोरथाः। अत्र हि मन्दारमूले मारुतः।

अयमति सुकुमार चामरस्येण सामि
प्रमितइवमृगाङ्को लोभनीयोऽङ्ककेन। (१४)
विलसति नयनान्तं चारयन् व्रीड़नम्रे
मदनशवलनेत्रे मल्लिकाया मुखेन्दौ ॥

---

आश्रयणं तासां सौरभ्य सम्पदादीनां तैः चन्दनपादपादिभिः समं स इव लब्ध इव चन्दनपादपाद्या श्रयण मिवेत्यर्थः। अभ्युदयाय अभिवृद्ध्यै अस्तु भवतु इति विध्यर्थे लोट्। अत्र प्रथमान्वये सौरभ्य सम्पदित्यादीन्युपमानानि त्वमित्युपमेयं विभूषणीभावः साधारणोधर्मः इति वहूपमा। द्वितीयान्वये चन्दनपादपाद्याश्रयणं उपमानम्। मारुताश्रयणमुपमेयम्। तासां ते इति त पक्षद्वये उद्देश्यकथनं अभिवृद्ध्यर्थक परिणामोधर्मः इति पूर्णोपमा उपमाद्वयस्य परस्पर नैरपेक्ष्यात् संसृष्टिः।

(१४) सामिप्रमितो मृगाङ्कः अर्द्धचन्द्र इवेत्यर्थः।

प्रकाशं । नवमालिके ! किमिति विलम्ब्यते ।

नवमालिका । अम्हे भअवदी आम्र देव्व ! पत्थु दुग भअवदि अह्मो हिं ण विलम्बीअदि ।

मल्लिका । सगद्गदं । भअवदि ! परित्ताअसु परित्ताअसु इत्यञ्जलिं बद्ध्वा छागच्छति ।

मन्दाकिनी । मल्लिकामालिङ्गय । वत्से !

तुल्य प्रेमणि महाभिजन्मनि जगन्नेत्राभिरामे जने
त्वं कल्याणि ! सदानुरक्तहृदयश्लाघ्या सकामा भव ।
सोऽयं च प्रतिपद्य पुण्यसुलभां त्वां तुल्यरागश्चिरा-
दन्तः सम्भृतमङ्गजज्वरमहोद्दाहं जहात्वञ्जसा ॥

नवमालिका । सानन्दं । भअवदि ! णिव्वुत्तमणोरह इमस्सिं मिहुणे णिअणिम्माण वेअड्ढीए सफलत्तणेण चिरअ कअट्ठो होदु पआवई पसीदन्तु सव्वरस परिणअप्पसङ्ग कलुसिआइ वन्धुजणसस हिअआइ ता माइ विरसिव्विसे- साणं तुह्माणं हत्थेण पदत्ता महाभाअस्स करम्मि पिअ- सही ।

मल्लिका । स्वगतं । सव्वहा सव्वमङ्गलावअणं पमाणं एव्व ।

मन्दाकिनी । नवमालिके ! किं मयाद्य दातव्येति । ननु प्रागेव तस्मिन् व्यतिकरे ।

आच्छिद्य राक्षसकरादनत देहैव रचिता देव्या ।
अधिगलमर्पित मस्ले हस्ते दत्तास्य सर्वमङ्गलया ॥

अपिच । अस्मिन् परस्पररुचिप्रकृते विवाहे
सेयं निजैर्न गुरुभिः प्रतिपादनीया ।

प्राणेश्वरोदयपरायण हर्षयोगा
केनार्पिता कुमुदिनी शशलाञ्छनाय ॥
ापि । लोकयाचानुवृत्तिमात्रक्रिया सम्प्रति । एहि वत्स
रुत !
मारुतः । आदिशतु भगवती ।
मन्दाकिनी ।
एषा विश्रुत वैभवस्य यशसामूर्ज्जस्वलानां विधेः
पुत्री विश्ववसो रमेव जलधेः पुण्येन लब्धा चिरात् ।
एनां तुभ्यमहं ददामि चरितुं धर्म्मान् सह श्रेयसे
देवेन स्वयमङ्गजेन विहिते रागानले साक्षिणि ॥
कलकण्ठः । फलितमस्मत्सुखसुरद्रुमेण ।
नवमालिका । प्रसन्ना अम्हाणं कुलदेवता ।
कलकण्ठः । सहर्षं । भगवति ! सर्व्वाकारानवद्य ममु
ब्धमालोच्य प्रसीदति हृदयं । पश्य
सहजघनविलासौदार्य्य सौन्दर्य्यराशे-
र्जननयनचकोरानन्दने चन्द्रिकायाः ।
परिणय कुतुकं यत् चानयोः श्लाघनीयं
कनककुसुमदाम्नः सोऽयमामोदयोगः ॥
नवमालिका । मल्लिकां निर्वर्ण्य । सनिश्वासं । स्वगतं ।
विणाम अज्जविअ महाभाअस्स सव्वदा वल्लहाभवे पिअ-
हो ।
मन्दाकिनी । विहस्य । वत्स मारुतः ! ।
मारुतः । साशङ्कं । आज्ञापयतु भगवती ।

मन्दाकिनी ।

ज्ञातज्ञातव्यसारे नहि भवति परेणोपदेष्टव्यमास्ते ।
वात्सल्यं केवलं मां मुखरयति ततो ब्रूमि कल्याणबुद्धे

मारुतः । सप्रश्रयं । शृणोति ।

मन्दाकिनी । मल्लिकां हस्ते गृहीत्वा ।

एकापत्यं हि सेयं जनयितुरसवो बान्धवानां तदस्याम् ।
मा स्यात् कालान्तरे ते स्वयमयमुदितःस्नेहबन्धो क्रसीयान्

मारुतः । सलज्जं । हन्त वात्सल्या दयङ्गनीयमप्य

शङ्क्यते युष्माभिः ।

कलकण्ठः । भगवति ! इत्थमतिप्रसक्ते युष्माकमभ्यर्थ

वयस्यमधिकृत्य सद्दशमुत्तरं नहि पश्य ।

स्नेहोऽस्यां स्थिरतामगादिति सकृद्दृष्टेऽपि तुल्यं जने
ख्याता ख्यावश इत्यसाम्प्रतमसौ यद् भ्रूवशे स्थास्यति ।
दाक्षिण्येऽस्य समोऽस्ति नेति सुहृदि स्नेहोक्तिरस्यां स्फु
नैनं स त्यजतीति सर्वमनयैवाध्युच्यते तन्निशि ॥

मन्दाकिनी । सविमर्षं मल्लिकां प्रति । पुत्रि ! त्वम

किञ्चिदुपदिश्यसे ।

मल्लिका । आणवेदु भअवदो ।

मन्दाकिनी ।

शुश्रूषामनुरुन्धती गुरुजने वाक्ये ननान्दुः स्थिता
दाक्षिण्यैकपरायणा परिजने स्निग्धा सपत्नीष्वपि ।
सन्नद्धातिथिसत्कृतौ गृहभरे नैस्तन्द्र्यमाबिभ्रती
वत्से ! किं बहुना भजस्व कुशलं भर्त्तुः प्रिये जाग्रत

मल्लिका । सलज्जं मनसाङ्गी करोति ।

नवमालिका। उइओ उवदिसो।

मन्दाकिनी। वत्स मारुत! इदानीं दुरात्मनः अम्बर-
य वञ्चनाय प्रतिश्रुतागमं स्मर माकन्दनामानं तं दिव्य-
प' गृहीतमल्लिकावेशः सन्निधत्स्वेति।

मारुतः। ध्यानं नाटयति।

ततः प्रविशति मल्लिकावेषधरो माकन्दः।

माकन्दः। सखे मारुत! अयमहमस्मि। साधयामि
ाभिलषितं! मन्दाकिनि मारुतवच्चैँ विस्मयं नाटयन्ति।

कालिन्दी। जनान्तिके। णोमालिए! सो एसो दिव्व-
णो जो रक्खसभावादो मोइदो महाभाएण।

नवमालिका। कालिन्दि! अच्चेरं जो पिअसहीए
क्खणप्पवट्टो सो अज्जरक्खणे पि पवट्टइ। मल्लिकां
त। सहि! पेच्छ पेच्छ। अस्सवि कावि पिअसही अच्चाणं

मारुतः। महापुरुष! त्वर भगवत्या यत् प्रागुपनाथितं।

माकन्दः। बाढ़माचरामि। प्रविश्य काषायाम्बरयुगलहस्ता
सिका। भअवदि! एदाइं चवलएण आणीदाइं अम्बराइं।

कलकण्ठः। सस्मितमम्बरे गृहीत्वा निष्क्रम्य मन्दाकिनीवेश
ः प्रविश्य। अयमस्मि भगवति!।

मारुतः। पततु त्वच्चरणयोः अम्बरः।

मन्दाकिनी। कालिन्दि नवमालिके प्रति। वत्से! युवाभ्यां
ह कलकण्ठेनानुवर्त्तितव्योऽयं महापुरुषः।

उभे। जं भअवदी आणवेदि।

माकन्दः। सस्मितं। भगवति! तद् गच्छामि अम्बरक-
रिणयाय।

मन्दाकिनी। वत्स साधय प्रागुपदिष्टेन पथास्मद
भिलषितं।

माकन्दः। एहि सखे कलकण्ठ! तुल्यस्त्वयाहं मारुतस्य

कलकण्ठः। महापुरुष! सर्वेषां नः पूज्यतमोऽसि
तदेहि गच्छामः।

मन्दाकिनी। रमणीयास्त्वास्मदाश्रमोपशल्यभूमयः।

ततश्चात्र मारुतं प्रति।

उत्कूजत्कोकिलालीकवलितसहकाराङ्कुरामेघशङ्का
प्रक्रीड़न्नीलकण्ठस्वनमुखरतमालान्धकारोपगूढाः।
उच्चैरुद्यानसीमामरिचकिसलयग्रासगर्वच्चकोरी
चञ्चुर्लौहित्यशारा विदधतु युवयोः स्वैरलीलासु सौख्यम्।

अपिच।

क्रीड़ाश्रान्तिषु तासु तासु कुसुमश्रेणी वितानाचिते-
ष्वारादाललता गृहेषु शनकैराराधयिष्यन्ति वां
सद्यो निर्दलितप्रसूनमकरन्दासारमग्नोत्थितावा
ताम्रोमसरस्तरङ्गकलहं सालापवाचालिताः।

इति निष्क्रान्ताः सर्वे। इति षष्ठोऽङ्कः।

---

अथ सप्तमोऽङ्कः।

ततः प्रविशति नवमालिका।

नवमालिका। सहर्षं। दिट्ठिआ वड्ढिओ मूढ़ो स
रओ। जेण तत्तारिसवेससुउमारं तं दिव्वपुरुषं मलि
त्ति मणन्तो णिव्वुत्त विवाहविही सअलजणग्घोसि

ामाद्द सहोएत्थ विह्नुगाअ घरे आअदवन्दो अहवा किं
थ अचेरं। जं गहिअ परमत्थाणं वि तस्सिं पिअसही
ही पुणो पुणो होइ। अज्जव्व अहं मअण सरपडण
ज्जरिअं वाअ सम्बरअ मुस कित्तिमलज्जामदणवावुढं तं
हुसो णाम अणुणअंतो सअणघरे णिओजिअ अह कहं
णिग्गअह्मि। विहस्य। कलअण्ठअ विसुट्ठ अणुट्ठिज्जइ
अवदीए महोवआरित्तणं जेण कहराअ सम्बरएहिं चर-
सु णिपडिअ भअवदि तुह्मेहिं अणु अइदव्वा वामसीला
मअन्ति एत्ति वहुसो पत्थिदो पुढमसङ्केदिअ महुअरिआ
ढ़णिव्वट्ठिअ रमअन्तिआणे वच्छो भमरओ कल-
ङ्कएण परिणइदो। सानुकम्पं। सा क्खु तवस्सिणी रमअ-
तआ एत्थ किंवि ण जाणइ केवलं जइ मे कलपिङ्गअस्स
रिणओ ता परिचइस्सं। जीविअं त्ति गाढ़किअणिच्चआ
ज्जाण केलिघरं गदुअ णिउढ़ा वट्टइ जं उण ण परि-
अइ जीविअं तत्थ महुअरिआ वअण वड्ढिआ कलअण्ठ
ाहपच्चासिव्व परमं कारणं। परितो विलोक्य। सानन्दं। अह्म
वसाअ समुद्दओ णिहलिअ णीलच्छण पुच्छमंसलम्बआर
ावभरो णिसीढारओ उच्छवव्वावार परिस्सन्तपसुत्तो
सअलो परिअणो। परिक्रम्य। अग्रतो दृष्ट्वा। एसो चउसा-
ोकदेसे गहिअ भअवदो वेसो कलअण्ठो णववत्थवेसधरं
मरअं महुअरिआए सह किञ्चिअ अणु वट्टइ। पुनर्वि-
क्य। सहासं। हन्त जामादुओ कलपिङ्गओ वि इहच्च-
ट्ठइ ता अहं वि गदुअ वड्ढावेमि परिहासलअं। इति
ष्क्रान्ता। प्रवेशकः।

ततः प्रविशति यथानिर्द्दिष्टाः कलकण्ठ भ्रमरक मधुकरिका कलपिङ्गका नवमालिका च ।

कलकण्ठः । साशंसं । जनान्तिके । नवमालिके ! कि मपि फलितो मन्दाकिन्याः सुगूढविवर्द्धितो नयसुरतरुर्भूय श्चेषं फलिष्यति वा नवा ।

अवधि विधुरानङ्गातङ्कव्यपोह महौषधीं
सुकृतसुलभां किंवा लप्स्ये प्रियां रमयन्तिकां ।

नवमालिका । जनान्तिके । महाभाअ ! सुरदरू क ण्णा फलिस्सदि । अविअ गदाक्खु पुढमं एव्व लआघर मज्झ मणिजढाए रमअन्तिआए सविहं कालिन्दी ।। ता स एव्व सव्वंसं जो अहूसदि एत्थ उण पेच्छीअदु दाव एसं ब्बुणं परिहासो ।

कलपिङ्गकः । भगवति ! किमेषा वदति नवमालिका अपि चाटु चतुरस्य मद्गुरोः भ्रम्वरकस्य प्रणयसरसैरनुन वचनैर्जनित विस्रम्भागता शयनगृहमाकाशवाणी प्रभा लब्धा मल्लिका ।

कलकण्ठः । स्वगतम् । भूयोऽपि भगवती स्वरे व्यवहरामि । प्रकाशम् । सत्यं चाटु चतुर एवास्माक जामाता । कथयति नवमालिका तथा ब्रीड़ाशालिन्यपि मे वत्सा नवेऽपि वोढ़रि चिरसंस्तुत इव जातविस्रम्भ शय्या गृहं प्रविष्टेति ।

नवमालिका । भयवदि ! किंबहुणा उवकिदं अह्माण आआसवाणीए जदो एव्वं णाम दक्खिणो जामादा लद्धो अह्मेहिं ।

कलपिङ्गकः। आकाशवाणिप्रसङ्गेन सहर्षं अन्तः शृणोति।

मधुकरिका। अह्माणं उण भअवदीए उवकिदं जाए रुद्दराअपक्खे ठिदाए दक्खिणत्तण णअसीलसोभग्गादिहिं गुरुं पि अदिसअं तस्स एदस्स जामादुणो अह्मे वि णिब्भच्छिअ दिसापिअ सही रमअन्तिआ कह्लेहिं उण एत्तिअं समअं ण जाणिदो एव्वं विहो एसोत्ति।

कलपिङ्गकः। सानन्दम्। स्वगतम्। सत्यमाह मधुकरिका असंस्तवान्नावगता एव मद्गुणा मुग्धया रमयन्तिकया।

मदनपीड़ां नाटयति।

भ्रमरकः। सगूढ़स्मितम्। स्वगतम्। णाड्दस्सं मिच्छाविलाससालिणत्तणं। मूर्द्धानं नमयति।

कलपिङ्गकः। भगवति! लज्जावती न पश्यत्यपि मामियं दीर्घविशालेन लोचनेन। अतः कथय किमत्र प्रतिविधातव्यम्।

कलकण्ठः। उपायं किं न जानासि।

छन्दानुवृत्ति परताव्याजेनालाप सम्भेदः।
हठवैमुख्यमिती मे मुग्धा विस्रम्भणोपायाः।

कलपिङ्गः। सम्यगुपदिष्टं भगवत्या। तत् प्रथमं आलाप सम्भेदेनास्याः लज्जां क्षणशः कणशः खण्डयामि। भ्रमरकं प्रति। सानुनयम्। अयि सुवचने! संलप मां कलकण्ठधिक्कारिणा वचनेन।

भ्रमरकः। सक्रोधम्। जनान्तिकम्। महुअरिए! एदस्स णाहकलअण्ठ धिक्कार णिरदस्स अवलेपु किं असणि-

वादनिट्ठुरं च विढ़ंदेमि। जह सव्वेवि दन्ता गुलुगुलुत्ति गलन्ति ।

मधुकरिका । विहस्य । जनान्तिकम् । अदिकोवण क्खणमेत्तं वि कहं ण सहिज्जइ णं अणुपदं एव्व एव्वं करिस्ससि ।

कलपिङ्गः । मधुकरिके ! कस्मादियं आवद्धभ्रूलताभङ्गमुत्कुपितेव ते प्रियसखी ।

मधुकरिका । सच्चं उक्कुपि देव्व।

कलपिङ्गः । सावेगम् । किमिति निर्निमित्तं कुप्यति ।

मधुकरिका । एसा क्खु । अदिमाणंसिणी सुवअणासद्देण अक्कारिदो गोवतप्पलिअं संकेइ ।

कलपिङ्गः । सस्मितम् । युज्यत एतत् ।

मानाग्निवर्द्धन महौषध मेतदेव
स्त्रीणां सपत्नवनिताह्वय कीर्त्तनं यत् ।
अव्याजनिर्भर भय प्रणतोत्तराणां
मन्ये विशेषत इदं कुलकन्यकानाम् ॥

नवमालिका । णं जामादुणो एसेव्व सुवअणा सद्देण सम्बोहिआ सोहणं से वअणंति ।

कलपिङ्गः । सत्यमाह नवमालिका ननु इयमेव सुवचना । निःश्वस्य । हन्त किमत्र प्रतिविधास्ये । भगवति ! युष्माभिरियं प्रसादनीया ननु प्रागपि युष्माभिरेव निर्वर्त्तितोऽयमावयोः परिणयः ।

कलपिङ्गः । जामातः नातः परमस्माकमधिकारः । पश्य ।

यावद्यूनोः परिणय विधिः सम्प्रवर्त्तेत तावत् (१)
विघ्नच्छित्त्यै विहितधृतयो बान्धवो व्याप्रियेरन्।
पश्चान्मानातिशय सुलभप्रेमकोप प्रसादे
पारम्पर्य्यात् प्रभवत इमे केवलं पुष्परन्ध्रौ॥

कलकण्ठः। सविषादं। तर्हि कथ्यतां को नामास्याः कोपप्रशमनोपायः

कल। विहस्य।

प्रणयकलहभार प्राप्तमौन ग्रहाणां (२)
अनुनय विषयोऽमी योषितां मानिनीनाम्।
शपथ चटुविशेषाः सन्त्यपि प्रेमकोप-
प्रशमन परमास्त्रं पादमूले प्रणामः॥

कलः। सहर्षम्। तदहं कालक्षेपासहः। परमास्त्रमेव प्रयोक्ष्ये। इति ससम्भ्रमं पादमूले प्रणमति।

भ्रमरकः। सहासम्। जनान्तिके। किं अज्ज वामचरणेण ताड़इस्सामि हदासं।

मधुकरिका। जनान्तिके। मा एत्थ ताड़ेहि इदो ज्झत्ति सअणघरं णेदव्वो जाव अह्मे उत्तरसिं कज्जे घवट्ठामो।

---

(१) मानातिशयेन सुलभाः प्रेमकोपप्रसादाः ययोस्ते तयोर्ऋ प्रभवतः प्रभू भवत इत्यर्थः।

(२) अमी शपथचटुविशेषाः। प्रणयकलहभारप्राप्तमौनग्रहाणां अतएव मानिनीनां योषितां अनुनयविषयः प्रसादनप्रकारभूताः सन्ति अपि तथापीत्यर्थः पादमूले प्रणामः प्रेमकोपप्रशमनपरमास्त्रं इति योजना।

नवमालिका। उट्ठेहि उट्ठेहि पसरणा तुह पाणेसरी।

कलपिङ्गः। सहर्षमुत्थाय। किं प्रसन्ना भगवति! साधीयानयमुपाय उपदिष्टो युष्माभिः।

कल। जामातः प्रौढ़प्रायो निशीथः। तद्गच्छ सवधूकः शयनगृहं। आस्वाद्यतां अनेकप्रकारारब्धस्य पचेलिमं फलं। यावदस्माभिरपि क्वचिद्विश्रम्यते।

कलपिङ्गः। सानन्दं। झटित्युत्थाय भ्रमरकेण सह निष्क्रान्तः।

मधुकरिका। सहर्षं। महाभाअ! सुट्ठु एसो वञ्चिओ हदासो। विहस्य। पिक्कमाहु पिक्कमाहुलुगसीअ कामुएण साहामिएण फुलिङ्गो लद्धो। ता णिहुअं गच्छह्म उज्झाणघरं जस्सिं अविसादं वुत्तन्ताए एक्केव्व णिजढ़ा वट्टइ तवस्सिणि रमअन्तिआ।

नवमालिका। णहि णहि एक्केव्व णं कालिन्दी वि तहिं चिअ गआ ता अह्मेवि अविलम्बिअं गच्छह्म। उत्थाय परिक्रामति।

कलकण्ठः। मधुकरिके। अपि नावगतं रमयन्तिकया आत्मनेपथ्यधरस्य भ्रमरकस्य कलपिङ्गकस्य च दाम्पत्यं।

मधुकरिका। कहं णाम अवगच्छइ मुद्धआ जेण तं वि वञ्चिअ जण मए तत्तारिसपरिग्गहो पिअसहीकिओ भमरओ। ण वरं एत्तिअं जाणइ। मल्लिआ उण सम्बरएण परिणीदेव्व मंति कलपिङ्गअस्स समं समप्पिदुं भअवदी इह आअमिस्सदित्ति।

कलः। सानुकम्पं।

एषा मामिमसुपगम्य नावगच्छेत्

काषायग्रहण तिरोहितात्मवेशं।

नवमालिका। संस्कृतमाश्रित्य।

शोणाम्भोरुहवनरेणुदिग्धपक्षं

मारात्तीवत वरटेव राजहंसं।

मधुकरिका। ता एदेण चउस्सालदुवारेण णिग्गदुश्च गच्छह्म। सर्वे निर्गमनं नाटयन्ति।

कलपिङ्गः। परितो विलोक्य। अहो महान् अयं निशीथः। तथाहि

एतद्‌व्योमवनीवराहवलयं विश्वैकवीरस्मर-

स्कन्धावारमदान्धसिन्धुरकुलं श्यामावधूकैशिकं (२)

चक्षुषराञ्जनवस्तुधूकसदृशां विश्लिष्टचक्राह्वयः

स्तोमान्तर्ज्जरधूमकेतनमहाधूम्या तमस्तीयते।

निर्वर्ण्य।

(४) उत्खातच्छिन्नसन्ध्यारुणकमलवनो व्योमकासारमध्यं

मन्ये मत्तो निशीथाह्वयवनमहिषो मंक्षविक्षन्मिमंक्षुः

---

(२) श्यामा रात्रिः सैव वधूः तस्याः कैशिकं केशसमूहः श्यामा स्यात् शारिवा निशा इत्यमरः। इह श्लोके मालामिरवयवं रूपकमलङ्कारः।

(४) उत्खातेति मत्तो दृप्तः मिमङ्क्षुः मङ्क्तुं स्नातुं इच्छुः निशीथाह्वय वनमहिषः उत्खातछिन्नसन्ध्यारुणकमलवनः उत्खातं उन्मूलितं छिन्नं नाशितं सन्ध्यैव अरुणकमलवनं येन तथा भूतः सन् निशीथस्य सन्ध्योत्तरत्वेन नाशितसन्ध्यत्वमिति भावः। व्योमकासारमध्यं व्योम अम्बरमेव कासारः तस्य मध्यं मङ्क्षु चिप्रं अविक्षत् प्रविवेशेत्यर्थः। यथा कश्चित् प्रमत्तो वनमहिषो मज्जनेच्छुः सरसिजवनान्युन्मूलनच्छेदनादिना तुच्छी कुर्वन् सरोमध्यं प्रविशति तद्वन्निशीथोऽपि नाशितसन्ध्या समयः सन् गगनान्त-

तत्कालोज्जिद्यमानैः सह तनु पृथुभिः तारकाबुद्बुदौघै-

स्तस्मादेवोज्जिहीते कलुषितभुवनं भीषणो ध्वान्तपङ्कः ।

परिक्रामति ।

कलकण्ठः । अतिमनोहरोऽयं समयः । अत्र हि

सञ्चरन्ति मृगनाभिचर्चितामेचकाम्बरकृतावगुण्ठनाः

प्राणनाथमभिसर्तुमुद्यताः सुभ्रु वस्तिमिरदेवता इव ।

विहस्य ।

पश्य नवमालिके ! ।

जाताः प्रासादपाली कनकवलभिकान्यस्तमाणिक्यदीप-

च्छाया विच्छर्द तुच्छीकृतविरलतमा ये निशीथान्धकाराः ।

तेऽमीस्फारी क्रियन्ते प्रतिविशिखमितः कान्तसङ्केतधावद्

वामभ्रू मुक्तनेत्रोत्पलतरलतरतारका मेचकिम्ना ।

मधुकरिका । एदे उज्झानमज्झं आअदह्म ।

नवमालिका । तिमिरातिशयं विभाव्य । संस्कृतमाश्रित्य ।

---

रालं व्याप्नोतीति भावः इति मन्ये जानामीत्युत्प्रेक्षा तत्र लिङ्गमाह । तस्मादेव निशीथ संज्ञक वनमहिष कृतव्योम सरोन्तराल प्रवेशादेव तत्कालोज्जिद्यमानैः तत्काले पूर्वोदितप्रवेशसमये उज्जिद्यमानैः बहिः-प्रकाशमानैः तनु पृथुभिः अणु महद्भिः तारकाणामेव बुद्बुदानां ओघैः वृन्दैः सह ओघो वृन्देऽम्भसां रये इत्यभिधानं । भीषणः ध्वान्तपङ्कः ध्वान्तमेव पङ्कः कलुषितभुवनं कलुषितं दृष्टिप्रतिरोधकत्वेन आकुलीकृतं नैर्मल्य प्रतिबन्धकत्वे आविलीकृतञ्च भुवनं जगत् उदकञ्च यस्मिन् कर्मणि तद्यथा भवति तथा भुवनं विष्टपे लोके सलिलेऽपि वियत्यपि इति विश्वः उज्जिहीते उद्गच्छतीत्यर्थः । तस्मादेवेति । एवकारेण निशीथाख्यवन-महिषकर्त्तृकव्योमकासारमध्यप्रवेशाभावे कथमीदृक् ध्वान्तपङ्कोद्गम इति भावो लभ्यते ।

अमुष्मिन् ध्वान्तद्रुमकुहरगौरव्य भरिते
तमःखण्डे पिण्डीकृतबहलकालायसघने।
यतामग्ग्यास्माकं कथमपि पुरोन्यस्त चरणं
निमिषेऽप्युन्मेषे नहि नहि विशेषो नयनयोः॥ (१)

कलकण्ठः। परितो विलोक्य। सचरणं। हन्त
यत्र यत्र घनवृन्दमांसले चारयामि नयनं तमस्यपि।
दृश्यते विमलचन्द्रसुन्दरं तत्र तत्र रमयन्तिकामुखम्॥

मधुकरिका। एदं पुरो रअणबद्धकुट्टिमं तं लआघरं।

कलकण्ठः। विलोक्य। सविस्मयं। मधुकरिके!
मणिभिः प्रभा प्रतिहतप्रसरं पश्याभितोऽधुना भवनं।
परिवेषितिमिरमण्डलमयोमयं भाति कालचक्रमिव॥

मधुकरिका। सबाष्पं। एसा कुट्टिमेक्कदेसे परिसुक्खत्थसा उपविसइ कालिन्दीए समं पिअसही।

कलकण्ठः। सदयं। इयं हि।
निःश्वासानलविद्रुतव्रसना नेत्राम्बुसिक्तस्तनी
हस्तन्यस्तकपोल दीनवदना हारैकभूषावती।
बिभ्राणा सपदेन तुङ्गजघना विस्रंसिनीं वेणिकां
आस्ते स्थण्डिल एव पाण्डुमधुरच्छामालसैरङ्गकैः॥

नवमालिका। सा पिअसही कठोरसोअमसु चिन्ता पज्जाउला लक्खिज्जइ। ता मए भणिदं कालिन्दीए

---

(१) पुरोन्यस्तचरणं यथा तथा कथमपि अतिप्रयासेन यतां गच्छतां इत्यर्थः पिण्डीकृतबहलकालायसवत् घने सान्द्रे इत्यर्थः दृश्य वेणी इति यावत्।

कलपिङ्गअ परिणाअ वरिणव्वा पुड़ा भअवदी एत्थ आअच्छ इत्ति ।

कलकण्ठः । यथामत्र तिमिर एव स्थित्वा सर्व्व आख्यामः । तथा कुर्वन्ति ।

ततः प्रविशति यथोद्दिष्टा रमयन्तिका कालिन्दी च ।

रमयन्तिका । निःश्वस्य स्वगतम् । का एत्थ गई हन्त एदं अदि ज़ुउच्छिअं आरम्भं भअवदी कहं अ मसेदु । पुनर्निःश्वस्य । अहव कीस भअवदी उवालम्भिज्जइ । जं तस्स जीविदप्पदाइणी जणस्स दंसणादो पहुदि तेसु तेसु समएसु दव्विसहेहिं मह मअणसन्दावेहिं तह णाम क्खिज्जंती पिअसही महुअरिआविमं एत्थ णिजढ़ं एक्कं णिक्किविअ क्खत्ति आअच्छामित्ति णिग्गआ सअं एत्थ अदिज़ुउच्छिए कम्मम्मि पवट्टइ ।

कालिन्दी । सहि रमअन्तिए ! मा एत्थ पड़िजला होहि णं भणामि भअवदीए आदेसं आअरेहि त्ति ।

रमयन्तिका । सान्तर्मन्युभारं । अदत्तोत्तरैव तूष्णीमास्ते ।

कालिन्दी । सहि ! सअं एव्व तुए हिअअं मि आलोअणिज्जं पेच्छ जइ एव्वं कीरइ इदो वरं वि मल्लिआए सह एक्क घरणिवासो भविस्सदि ताए क्खु एत्थ परिणए ण किं वि विविइच्छिअं ।

रमयन्तिका । निःश्वस्य । कालिन्दि ! कहं णाम विविइच्छउ तवस्सिणी मल्लिआ जदो तह पड़िजल गअणवासी पमाणेण गुरुअणेण सअंदिणा ।

कालिन्दी । णं तुमं गुरुणा कहराएण दिण्णासि ।

रमयन्तिका । किं एत्ति अमेत्तेण णहि तादेण अम्बाएवि दिण्णम्हि । ते क्खु एदं अमङ्गलं णामसुणिअ णअसखा वट्टन्दि अहवा जावं जीविअं ति अहिलासो ताव एव्व गुरुअणो भअवदी वा ता अहं भअवदीए पच्चक्खाण कदत्थणादो पुढमं एव्व जीविअं परिच्चआमि इत्युत्थातुमिच्छति ।

कालिन्दी । हस्तं गृहीत्वा । सहि ! मामा साहस मणुचिट्ठ अहं णिवारेमि भअवदिं णहि भअवदीए तुवत्तोवि कल्लपिअओ अहिमदो । इमं तुए भणिदव्वं कीस परिक्खामधवलं अहिअ सुन्दरं अलक्खिज्जइ किं तुह सरीरं । अहं खु मस्से कसिसं वि पुण्णभाअणि जणे अणुरत्तं तुह माणसन्ति सुणु मे पडिण्णं अज्ज एव्व क्खणे केणवि अविदिआ घक्कूण तुमं णइस्सामि अणुवल्लहस्स तस्स समीवं आणइस्सामि इद तुम्ह समीवे वा तं जणं ।

नवमालिका । साहु कालिन्दि ! साहु ।

कल । सादरं शृणोति ।

रमयन्तिका । ईषत् सोच्छ्वासं । सहि कालिन्दि ! णं मिस्सापडिआ भविस्ससि । जदो दुल्लह जणगोअरो मह अहिलासो ।

कालिन्दी । विहस्य । मुद्धे ! कहं भअवदीए सिस्सा कालिन्दी त्ति मुहापडिआ । ता कहेहि को एसो कहिं वा दिट्ठो कीरिसो वा अहिलासोत्ति ।

रमयन्तिका । जइ एव्वं सुणादु पिअसही असहिं एव्व सिसिरावसाणे मन्द मन्द सञ्चारि मलआणिल

चलिअ माअन्दलआ दंसिअ पल्लवेसु पवुत्तेसु वसन्द दिअहेसु एकदा उण पुरन्दरपुरगोपुरसिहर समुक्खित रअण कुम्भ विब्भमे कठोरतअचूड़ालाव वाआले पुढ़मगिरि सिहादो कण्ठमेत्तुच्चलिए कमलिणी वल्लहे कुन्तले सराअ कुमारस्स मारुअस्स पिअ सहो कलअण्ठो रच्छावहं आअदोत्ति इदो तदो पधावन्तीण पड़िघरं विलासिणीणं उज्झिअं घरदोहिं आसारसिआणुगअं चरणमणि मञ्जीर-सिञ्जिदं आअणिअ अहं वि अदिमेत्त कोलाहलुत्तरलहिअआ पारद्ध वि मज्जणं मज्झे परिच्चइअ महुअरिआ मुहा हिं सह सही हिं वंअकरीर णीले हिं इन्दणीलेहिं घड़िअं कीलापासादं आरूढ़वदम्हि ।

कल । नवमालिके ! यस्मिन्नेव दिवसे प्रथम मारुतेन वयस्येन दृष्टा मल्लिका तस्मिन्नेव समये प्रथमपुरन्दतः ।

स्फुरति तदिदमद्यानुग्रहं मे तदानीं
इयमलघुनितम्बा हस्तमालम्ब्य सख्याः ।
झणझणित विभूषा विस्मयात्ताननेत्र
द्युति कुवलयिताभ्रं यत्तदा धावतिस्म ॥

कालिन्दी । तदो तदो ।

रमयन्तिका । अह रच्छावह वसारिअलोअणाए मजर कन्धरासुन्दर सिणिद्धवणस्स सरअ चन्दमरीइ जाल धवलकलाव संकपिरहेसिअ हलहलिअ मुहक्खलिअ खुणखुणा अन्त आसण खलिणस्स तुरङ्गमस्स पिट्ठदेसे कणअ चम्पअ कुसुमदल सारिच्छरीरसोहो वलित्त हेम-दण्ड विअड़ धवलादवत्त लंच्छिओ मन्द मन्द हिन्दोलिअ

सिद्द चामरपल्लव पवणपणच्चिअ कुडिल कोमल सिणिद्ध-णील कुन्तल मुहमुह चन्दमण्डलो भरिअवराकुळजोव्वणा वड्ढिअ गम्भीर दिड्ढिवाअ विद्दुम बिम्ब सिम्ब कमलपत्त-अवणो विसट्ट बउल लवङ्ग कप्पूर तक्कोल सुरहिणीसास परिमल भन्त भिङ्ग झङ्कार मुहर पुरोभाओ। मुत्तिमन्तो विअ सुरहि मासो। अहम्मुव्विमा णिविड्डिअ सअल कुसुम-उर सुन्दरी सविब्भम विब्भमा पुंक्किअ कडक्ख कन्दोट्ठ-मालिअवभच्चिअ णिहिलङ्गो। परिमिदेहिं एव्व परिअणेहिं परिअदो दिट्ठो मए कलअण्ठो।

कालिन्दी। तदो तदो।

रमयन्तिका। तदो अ रूवादिसअ दंसण विम्ह उत्तम्भिअ णिप्फन्दपम्हमालेहिं लोअणेहिं सउरं पेक्खन्ती संवट्टिअ पुलउब्भेद कण्डुअ तणुलआ जाव मिअङ्कि दाव मं वि अपुच्छिअ णिद्दाविर्अं कण्ठपरआ गवभ पल्लव-गोरे तस्स अङ्गे गाढ़लग्गं हिअअं अज्जवि ण णिवट्टइ।

कालिन्दी। सहि! उइए एव्वं ठले लग्गं तुह हिअअं।

कलकण्ठः। नवमालिके! शृणु तावत् तत्कालोद्भव मद्भुतं।

> तस्याः सुविभ्रमतरङ्गिततारकाभा
> तापिञ्छितैस्तत इतः स्थगिता कटाक्षैः।
> सा ताण्डवोद्धतशिखा वलपिञ्छ गुच्छ
> च्छन्नेव तत्क्षणमलक्ष्यत राजरथ्या॥

अपिच तस्मिन् समये।

(६) कुपग्रत् प्रलम्ब परिपन्थिहलाग्रपात
क्षुभ्यत् कलिन्दतनयालहरी गभीरे
भुग्न भ्रुवो नयनकान्ति नदीप्रवाहे
मज्जन्नगाम्बिरतरं मकरायितास्मि ॥

कालिन्दी। तदो तदो।

रमअन्ति। तदोअ सो धवलचामरकलापं तरिअ उप्पडन्त महुलिह मण्डल पक्खपालि परिक्खित्त कण्णआर किञ्जसुन्दरं वअणं सविब्भमं ईसि उत्ताणं कदुअ बिहडन्त सहस्स पत्त रुइरेहिं सविलासुव्वेल्लिअ लमया तोरण मण्डणेहिं पेम्म मद मुउलन्त पेरन्तेहिं णअणेहिं मं सणा-अअंतो एव्व करकमला अड्ढिअ खलि णावट्ठंभमन्दमन्दी-किअ तुरङ्गमगई चिरेण तं रच्छं अदिवाहिदवन्दो।

कलकण्ठः। सत्यमुक्तं मधुरवाण्या चिरेणातिवाहि-तवानिति। मधुकरिके! ननु त्वया विज्ञायत एवैतत्।

द्राघीयसीभिरखिलाङ्ग हृढ़ार्पिताभि-
रस्याः कटाक्ष मय पाश परम्पराभिः।
पश्चाद्विकृष्ट इव तत्र पदेपदेऽहं
कृच्छ्रादलङ्घय मनङ्ग हतः प्रतोलीं॥

मधुकरिके! कथं द्वाविमौ स्तः। ततः प्रभृति पश्य।(७)

---

(६) प्रलम्ब परिपन्थी बलराम इत्यर्थः।

(७) मधुकरिके। कथं द्वाविमौ स्तः। ततःप्रभृति पश्य इत्यत्र टीका। ततः प्रभृति रथ्यालङ्घनादारभ्य इमौ बलमाधवौ द्वौ कथं कः क्षितिविशिष्टौ कथं वर्त्तेते इत्यर्थः।

मुहुरलि वलयश्यामामग्रवल्लीभि-
र्धनुषि मधु विषार्द्रान् सन्दधानः पृषत्कान्।
मम वपुषि शरव्ये दर्शयत्यस्त्रशिक्षां
इह चरति सनीडोऽन्योऽमयापुष्पधन्वा॥ (८)

मधुकरिका। महाभाअ! णाहि णहि दुवे एव्व पंड़
माणुसं एक्को खु मणोभवो।

कालिन्दी। सहि! रंभप्पहार णिउणो खु मअणो।
तदो तदो।

रमयन्तिका। तदोअ दीहर दीहर णिस्सास पवण ग-
लिउत्तरिज्ज वाअढ़दिट्ठ कम्पट्ठज पल्ढ़ कठोर पुलअं-
कुर णिसिद गाढ़ मअणाहि सङ्ग विहसिअ पिअमहअरि
मण्डलाढ़त्त परोप्पर मुहावलोअ वक्क भासिअ वड्ढन्त
लज्जासुआवद्दर सङ्कुलच्छिअआ कहं वि पासादसिहरादो
ओदरुहिअ तदो पहुदि कालिन्दि ण जाणामि वाहाए
वक्खिउं केवलं अप्पमित्त सव्वेअ णिज्ज मत्तण्ड मह्ण
संवाद दुव्विमह मन्दाव मिलाअन्त च्छिअअ कुसुमा णिक्का-

---

(८) द्वित्वमेवोपपादयति। पद्येति। मुहुः अलिवलयश्यामां वल्लीभिः आम्रघन् मधु मकरन्द एव विषं तेनार्द्रान् पृषत्कान् धनुषि सन्दधानः। पुष्पधन्वा रति पतिः शरव्ये लक्ष्य भते मम वपुषि अस्त्र-शिक्षां अस्त्राभ्यास कौशलं दर्शयति। अन्यः इतरः पुष्पधन्वा अनया रमयन्तिकया सनीड़ः स्थानयुक्तः सन्। नीड़ं स्थानकुलाययोरिति मेदिनी। रमयन्तिका निष्ठः सन् इत्यर्थः। इह चरति एवं व्यक्तिद्वय निष्ठत्वेन प्रत्यक्षभूतस्य मन्मथद्वयस्य सम्भवो लोक प्रसिद्धि विरुद्धत्वात् कथं न्याय्य इति भावः।

दव णिट्ठुर मअरन्दम पड़ि भमन्त पडुम वहुम चडुल णिमज्जन्त जीविअ णिरोहणोच्छासणिहिद णिउण सर्ह्ङ किद्ध बावुड़ पसासा धारिअ सरीरा तह तह सवाच णअणा परिअण तुरिअ णिव्वट्टिअ विविह ओसहीवआ व दुत्तणिअ तक्खजरा णिप्फलं पाणिमि जंडणा सोमसरम्भि तक्कालुब्भिज्जन्तमअ रोस दुरुपसप्पस्स कुलतव संघ संघडण झड़झड़ा अन्त दन्त दम्भोलि सिहरस्स दन्दावलस्स सुण्डादण्ड बलआदो रक्खिदम्मि। तं उण तुम्हाणं वि पच्चक्खं एव्व सहि ण जाणासि किं तस्सिं समए एदस्स णिसंसस्स वाराणसी पहिअस्तणं जस्स मं भअवदी दाउं पवट्टदु। सानुकम्पं।

कालिन्दि! कहँ णाम मारुएक्क पराअण जीविआ मल्लिआ भअवदीए सम्वरअस्स दाविदा। जा तस्स दुट्ठ पहिअस्स मुहादो, तारिसिं पवुत्तिं सुणिअ हा णाह मारुएत्ति कलुणं कलुणं वाहरन्तीदुहण ताड़िएव्व वल्लिव्व मुच्छिआ अविअ तक्काल सण्णिहिदेण पुस्सचन्द सुन्दरेण तेण महापुरुसेण परिरक्खिव्व पड़िवुड्ढाअ अहवा चिट्ठदु एदं पुणोवि पत्थुदं सुणादु पिअसही। अह देण दुईंभ दंसणेण विअवरिसेण विअ पावओ पज्जलिओ मह मअणा अंगो संकप्पेसु अ भिसजण णील मं सलेअ तिमिरे वञ्चिअ परिणणा लआ घरेसु एक्कीं एव्व पड़िवाल अन्तीं मं सोविवेसन्तर तिरोहिदो अवणीद वरिअणो हरिसा सुराअ पूरिदेहिं कसजाइ जडालेहिं (८) णेत्तेहिं पिवन्तो विअ

(८) कसजाइ जडालेहिं। कर्णजाह जडालाभ्यां कर्णजाहे

ाअदुअ पेम्म गव्वइण सरेण किंवि किंवि पत्थेदि, अत्त
ुंसख मेत्त विअ पुढम जलहर वरिसपरोहन्त कदम्ब
ंमल कठोर रोमञ्च कञ्चुअत्थइअ कअलङ्गीं अणिच्छन्ति
व मं सो बलामोडि धुत्तो 'वमाल मंसल वच्छठ्ठल णिम-
ज्जअत्थणा भोग्र परिरब्भिअ सविब्भम कोमल कअगुलु
ताणिअ लज्जावणअ मं मुह णिवेसिअ सुरहिवअआर
विन्दो सदअ दिस मुहदसणक्खदं चुम्बइ। इन्दुवसणं देइ-
अ मे हसिमुउलंत लोअणावङ्गी अप्पणो विब्भम भङ्गदम्ब
अमुअ णीसन्द महुरं अहर णाम्बं। सहि इदो वरं णा
पारेमि लज्जाए कहिदुं जं सो किदवो सअं एव्व विगलन्त
णीविवन्दणिरोह दिढ णिहिअ पाणि जुअलं पलाइदु
कामं वि मं गाढ भुअन्तो परिरब्भिअ किंवि अविणअं
अहिलसइ। अह तक्खणाणन्द मुच्छा मुसिअकरणा पड़ि
बुज्झिअ पेच्छामि पुणोवि एव्व सही अण विरइए कुसुम
सअणिज्जे कुसुमसर सरतप्पे विअ सआणं पुण सुण्णं
अत्ताणं। इति बाष्पं नाटयति।

कालिन्दी। सहि! रमअन्तिए! जइ संकप्पेसु विअ
वेसंदर तिरोहिदो अज्जवि आअच्छइ पाणे सरो कल-
अण्ठी तदो किं णु करिस्ससि।

---

ार्पमूले इ.। तस्य पाकमूले इत्यादिना कर्णादित्वात्प्राइत्। अङ्गा-
ाभ्यां बन्धार भीवाभ्यां इत्यर्थः। इ.। माणिक्यादातोन जन्यतर-
ाणिति जङ्गामन्नावत्।

रम। निःश्वस्य। भइ भाआसणसीले कीस मं पदा
रेसि एव्वं क्खु तुम्हेहिं मल्लिआवि बहुसो पदारिता।

कालिन्दी। सकम्पम्। रमअन्तिए! मा एव्वं भण
सवामि भअवदीए चरणेहिं एसाऽहं अज्जेव्व रक्खिस्सि तु
कलअण्ठेण संघडइस्सं ता उट्ठेहि गच्छम्ह जाव भअवदी
णाणु बन्धइ।

रमयन्तिका। स्वगतं जं होदि तं होदु पुढमं इमा
दो संकड़ादो णिग्गच्छामि। प्रकाशं। सहि! कालिन्दि
जइ एव्वं एसा अहं तुह वसे वट्टामि।

कालिन्दी। ता एदिणा उपवण दुवारेण णिक्कमिदु
गच्छम्ह। इत्युत्थितः।

मधुकरिका। सहसोपसृत्य। सहि! कहिं क्खु गमिस्ससि
आअदा क्खु भअवदी एत्थ तुह परिसे।

रम। साशङ्कं। अह्महे वञ्चम्हि अणावि दीसन्दि। इति
झटिति ससाध्वसमपक्रामति।

कल। उत्तरीय काषाय पटमाक्षिप्य हस्तमवलम्बते।

रम। विलोक्य सहर्ष साध्वसं। स्वगतं। अह्महे महाभाअ
कलअण्ठो। साक्षेपमिव। महुअरिए कहिं एत्थ भअवदी

कल। चरणकमलदासस्येव सद्भृत्य सङ्गे
सुमुखि! यमभिधत्से त्वं बलात्कारधूर्त्तम्।
प्रसभ विधृत तर्षः पीड़यत्याननैव
द्विरद इव सरोजं पाणि मापाटलन्ते।

मधुक। का एत्थ बलामोडो णं पुढमं एव्व तुए कु

हत्यादो अकिदविम रक्तं तेण अप्पाव सोहिदं। एव्व तव पुडमदंसणे एदाए एव्व दिस्सो अप्पा ।

दमयन्तिका । वैलक्ष्यं नाटयति ।

कलहंसकः । सानन्दम् ।

अहो प्रसन्नो मकरध्वजश्चिरात्
अहो तपोभिः स्वयमेव पच्यते ।
अहो जनुस्त्वमिदं न निष्फलं
लभे यदेनां ललनामतल्लिकाम् ॥

दमयन्तिका । सवाष्पं । णोमालिए ! कहं क्खु तुम्हेहिं अम्बरस्स दिस्सा पिअसही मल्लिआ ।

नवमालिका । मुद्धे ! मामा भयाहि । कथं । एव्वं विअ ।

दम । सहर्षं । पियं णो पियं णो किं दुवेवि वेसमेत्तेण वञ्चिआ हदासा । इति नवमालिकामालिङ्गति ।

नेपथ्ये । आः दुरात्मन् ! मिथ्यागगन भाषित प्रयोग कृत कात्यायनी हेलन नृशंसशम्बरक पशो ! अयमध विमृत्यवे । सर्वे सहर्षमाकर्णयन्ति ।

पुनर्नेपथ्ये । हा हतोऽस्मि मन्दभाग्यः । हन्त मुधा शासुकेन मया मल्लिकेति कश्चन भूतएव परिणीतः ।

सर्व । हन्त प्रवृत्तमेव माकन्दनाम्ना महापुरुषेण शम्बरकस्य निसुम्भनम् ।

पुनर्नैपथ्ये । हा भगवति ! मन्दाकिनि ! मोचयस्व मां भिद्यन्त इव गात्राणि ।

कल । हताश ! क्वात्र भवती ।

पुनर्नेपथ्ये। भगवति! पवित्रायस्व भूयोऽप्यनर्घाणि काषायाणि दास्यामि।

कल। मूर्ख! दत्तस्य काषायस्य फलमेतत्।

पुनर्नेपथ्ये।

क्रोडात् केलिगृहं कथञ्चन वधूर्याताथ या सा पतिं
रुद्ध्वा शृङ्खलया निबध्य पदयोः कष्टा नभस्य् स्थिता।
कष्टं कष्ट ममुं तमालविटपे बद्धा तिरोऽभूत् चषात्
जामाता यमधी सुखी वत वदन् वेतालवल्लम्बते॥

सर्व्वाः। सहर्षं। अणुहोदु हदासो अत्तणो दुव्वुहीए फलं।

कल। हन्त सर्वतो हाहाकार मुखरं अमात्य विष्णुरात भवनं।

पुनर्नेपथ्ये।

भो भो कञ्चुकिनस्तथा परिजना! मा भैष्ट माक्रन्दत
व्यक्तास्यो न पिशाच एष मनुजान्मुक्ता रटन् धावति।
मध्या लिप्त वपुर्विभिन्न वदनो व्यामुक्तकेशो न्वहं
जामाता कलपिङ्गकोऽपि विकृतं निर्याति शय्या गृहात्

सर्व्वाः। साहु भमरअ! साहु।

प्रविश्य ससम्भ्रमो भ्रमरकः।

भ्रमरकः। सानन्दं। विलोक्य। हन्त लद्धा याह क
अप्पढे च वि रमणन्तिआ। उपसर्पति।

सर्व्वाः। विलोक्य सहर्षं। एहि भमरअ! तुरिअं कहेहि
वक्षितं। भ्रमरक! किमनुष्ठित कार्य्यः प्रतिनिवृत्तोऽसि

भ्रमर। णाह! को णाम अणणुट्ठिअ कज्जो णिवट्टइ णाहस्स परिअणेसु।

कल। तत् कथय किमत्र क्रिया इति।

भ्रम। तदो सज्जाघरं गदुअ भूयोवि कलह णड्ण वावुढ़ो पुणो पुणो चलण दाससस तस्स तक्खण सुमरिद विविहा वराह समुज्जिम्भिअ रोस निट्ठुर चिविड़ ताड़ण णिव्भिस सव्वङ्गं पुढ़मं एव्व महुअरिआए मच्चवेरन्त णिक्खित्तं मसि भण्डं वेक्कुण अहिसित्त वन्दोह्मि किं वहुणा तह णिक्कासिदो सो छदासो। जह णं विसह्मित्ति लोआ परिहरन्ति।

सर्व्वाः। विहस्य। असहा वि तं विसह्मित्ति परिहरन्दि एव्व।

भ्रमरकः। अह अड्ढ मुक्क णिद्दाणं चेडअ वरिस वट्ठाणं पवुट्ठे कोलाहले अहंवि पसमिअपईवो तिरो णिग्गदुअ तक्खणं तमाललम्बिअं संवरअं किं दाणिं ति णिन्दिअ कण्णे झत्ति आअदह्मि।

कल। साधु भ्रमरक! साधु।

यदुयूयुजः भवद्विकारेण यथाप्य ज्ञात एवागतोऽसि।

मधुकरिका। महाभाअ! इदोवरं अह्माणं अण्णे सणं सव्वविस्सदि ता एदेण उपवण दुवारेण णिग्गदुअ मल्लिआ समीवं एव्व गच्छह्म।

कल। तद्ग्रंथ मार्गं।

मधु । इदो इदो । सर्वे निर्गमं नाटयन्ति ।

कल । सर्वसुखमनुभूय ।

(१०) एष क्रीड़ान्ततास्यत् कुसुमपुर वधूवक्त्र सौरभ्य बन्धुः
मुग्धं निद्राजड़ानां रसितमनसरो द्राघयन् सारसानां ।
आवात्यङ्गानुकूलश्चकित विचकिलश्रेणि गन्धानु धाव-
ल्लोलम्बोद्घुष्यमाण स्मरजय विरुदाडम्बरो मातरिश्वा ।

इति मल्लिकामारुते सप्तमोऽङ्कः ।

---

(१०)प्रभातं वर्णयति एष इति । क्रीड़ान्ततास्यत्कुसुमपुर वधूवक्त्र सौरभ्यबन्धुः मित्रं सहाय इति यावत् यस्य स तथोक्तः । बन्धुः स्यात् पुंसि बन्धूके मित्रे भ्रातरि बान्धवे इति मेदिनी ॥ उपकण्ठवर्त्ति कुसुमपुर श्रोभिद्रुतान्त जायमान क्रमविशेषाऽनुभयभूत फणिविषु फूत्कार सदृश सुगन्धि सुखमन्दानिल संमिलित इति भावः । अत्र क्रीड़ान्त ताम्यदिति विशेषणेन वर्त्तमान रतान्त क्रान्ति वैशिष्ट्य प्रतिपादनात् तदवसान रतोत्सुकत्वावगतेः सर्वासामपि कुसुमपुर स्त्रीणां पद्मिनीत्वं द्योत्यते तथा चोक्तं । रमयति रमणीयां पद्मिनीं तुर्ययामे इति । अनुसरः प्रति कासारं निद्रया व्यवशिष्ट निद्रयेत्यर्थः जड़ानां घूर्णतां सारसानां पक्षि विशेषाणां रसितं द्राघयन् दीर्घीं कुर्वन् चकितानां विचकिलश्रेणीनां मल्लीविशेषराजीनां गन्धैः गन्धाय वा अनुधावन्तो ये लोलम्बा भ्रमराः तैः उद्घुष्यमाणः स्मरजय विरुदाडम्बरः यस्मिन् स तथोक्तः । मातरिश्वा गन्धवाहः अङ्गानुकूलः आवाति मन्दं मन्दं चरतीत्यर्थः ।

इति मल्लिकामारुतव्याख्याने परिमलाख्याने सप्तमोऽङ्कः ।

## अथ अष्टमोऽङ्कः ।

ततः प्रविशति मन्दाकिनी माकन्दश्च ।

मन्दा। ततस्ततः।

माकन्दः। ततश्च तं तमालविटपालम्बं अधोमुखं बद्ध्वा तिरो भूयागतोऽस्मि।

मन्दा विहस्य। वत्स ! समुचितमनुष्ठितं। यतः।

अद्य प्रसीदति मनो मम मारुतेन
यन्मल्लिकाकरमजिम्हमीप्सितेन।
यस्मात्तद्रूपमिदमापयमेतदास्मि
साङ्कौटिना चरणदुर्ललितस्य धूर्तेः॥ (१)

ततस्ततः।

माकन्दः। अथागच्छन्नेव रमयन्तिका सखीयं नवमल्लिकादिभिः सहोपवनान्निभृतं निर्गच्छन्तं कलकण्ठ-

---

(१) अद्येति। अद्य त्वदीय समुचितानुष्ठान अवधानन्तरं मम मनः कर्त्तृ प्रसीदति चिन्तादिविरहेण प्रसन्नं भवति। यत् यस्मात् कारणात् ईप्सितेन वरत्वेन अभिलषितेन मारुतेन मल्लिकाकरं कर्म्म अजिम्हं अप्राप्यमित्यर्थः।

यच्च यस्माच्च। एतस्याः मल्लिकायाः आप्तौ विषये सङ्कुटिमौ भावः। साङ्कौटिनं कपटित्वं तस्य आचरणेन दुर्ललितस्य धूर्त्तस्य धवोः शम्बरकस्य अनुरूपं अपराधस्थले दण्डन न्यायेन कृत प्रतिकल न्यायेन च सदृशं इदं निर्वर्त्तित बद्धपद्धवं तमालविटपे अधोमुख बन्धन-रूपम्। प्रतिकूटमित्यर्थः। आपयं अलभेयं तस्मात् मनः प्रसीदतीति पूर्वेण सम्बन्धः।

मालोक्य भगवत्याः प्रथम प्रिया वेदकः स्यामिति झटित्या-
गत एव। न पुनस्तेषां आत्मानं प्रकाशित वानस्मि।

मन्दा। हर्षातिशयं नाटयन्ती। वत्स! अवाङ् मनस-
गोचरोऽयं मनोरथा वाप्ति जन्मा महानन्दः।

माक। भगवति! युज्यत एतत्।

न वयम्बद्यापि नाक लक्ष्म्रा नच वित्ते न तथा सुधारसेन।
प्रमदष्मजते मनः स्वयं परिपूर्णेन यथा मनोरथेन॥

परितो दृष्ट्वा। क्वाद्य मल्लिकामारुतौ।

मन्दा। मारुतः प्रागुपवनान्निर्गतः स्वपरिजनान्वेषण-
शङ्कया स्कन्धावारमेव गतः सारसिकयाद्य गूढ़मानीतः
समीपवर्त्तिनि लताभवने वर्त्तते। मल्लिका तु मयाचा-
नीता। अद्य सारसिकयैव तत्समीपं नीयमाना इतो
निर्गता। सानुकम्पं।

नि:सङ्गमुत्कलिकया पुरतो विकृष्टा (२)
निर्व्याजया मुहुरपत्रपया च पश्चात्।
सा पुष्प केतुशर पीड़ित कोमलाङ्गी
वाला कथञ्चिदुपकण्ठमगाद्दिवोढ़ुः॥

सस्नेहं। हन्त! तिरयत्येव भीतिं मङ्गनानां प्रिय-
समानुरागः। तथाहि।

या मन्दिरे परिजनेन्दुमुखीकराज
माङ्गल्यदीप शतमण्डित पार्श्वदेशा।

---

(२) उत्कलिकया उत्कण्ठयेत्यर्थः। अयत्नसुकमुत्कण्ठा चोत्कलिका
इतिशब्दार्णव इति हलायुधः।

चंक्रम्यते किमपि सेय मिहान्धकारे
याता स्वयं रमण सन्निधि मत्रसन्ती ॥ (३)

माक। सहर्षं। तदनुमन्यतां भगवती मां हिमाचल प्रस्थ प्रस्थानाय। यावदमुनोदन्तेन विद्याधरामात्यमानन्दयामि।

मन्दा। स्मृत्वा। साशङ्कं ससम्भ्रमञ्च। हन्त विस्मृतो मया तत्तदुपाय व्यापृत चित्तया मूर्च्छाहरस्य वत्सायाः सीमन्तमणे राक्षस व्यतिकरे भ्रंशः। सनिर्वेदं। (४) धिक् कष्टमिह महान् प्रमादः। क्वेदानीं मन्विष्यामि। इत्युत्तिष्ठति कर्णं दत्त्वा। अयमसौ भगवत्याः प्रथमः किमपि व्याहरति। आकाशे लक्ष्यं बद्ध्वा। भद्र! किं ब्रूषे?। स खलु मणिस्तस्यां निशि अन्येन खड्गजिह्वनाम्ना रक्षसा गृहीतोऽनुद्रवद्भिरप्यस्माभिर्न समासादित इति। विषादं नाटयति।

पुनराकाशे। भद्र! भूयः किमात्थ। अथ द्रविडेषु काञ्चीपुर सविधेन धावं स्तत् कालोपस्थितेन देव्याः कामाक्ष्याः किङ्करेण निहतः स यातुधानः आच्छिन्नश्च तेनैव समणिरिति। सोच्छ्वासं। विमृश्य। अयमवसरो मम योग विद्या प्रकटनस्य। यावत् सम्भावित भावि मूर्च्छागमां मल्लिकामेव काञ्चीपुरं नयामि। इति निष्क्रान्ता।

ततः प्रविशति लतामूलस्थो मारुतः।

---

(३) अत्रसन्ती निर्भया सतीत्यर्थः।

(४) सनिर्वेदं। दुःखादिजनित निष्फलत्वधिया सावमित्यर्थः।

मारुतः। सहर्षं। अवश्य मद्यानेष्यत्येव मल्लिकां सारसिका। औत्सुक्यातिशयं नाटयन्।

नीतास्ते दयितासि संशयकृतः कल्पोपमा वासरा
प्राप्ताच प्रथमोर्जितेन तपसा प्राणेश्वरी मल्लिका। (५)
नेदीयांस मवैमि सम्प्रति तया सङ्गं तथाप्यन्तरे
यः कश्चित् चणमस्ति सोऽपि विरहो हा हन्त मे दुस्तरः॥

विमृश्य। अथवा चेत एव दुस्तरं मन्यते यावदेत-दाश्वासयामि।

अये चेतो धैर्य्यं धर विधुरतां मास्म भजथा
ननु प्रत्यासन्नो भवति दयिता सङ्गम महः। (६)
तथानामोत्तीर्णे महति विरहे पञ्चषत्रुटि
व्यवच्छिन्नं (७) कालं किमिति युगदीर्घं कलयसे॥

निःश्वस्य। हन्त उत्तरोत्तरमुत्क्रम्यमाणे मान्मथे प्रा-चण्डे किं करोतु तपस्वि (८) चेतः। तथाहि।

---

(५) प्रथमार्जितेन प्राक् सम्पादितेन तपसा दुष्प्राप प्राप्तिसाधन-भूतेन कर्मविशेषणेनेत्यर्थः। उक्तञ्च मनुना। यद्दुष्करं दुरापञ्च यद्दुर्गं यच्च दुस्तरं तत्सर्वं तपसा प्राप्यं तपो हि दुरतिक्रममिति।

(६) दयिता सङ्गम महः दयिता सङ्गमोत्सवः। मह उद्धव उत्सव इत्यमरः।

पञ्चषत्रुटि व्यवच्छिन्नं लघ्वक्षरोच्चारकालस्त्रुटिः पञ्चवा षड्वा पञ्चषाः बहुव्रीहौ संख्येये डज बहुगणात् इति डच् डिति चेति टिलोपः। ताश्च ताः त्रुटयः काललवाश्च ताभिर्व्यवच्छिन्नं तत्परिमिति यावत्। वाद्ये काललवे त्रुटिरिति नानार्थ रत्नमाला।

(८) तपस्वि करुणास्पदं शोचनीयमिति यावत्। करुणाप्रति-पादने तपस्वी चेति रुद्रः।

आरभ्य तस्याः प्रथमावलोकात्
अस्त्राणि यावन्त्य मुचन्मनोभूः ।
तावन्ति तेभ्योऽप्यधिकानि चाद्य
प्रयुङ्क्ते येक क्षणमात्र एव ॥

परितो विलोक्य । हन्त सूचिभेद्यैः रन्धकारैरभिव्याप्त-
मिक तमालोद्यान तुल्यं भुवनं । सकरुणं । कथमपि दूरा-
दपत्राप्यमादस्मिन् समये समेष्यति कोमालाङ्गी ।

दूयेते शिव शिव यौ सरोजताम्रौ
सैरन्ध्री करतलदत्त लाक्षयापि ।
पादौ तौ तिमिरविसंष्ठुले स्थलेऽस्मिन्
सञ्चारं चकित दृशः कथं सहेते ॥

अथवा नाति शोचनीय मेतत् ।

ंरणौ नयने तमः प्रकाशो वनिता नाम सहायता वयस्या ।
पिच प्रिय वल्लभाभिसारे भवन प्राङ्गण कुट्टिमः कदध्वा ॥(८)

नभोविलोक्य ! अये ! उत्कण्ठिते वेयं मल्लिकायाः सरणिं
प्रकाशयन्ती दीपिकेव विद्रुम भङ्ग पाटला ज्योत्स्नावली

---

(८) चरणाविति । वनितानां प्रियवल्लभाभिसारे विषये चरणौ नयने नयवत् मार्गप्रदर्शके इत्यर्थः । तमः प्रकाशः प्रकाशवत् गमन-प्रतिबन्ध प्रतिपन्थि इत्यर्थः । असहायता वयस्या सखी सखीवदभय-प्रदानपूर्वकं नायक सङ्गम सम्पादयित्रीत्यर्थः । अपि च कदध्वा कापथः कण्टककानन क्षुद्रजीवाद्याहतमार्ग इति यावत् । भवनप्राङ्गण-कुट्टिमः वेश्माङ्गण निबध्व भूमिः । कुट्टिमोऽस्त्री निबद्धा भूरित्यमरः । भवन प्राङ्गण कुट्टिमवदनायास गमनार्ह इति यावत् । अत्र चरणौ नयने इत्यादिषु सर्वत्र व्यस्तरूपकम् ।

निर्वर्ण्य ।

नवकुङ्कुमचर्चिका रजन्याः गगना शोकतरोः प्रवाल पङ्क्ति
मणिकुन्तलता स्मरस्य मन्ये शशिनः प्राथमिकी मयूखलेखा

(१०) प्राचीं विलोक्य सकौतुकं ।

अयमुदयति चन्द्रो वारिधेरम्बु गर्भा-
दमृतकणकरालैरंशुभि र्दीप्यमानः ।
जलधि(भुजग)शयनवक्षो हर्म्यप्रदेशे ललन्त्या
वदनमिव यदृच्छोत्तानितं विश्वमातुः ॥ (११)

अपिच । उज्जृम्भते कुमुदिनी सुकृतं मृगाङ्को
विष्वग्विकीर्णपरिपाटल रश्मिदण्डः ।

---

(१०) नवकुङ्कुमेति । शशिनः प्राथमिकी मयूखलेखा रजन्याः रजन्याख्यस्त्रियः नवकुङ्कुमचर्चिका गगनस्यैवा शोकतरोः प्रवालपङ्क्तिः स्मरस्य मणिकुन्तलता मन्मथोपयोगी मणिमय कुन्ताख्यायुधविशेषः इत्यर्थः । इति मन्ये इत्यन्वयः । इह मालानिरवयव रूपकमलङ्कारः । अत्र अव्याख्यातेषु एतद्ग्रोमवनीवराङ्ग वलयं विश्वैकवीर स्मरस्कन्धावार मदान्ध सिन्धुरकुलं श्यामावधूं कैशिकमित्यादिषु स्थलेष्वपि अयमेवालङ्कारो बोध्यः ।

(११) अयमिति । अमृतकणकरालैरंशुभिर्दीप्यमानः अयं चन्द्रः भुजग शयन वक्ष एव हर्म्यः तस्य देशे ललन्त्याः विलसन्त्याः विश्वमातुः लक्ष्म्याः यदृच्छया उत्तानितं उन्नमितं वदनं मुखमिव इत्युत्प्रेक्षा वारिधेः अम्बुगर्भात् उदयति । भुजशयनेत्यत्र जलधि शयनेति पाठे वारिधि वारिगर्भोदये साभिप्रायत्वात् विशेष एव । उत्प्रेक्षा लक्षणन्तु । यत्रान्यधर्मसम्बन्धात् अन्यत्वेनोपतर्कितम् । प्रकृतं हि भवेत् प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते इति ।

उत्सृत विद्रुमकुलो जलधेस्तरङ्गा-

दुत्क्षिप्यमाण इव कश्चन राजकम्बुः ॥ (१२)

निर्वर्ण्य।

हन्त गलित एवोदय रागः। साकूतं।

ानुसर्त्तुं मना मनाङ्मनोज्ञं किमपि श्वेतत एव शीतधामा।

ादनं निखिलोपमान दूरं मदनान्तकविपाण्डु मल्लिकायाः(१३)

निःश्वस्य। यावदेनं दुर्लभार्थं प्रार्थन दुर्ललितं किञ्चिद्-

ब्रवीमि।

अभिलषसि यदीन्दो वक्त्र लक्ष्मीं मृगाक्ष्याः

पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कं।

सुविमलमथ बिम्बं पारिजातस्य गन्धैः।

सुरभय वद नो चेत्त्वं क तस्या मुखं क ॥ (१४)

---

(१२) उत्सृतानि। उपरि विकीर्य्यमाणानि विद्रुमकुलानि येन स तथोक्तः। जलधेस्तरङ्गात् उत्क्षिप्यमाणः कश्चनः राजकम्बुः शङ्खोत्तम इव इत्युत्प्रेक्षा उत्सृतपदस्य वर्त्तमानार्थकत्वन्तु मति बुद्धि-पूजार्थेभ्यश्चेति च शब्दस्य अनुक्त समुच्चयार्थकत्वात् अतएवाह वृत्ति-कारः। सुप्त शयितेत्येवमादयो वर्त्तमाने द्रष्टव्याः इति।

(१३) मनोज्ञं वदनं अनुसर्त्तुं मना किमपि अनिर्वचनीयतया श्वेतते शुभ्रो भवतीत्यर्थः। मल्लिकावदनमनुसर्त्तुं मना इत्युक्त्या साकूतत्वं बोध्यम्।

(१४) अभिलषसीति। हे इन्दो! मृगाक्ष्याः वक्त्रलक्ष्मीं अभि-लषसि यदि पुनरपि अद्यैवाब्धे दूषितत्वात् पुनरपीति पदं अब्धौ सकृत् मज्ज अवगाहस्व। अङ्कं कलङ्कं संक्षालय प्रक्षालय अथ सङ्क्षालना-नन्तरं सुविमलं बिम्बं कर्म पारिजातस्य पारिजातकुसुमस्य गन्धैः

अथवाद्यैवागताया स्तस्याः सुरभि सुन्दरं वदनं प्रदर्श्य त्वां संवादयामि । (१५)

कर्णं दत्त्वा । सहर्षं । हन्त आगतैव प्रेयसी ।

दूरमिदमलसाघ्या श्रूयते मञ्जुतारं
जघनभरगताया भं क्वतं मेखलायाः ।

पुनः कर्णं दत्त्वा सविषादं ।

नहि नहि विधु विम्बे बध्नतां स्वीय बुद्धिं
सरसि सरसि सोऽयं निस्वनो हंस यूनाम् ॥ (१६)

नेपथ्ये । हृदो हृदो जोण्हिघाविदेण मम्मोण मन्दं एदु पिअसही ।

मारुतः । आकर्ण्य । सानन्दं । सत्यमागतैव मल्लिका ।

---

रामेटैः सुरभयः (कुवलयानन्दे विषमालङ्कारोदाहरणस्थले पारिजात प्रसूनैरिति पाठो दृश्यते) नो चेत् मज्जन कलङ्कक्षालन विम्बसुरभीकरणाभावे इत्यर्थः । त्वं कलङ्कित्व निर्गन्धत्व दोषविशिष्ट इति भावः । क तस्याः मुखं सुरभि सुन्दरमिति भावः । क परस्परमनुरूपमित्यर्थः । तदा दुर्लभमेव त्वत् प्रार्थनं स्यादिति भावः । विषमालङ्कारः विषमं वर्ण्यते यत्र घटनाननुरूपयोरिति लक्षणात् ।

(१५) विमलत्व सुरभिलत्वयोरुभयोरपि गुणयोः सम्भव एव तद्वक्त्रलक्ष्मीः प्राप्येति प्रागुपन्यस्तेऽर्थे संशय निराकरणायाह अथवाद्यैवागताया इति संवादयामि अङ्गीकारयामीत्यर्थः ।

(१६) नहि नहि मेखला भं क्वतं नेति भावः । किं तर्हीत्यत आह । सोऽयं श्रूयमाणः विधुविम्बे स्वीयः स यूथ्यो हंस इति बुद्धिं बध्नतां सरसि सरसि प्रतिसरः विद्यमानानामिति शेषः । हंसयूनां निस्वनः इति सम्बन्धः ।

श्रूयते खलु पश्चिमतो लतान्तरितः सारसिकायाः स्वरः ।

विलोकनं नाटयति । पुनर्नेपथ्ये ।

जोण्हाहिं ण्हावयन्दो दिणअर किरणक्केर ढड्ढं पवञ्चं ।

दूसुब्भिसन्दं णीलुप्पल पअलिअ लोलम्ब वाआलिआसो ।

एसो दिट्ठो मिअङ्को पहिअ हिअअ सम्मोहणो रोहिणीए ।

सेच्छारद्धत्थणा लिङ्गण विलुलिअ कत्थुरिआ संकि अङ्को ।*

मारुतः । विलोक्य साभिलाषम् ।

इयमभिसरत्याराद्रङ्गैरनङ्गहृतैः प्रियाः

चकितचकितां विन्यस्यन्ती दृशं मम लाञ्छने ।

अलघु विपुलश्रोणी भारालसालसचंक्रम

श्रमसमुदित खेदच्छेदाभिराम मुखाम्बुजा ॥

निर्वर्ण्य । हन्त चन्द्रिका पात सविशेष मण्डितानि तन्वङ्ग्या अङ्गकानि । तथाहि

चन्दनचर्चास्तनयोर्धम्मिल्ले मल्लिका दाम ।

क्षौमं नितम्बविम्बे चन्द्रकरा क्षाममध्यायाः ॥ (१७)

---

*ज्योत्स्नाभिः स्नापयन् दिनकर किरण क्रौर्य दग्धं प्रपञ्चम् ।
दूरमुद्भिद्यन्नीलोत्पल प्रचलित लोलम्बवाचालिताशः ।
एष दृष्टो मृगाङ्को पथिकहृदय सम्मोहनो रोहिण्या ।
स्वेच्छारब्ध स्तनालिङ्गन विलुलित कस्तूरिका शङ्किताङ्कः ।

वि॰ (१७) चन्दनचर्चेति । चन्द्रकराः चन्द्रकिरणाः क्षाममध्यायाः [illegible]योः चन्दनचर्चा । धम्मिल्ले कचभरवन्धविशेषे मल्लिकादाम नितम्ब[illegible] [illegible]यः । क्षौमं दुकूलम्वयः । अत्र चन्द्रकराणां स्तनादिविषयभेदेन चन्दन-

विहस्य। अहो विशिष्टवस्त्वभिलाषो मञ्जूनाम्। एतेहि।

जहत: शशाङ्ककिरणान् पिपासव: सुरभिलां मुख-ज्योत्स्नां चंचूर्य्यन्ते (१८) परितश्चकोरपोताश्चकोराचीं।

पुनर्निर्वर्ण्य। सस्मितं। न केवलं चकोर एव।

स्वयमयमपि चन्द्र: प्रागुपालब्ध कान्ति:
पिपठिषु रभिरामां सुभ्रुवो वक्त्र लक्ष्मीम्।
अविरल भवदध्व खेदलेशानुकीर्णं
प्रतिफल नमिषेण प्राप्तवान् गण्डमूलम्॥ (१९)

यावदहं प्रत्युद्गच्छामि। अथवा अत्रैव स्थित: सुललितमस्या आगमनं निर्वर्णयामि।

तत: प्रविशति यथोद्दिष्टा मल्लिका सारसिका च।

मल्लिका। स्वगतं। अज्ज पुढमं अज्ज उत्तं अहि सरन्ती वरवसह्मि असज्झेहिं लज्जाकोलाहलेहिं।

---

चर्चेत्यादि बहुप्रकारोल्लेखात् उल्लेखालङ्कारः। एकेन बहुधोल्लेखे-ऽसवो विषयभेदतः इति लक्षणात्।

(१८) चञ्चूर्यन्ते पुनः पुनरतिशयेन वा सञ्चरन्तीत्यर्थः। चर जति भक्षणयोरिति धातोरेकाचो हलादेरिति यङन्तात् सनाद्यन्ता इति धातुत्वाल्लट् ङिदन्तत्वात् अनुदात्त ङित इत्यात्मनेपदं चर फलो-रित्यभ्यासतो नुक्। उत्परस्यात इति अभ्यासात् परस्यात उत् हलि चेति दीर्घः।

(१९) अविरलं यथा तथा भवद्भिः उद्भवद्भिः खेदलेशैः अनुकीर्णं गण्डमूलं अस्याः प्रतिफलनमिषेण प्राप्तवान् इति योजना कैतवापह्नुति रलङ्कारः। कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैरिति लक्षणात्।

सार । इदो इदो । इति परिक्रामतः ।

मारुतः । साभिलाषं । इयं खलु ।

उत्तुङ्गस्तनभर तान्त तान्त मध्यं
विश्लिष्यद्घनकच वान्त वान्त सूनम् ।
वक्त्राब्ज भ्रमदलि भीत भीत नेत्रं
मुग्धाक्षी मम धुरि मन्द मन्द मेति ॥

मल्लिका । सहि सारसिए ! कहिं ण अज्जउत्तो वट्टइ । उक्कण्ठइ मह चन्द दंसणप्पेइआ दिट्ठी अज्जउत्त मुहार-विन्दं दट्ठुम् ।

मारु । सानन्दं ।

अद्य हि सफलं यौवनमद्यहि देवः स्मरः प्रसन्नो मे ।
अभिधेयोऽस्मि यदस्या रमणीयस्यार्य्यपुत्रशब्दस्य ॥

सार । सहि ! समीवं चिअ वट्टइ आअच्छेहि पञ्च-व्वाणि पआणि ।

मल्लिका । स्वगतम् । अह्महे अज्जउत्त दंसणुस्सिआए मह पञ्चपअ परिमिदोवि दुल्लंघो एव्व पदेसो । पञ्चषाणि पदानि गत्वा परितो विलोक्य सविषादं । सहि सारसिए ! मिच्छा कहेसि एत्थ वि ण दीसइ अज्जउत्तो ।

सार । विहस्य । सहि मल्लिए ! सच्चं तुह विसाल तुङ्गेण णिअम्बभरेण किलन्ताए णव पल्लव कोमला चरण जोआ तहवि पत्थेमि । पुणोवि किञ्चिअ अग्गदो आअच्छ । अङ्गुल्या दर्शयन्ती । एत्थ पेक्ख णादि दूर वट्टिणि लदा मूले सण्णिहिदेण होदव्वं ।

मल्लिका । साकूतं । जदि एव्वं ता सखिअं सखिअं गच्छह्म । अविसाहिव्व गदुअ परिरहस्सं अज्जउत्तं । इति पदान्तरं गत्वा सलज्जं तिष्ठति ।

मारुतः । झटित्युपसृत्य ।

सोढुमलमस्मि नाहं सुन्दरि ! मन्दागमा द्विलम्बं ते ।
पञ्चशरास्त्र हतं मां सञ्जीवय चारुगात्रि ! परिरम्भैः ॥

इति मल्लिकाया हस्तं गृहीतुमिच्छति ।

मल्लिका । दृष्ट्वा सानन्दं । स्वगतं । अम्महे सयं एव्व आअओ अज्जउत्तो । ससाध्वसलज्जमपक्रामति ।

सार । सहि ! एत्तिअं समअं तह तह णाम उस्सुआ भविअ एहिं उण हत्थगहणे वि जणिअ सम्भमा धावसि ।

मल्लिका । अदत्तोत्तरैव सलज्जं तिष्ठति ।

मारुतः । सस्पृहं । स्वगतं ।

अस्याः स्थितं किमपि सम्प्रति लोभनीयं
नम्र भ्रुवो नमित मुग्धमुखारविन्दम् ।
मन्दाच्च मन्थर विलोल विलोचनाञ्ज
च्छायाञ्चलच्छुरणशाद्वलितस्तनायाः ॥

विमृश्य । भवत्वेवं तावत् । प्रकाशं । प्रिये ! मा तावत् करावलम्बः । एतत् पुनरनु मन्तव्यं मे । (२०)

---

(२०) अथात्र सर्वकामिजनसाधारणं (मदनवचनदक्षो मानिनी मानभेत्ता) इत्यादि वचनैः रतिमन्त्रविदग्धत्व लक्षणं द्विप्रकारक सम्भोगाङ्गतया आवश्यकत्वेन कामवेदविहितं आत्मविषयकदण्ड वैशिष्टेण चतुर्विधोपायात्मकं नायक कर्तृक चाटुवचन प्रकारम् । तथा नायिका

यदिद मगणयित्वा दुर्व्वहं श्रोणिभारं
मदभिसरण लोभात् प्रस्थितं पद्मतास्रम्।
अयमहमभि वाञ्छाम्यप्रमृजेव पांसुं
सुमुखि! पदतलन्ते चूडितुं चुम्बितुञ्च॥

मल्लिका। सव्याजसकम्पं। स्वगतं। अम्महे ण जाणामि
ज्जाए पडिवत्तुम्वि।

मारु। मल्लिकां निर्वर्ण्य। सानुकम्पं। सारसिके! न विर-
त्यद्याप्या गमन जनितः परिश्रमो मालतीदल सुकुमा-
ङ्ग्या मल्लिकायाः। पश्य।

नो शाम्यन्ति स्खलित मरुतः सौरभोद्भ्रान्त भृङ्गा
मुग्धी मध्यस्तनतटभरात् पीडितस्त्रुटत्रतीव।
ऊर्व्वोश्चावौरुपरि जघनाक्रान्तयो रस्ति खेदो
भूयो भूयो वदनकमले भूयते घर्म्मलेशैः॥ (२१)

सार। ता एत्थ एव्व घणसार क्खोद धवल सीअल
णच्छा वाद सुन्दरे कुसुम धूलि सिअदिले सिलाअले
उविसदु महाभाओ जेण पिअसहो वि उवविसदि।

मारुतः। उपविशति।

सार। सहि! तुमं वि उवविस।

---

...कं अनुज्झित विनयं मानकरण प्रकारञ्च वर्णितु मारभ्यते।
...दं नायककर्त्तृकं प्रथमोपायात्मकं चाटुवचनं एतदिति मे मम एतत्
: वक्ष्यमाणं प्रार्थनन्तु अनुमन्तव्यं अङ्गीकर्त्तव्यमित्यर्थः।

(२१) घर्मलेशैः स्वेदाम्बुकणैः घर्मः स्यादातपे ग्रीष्मेऽप्युष्ण स्वेदा-
...नोरपि इत्यभिधानं भूयते उत्पद्यते इत्यर्थः।

मल्लि। सव्रीडं तिष्ठति।

सार। महाभाअ! ण सुणादि एसा मह वअणं ता तुमं एव्व भण।

मारुतः।

(२२) उत्सङ्गोऽयं विपुलजघने भूषयत्वेष पाणिः
संवाहाय स्पृहयति शनैरर्पयस्वात्र पादम्।
वक्षस्यस्मिन्नपि च कुचयोः स्वैरमारोप्य भारं
सन्नाऽसन्नोल्लिखितविभवं मध्यमुल्लाघयस्व॥

मल्लिका। स्वगतं। हन्त। महुरमहुरा अज्जउत्तस्स चाडुपरिपाडी। सारसिकया सह शिलातले एव उपविशति।

मारुतः। स्वगतं। हन्त लज्जावती प्रस्तर एवोपविष्टा उपालभे तावत्।

---

(२२) उत्सङ्ग इति। अयं उत्सङ्गः हे विपुलजघने! एनं इति शेषः। एनं उत्सङ्गं भूषयस्व जघनसंस्थापनेन अलङ्कुर्वित्यर्थः। एष पाणिः संवाहाय स्पृहयति। अत्र पाणौ पादं शनैः न तु जवात् अर्पयस्व। अतिमात्र मृदोः पादस्य पाणितल सरभसार्पणबाधां सोढुमक्षमत्वादिति भावः। ततः कर्त्तव्यं विशेषमाह। अपि च किञ्च अस्मिन् वक्षसि कुचयोर्भारं स्वैरं स्वच्छन्दमारोप्य मध्यं कर्म सन्नाऽसन्नः लग्नाऽलग्नः उल्लिखितः तनूकृतः उत्कीर्णो तनूकृतयोरुल्लिखितमिति नानार्थ रत्नमाला। विभवः सामर्थ्यं पाटवमिति यावत्। यस्मिन् कर्म्मणि तद्यथा भवति तथा इत्यस्य मन्द मन्द सम्पर्कि तयेति भावः। उल्लाघयस्व उपरिष्टाच्चारयेत्यर्थः अनेन हंसनामा बन्धविशेषो व्यज्यते। तदुक्तं शृङ्गार प्रबन्धप्रदीपे। अर्धोत्थितोरुदेहायाः पुटीकृत पदद्वये। आसीनेन कृतं यत्तु हंसबन्धस्तदुच्यते। तत्राङ्गना प्रणयिनः करयोः स्वपादौ योनौ स्वयोनि सुरभि स्वसुरोजकुम्भं संयोज्य कण्ठलुलिता प्रविचालयेत् स्वां श्रोणीं भवेत् सुखपदं स च हंसबन्ध इति।

मुग्धे ! नूतनकर्णिकारकुसुमापातादपित्रस्विदं
पाषाणासिकया किमित्य करुणे प्रज्ञापयस्यङ्कम् ।
यद्यात्मीयमिति भ्रमस्तव महान् प्रागेव मासीदपि
त्वद्यारभ्य ममैव तत्तव पुनर्ज्ञातव्यमेतद्वपुः ॥ (२३)

मल्लि । सहर्षं । स्वगतं । अज्जउत्तस्स एदन्ति महन्तो पेम्मोत्रखिं सरीरे वि। कधा पिवेह तुम्हो पेजसं । सौत्सुक्यं । अच्छिओ तुम्हो उण तह णाम परोक्खे उक्कण्ठिआ भविस्स, अज्ज सखिहिदि अज्जउत्तो अप्पाणं वच्छेह । इति किञ्चिदिव हृष्टा सलज्जं व्यावर्त्तते ।

मारुतः । सरोमाञ्चं । स्वगतं । हन्त अतिसूक्ष्मरमणीयः प्रेयस्या भावव्यतिकरः ।

अद्यानया प्रियसखीमपि वञ्चयित्वा
मुग्धारविन्दमधुरं मुखमुन्नमय्य ।
दृष्ट्यापि नैव विदितः सुदृशा कटाक्ष-
विक्षेपणं मयि पुनः प्रतिसंहृतश्च ॥

विमृश्य । एवं मन्ये ।

---

(२३) मुग्धे इति । हे मुग्धे ! मूढ़े ! नूतन कर्णिकार कुसुमापातादपि त्रस्नु कातरं इदमङ्कं कर्म हे अकरुणे ! किमिति कस्मात् पाषाणासिकया पाषाणे आसिकया स्थित्वा प्रज्ञापयसि इदमिति शेषः इदमङ्कं आत्मीयमिति यदि स्वीयमिति पक्षे इत्यर्थः । तव महान् भ्रमः बुद्धिव्यामोहः । अन्यथा नैवं ब्रूया इति भावः । तर्हि तद्वयदीयमित्यत आह । एवं आत्मीयत्वेनेत्यर्थः प्राक् पुरा आसीत् । अपि तु किन्तु तत् त्वदीयमङ्कं अद्यारभ्य ममैव एतद्वपुः पुनः करनिर्दिश्यमानं मदीयमङ्कं मित्यर्थः । तव त्वत् सम्बन्धि ज्ञातव्यं इति योज्यम् ।

व्रीड़ा वेला रुद्ध सागर तोयमिव योषितां हृदयम् ।
रागेन्दुरुदय मानो भूयो भूय स्तरङ्गयति ॥ (२४)

औत्सुक्यं । हन्त चेतस श्चिरकाङ्क्षितार्थ साधनेऽपि वैहस्त्यम् । (२५)

नीवी दृढ़ार्पित करां निविड़ीकृतोरु
व्रीड़ानतां तत इतो वदनं हरन्तीम् ।
आरोप्य वक्षसि सुखं परिरब्धु मेनां
वालां वलादभिलषामि न पारयामि ॥

भवतु पुनरपि प्रार्थये । प्रकाशं । अयि ! मल्लिके !

इदं दूर्वाकाण्डद्युति सुषिकपोले कतिपयैः
श्रमाम्भोभिः कीर्णं सहज वकुला मोद सुभगम् ।
समाकाङ्क्षे ताम्राधर मनु मनुष्व प्रियतमे !
मनोज्ञन्ते पातुं मुखकमलमाघ्रातुमथवा ॥

अथवा । वितरच कुचयोस्त्वद्दर्शनोपक्रमाणां
मदन शर रुजानां शान्तये मामकीनाम् ।
सकृदपि परिरम्भं सुभ्रु ! दोर्मूल कुल-
ङ्कष घनपरिणाह व्यातयो रेतयोस्ते ॥ (२६)

---

(२४) व्रीडेति रागः अनुराग एव इन्दुः कर्त्ता उदयमानः सन् व्रीडैव वेला तया रुद्धं योषितां हृदयं कर्म सागरतोयमिवेत्युपमा । भूयो भूयस्तरङ्गयति वर्द्धयति ।

(२५) वैहस्त्यं व्याकुलत्वं विहस्त व्याकुलौ समावित्यमरः ।

(२६) वितर चेति । त्वद्दर्शनं उपक्रमः प्रारम्भः यासां ताः तासामिति रुजाविशेषणम् ।

आस्तिर्य्यक् चटुल मृगाक्षि मन्यसे चेत्
आश्लेषे स्तनतटयोरति प्रसङ्गम्।
कूजाभिर्विहित रुजौ कुहू मुखानां
वाचावा शिशिरय वल्गु वाणि! कर्णौ॥ (२७)

मल्लि। लज्जाना तूष्णीं भवति।

मारुतः। विलोक्य। सस्पृहं।

न निषेधति नानुमन्यते वा वचसा नम्रमुखी ममेप्सितानि।
अपितु प्रणयप्रमोदलज्जा परिपूर्णं नयनोत्पलं बिभर्ति॥

सार। सखि! णं तुए एव्व भणिदं अज्जउत्तं अवि-
सादा गदुअ परिरम्भि स्सन्ति।

मारु। नन्वावयोः प्रथम दर्शन एव बाले!
मालां कुच प्रणयिणी मयि मे व्यतार्षीः। (२८)
अद्यानयोस्तु कुचयोः परिरम्भ दाने
किं चिन्त्यते क्व नु गतः स उदारभावः॥

अथ यद्येवं न करिष्यसि।

(२९) स्यन्दन्ते स्मयमान कैरव मधुस्यूताश्च मन्दानिलाः
सन्व्येते मदनास्त्र पावक शिखास्चन्द्रांशवः प्रांशवः।

---

(२७) हे वल्गुवाणि! मञ्जुलवचने! इति साभिप्राया सम्बुद्धिः। वाचा वा कुहूमुखानां कोकिलानां कूजाभिः विहितरुजौ कर्णौ कर्म्म शिशिरय इत्यन्वयः।

(२८) व्यतार्षीः। अदाः इत्यर्थः विपूर्बात् तृधातोः कर्त्तरि परस्मै-पदाङ्कूते लुङ्। विश्राणनं वितरणमित्यमरः।

(२९) स्यन्दन्त इति। स्मयमानानां विकसतां कैरवाणां मधुभिः स्यूता प्रोताः तन्मधुकण वाहिन इत्यर्थः। इति मन्दानिलविशेषणं

गर्वान्धाः प्रति बल्लि कर्णपरुषं गुञ्जन्ति पुष्पन्धयाः
सर्व्वेभ्यो विभजामि मद्वपुरिदं बाले ! तवैवायतः ॥

मल्लि । सावेगं अपवार्य्य ।

सारसिए ! अवि सच्चं अज्जउत्तस्स ववसिदं ।

सार । मुग्धे ! ण जाणासि एदस्स साहस सीलत्तणम् ! जेण पुढ़मं वि तुह भलाहं आसंकिअ कण्ठमूले करवालो पसारिओ । ता झत्ति अस्स अहिलासं पूरेहि वारेहि वा वअणेण ।

मल्लि । स्वगतं । वारेमि दाव । प्रकाशं । अज्जउत्त ! इत्यर्द्धोक्ते । सलज्जं । अपवार्य्य । सहि ! सहि ! तुमं णिवारेहि णाहं अप्पणो पहवामि लज्जाए ।

मारुतः । सानन्दं । स्वगतं । साधीयानयं कपट साहसोपन्यासः । यतः

अव्यक्त कोमलाक्षर मर्द्धोदित विरत माधुर्य्य पुर्त्तेति !
अस्या मुखेन्दु बिम्बादमृतमिव स्यन्दितं वचनम्

प्रकाशं । सारसिके ! किमाह भीरु मध्यमा मदर्थितस्य ।

सार । अणुजलं एव्व भणदि णाहं अप्पणो पहवामित्ति

मारु । कस्तर्हि प्रभवति ।

---

मदनास्त्र पावकस्य शिखाः ज्वाला भूताः प्रांशवः उन्नता इत्यर्थः । रोदो व्याप्तत्वादुन्नतत्वोक्तिः एते चन्द्रांशवः सन्तीत्यन्वयः । अत्र मन्दानिल चन्द्रांशु भ्रमर गुञ्जितानां उद्दीपनत्वेन विरहिणां अनवरत सन्तापकरत्व प्रसिद्ध्या एभ्यो मद्वपुः विभजामीति कपट साहसेन भावस्योत्पादनम् ।

सार। यं महाभाग्रो एव्व।

मारुतः। सहर्षं।

यदि प्रिये ! वेत्सि तव प्रभुं मां
अनन्य साधारण दास मङ्ग्रीः।
तदद्य वक्षो मम पात्रमस्तु
स्वयं ग्रहा श्लेष महोत्सवानाम्॥

मल्लि। साकूतं अपवार्यं। सारसिए ! कीस तुमं सम-
हृहे पवट्टावेसि। अपवत्तुं मिच्छति।

सार। हसित्वा विहस्य। सहि ! कीस तुह णीरन्ध
रोमञ्च वञ्चला थण कुम्भा। मये समङ्ग हादो भीदा पुलम्र
कञ्चु एहिं संछादिभा एदेत्ति।

मारु। स्वगतं। साधु सारसिके साधु। सम्यगुपचिम-
वती।(२०) अपि। नन्वन्ते वासिन्यसि मन्दाकिन्याः। प्रकाशं।
सारसिके ! अपि सत्यं मदुपगूढभीतौ धृत कञ्चुकौ स्तनौ।

सार। अहइं।

मारु। यद्येव मुपालभे तावदेतौ।

तरणिमकरि कुम्भौ हे प्रिये राज कुम्भौ
किमिति न परिरम्भं त्वायतो मे सहेथे।
समुचित मथवा वां यौ युवां निर्दयौस्थः
प्रकटित गरिमाणौ भज्यमानेऽपि मध्ये॥

मल्लि। साकूतं। सारसिए ! कीस मिच्छा कहेसि।

मारु। सारसिके ! किं मिथ्येव कथयसि।

---

(२०) उपचिम्रवती उत्प्रेक्षितवतीत्यर्थः।

सार। सक्लितं। कहं दुवेवि मिच्छा वाइणिं मं कप्पिदु ता महाभाअस्स हत्थो एव्व एत्थ मज्झत्थं होदु।

मलि। मा मा एत्थ मज्झत्थं आणेहि सव्वं एव्व तुमं भणासि।

सार। णाहं तुम्हाणं मिच्छावाआ हि आवं सहेमि। मारुतस्य हस्तमवलम्ब्य। महाभाअ! पेच्छदु तुह हत्थो।

मारु। प्रिये! ममापि मिथ्येवेति निर्णयः। सारसिका तु निर्बध्नाति।

मारु। हस्तं प्रसारयन् ससाध्वसकम्पं। स्वगतं। आश्चर्य्यम्।

प्राग्भावनारति विधिध्व निवार्य्यवृत्तिः

प्रागल्भत प्रसभ मम्बर कर्षणेऽपि।

पारिप्लवाङ्गुलि रधिस्तनमद्य तन्व्याः

पाणिः प्रसर्त्तुमपि न क्षमते कथं मे।

कथमपि करतलेन सपुलकं स्तनं स्पृशति। सानन्दं। स्वगतं।

स्वयमेव केवलं नस्तनौ प्रियायाः प्ररूढ़ घनपुलकौ।

पुलकयतोऽपि ममैतौ सर्व्वाङ्गं करतल स्पृष्टौ॥

प्रकाशं। सारसिके! नन्वेतस्मिंस्ते तद्भ्रमः।

(२१) इमां समकठोरयोः कमल नाल धर्म्मं द्रुहोः

कथं नु कुचकुम्भयोः पुलक मञ्जरीं मन्यसे।

---

(२१) इमामिति। समकठरयोः परस्परतुल्ययोर्द्वयोश्चेत्यर्थः। कमलनालधर्म्मं द्रुहोः कण्टकितयोः कुचकुम्भयोरधिकरणयोरिमां कण्टकितत्वेन करस्पर्शविषयां इत्यर्थः। विधेयाभिप्रायकं क्लीवम्। पुलक-

कदम्ब नवकुड्मल प्रकर गुम्फिता नन्वियं
मनोभव समर्पिता स्फुरति कापि हारावलिः ॥

सार। विलोक्य। संस्कृतमाश्रित्य। स्वगतं।

प्रियपाणि पल्लवतलाभिमुद्रितः
सुदृशः स्तनः श्रमकणैः करम्बितः।
अनुयाति मङ्गलकुले प्रयोल्लस-
न्मदनाभिषेक मणिकुम्भडम्बरम् ॥ (२२)

सार। ता जाव अहं लअन्तरिदा होमि।

मल्लि। स्वगतं। हन्त ण सक्कुणोमि अज्जउत्तस्स हत्थ कमलादो त्थणं अवहरिदुं। कथञ्चिदपहरति।

सार। सविषादं। हन्त।

सकृदिव समर्प्य वाले मम हस्ते मदन धर्म्म तप्तस्य।

---

मञ्जरीं कथं नु भजसे कस्मात् मनुषे इत्यर्थः। तर्हि कण्टकितत्वेन स्पर्शविषयं तत् किमित्यत आह कदम्ब नवकुड्मलेति। शेषं स्पष्टम्। तथा च मन्मथार्पिते कदम्ब कुड्मले हारे ते पुलक मञ्जरीति भ्रम इत्यर्थः। समकठोरयोरिति स्तनविशेषणेनास्याः सुखसौभाग्य सम्पत्तिः सूचिता। तदुक्तं सामुद्रे यस्या स्तनौ समौ स्निग्धौ शिरारोम विवर्जितौ। हस्तिनासोरु जङ्घा च सा कन्या लभते सुखमिति। स्तनौ च सुदृढौ यस्याः पीनोन्नत युगौ समौ। सुमांसलौ च स्निग्धौ च सा सौभाग्यवती भवेत् इति च।

(२२) प्रिय पाणीति। करम्बितः खचितः करम्बः शबरः शारः संप्रक्त खचितः समा इति हलः। मङ्गलः मङ्गलार्थः यो विशेषयः स्वर्णकलितः फणी तेन उल्लसन् यो मणिकुम्भः तस्य डम्बरं आडम्बरम् मित्यर्थः।

अपहरसे कुचकुम्भं त्वयि त कराद्मृत कुम्भमिव ॥

मल्लि । स्वगतं । हत्थि अज्जउत्तस्स करकमलाद्दो ओसरन्तीए मह पुणोवि दुव्विसहा जोण्हा ।

मार । स्वगतं । भूयोऽपि साहसमुप न्यसामि । प्रकाशं । अयि ! प्रिये यद्येव मकरुणासि ।

उपरि पतति चण्डे चन्द्रिका श्वेत वह्नौ
मरुति किरति विष्वक् पुष्प धूली कुकूलम् ।
प्रविशतु मदनाग्निभ्रुष्ट शेषं वपुर्मे
परिचल दलि धूमं पल्लवाङ्गार तल्पम् ॥ (२२)

यावत् पर्य्यन्त भाजो लतायाः पल्लवे स्तल्पं कल्पयामि ।

निष्क्रान्तः ।

मल्लिका । भयं नाटयति ।

मार । स्वगतं । साहु आढत्तं महाभाएण । प्रकाशं । सहि ! निक्करुणे पेच्छ पेच्छ सअं एव्व किसलएहिं तप्पं कप्पिजण पविसइ महाभाओ ।

मल्लिका । ससम्भ्रमसुत्थाय । अज्जउत्त ! मा मा साहसं

---

(२२) उपरीति चन्द्रिकैव श्वेतवह्निः शुक्लवर्णोऽग्निः प्रसिद्धोऽग्निः रक्तः अयन्तु श्वेत इति इयानेव भेद इति भावः । तस्मिन् उपरि पतति सति मरुति वायौ पुष्पधूल्येव कुकूल तुषानलः तं विष्वक् किरति सति मदनाग्नि भ्रुष्टात् शेषं मे वपुः कर्त्तृ, परिचलन्तः अलयो भ्रमरा एव धूमाः यस्मिन् तत् तथोक्तं पल्लवा एव अङ्गाराः तेषां तल्पं शयनं कर्म प्रविशतु । प्रपूर्वात् विशधातोः कर्त्तरि परस्मैपदात् प्रार्थनायां विध्यर्थे वा लोट् ।

अणुचिट्‌ठ। सशाध्वं। हन्त पविट्ठो ऐब्ब ता अहं वि तं एव्व पल्लव तप्पं पविसामि।

सार। विहस्य स्वगतं। तं एव्व पत्थीअदि।

मल्लिका। सत्वरं निष्क्रान्ता।

सार। विलोक्य। सस्मितं। हन्त! सअं एव्व परिरद्धो मुद्धाए वल्लहो ता अहं वि असस्सिं लआमूले चिट्ठामि। तथा कृत्वा सवितर्कम्। अज्ज ण जाणिदो कलअण्ठादीणं वुत्तन्दो। कर्णं दत्त्वा। पदसद्दोविअ।

ततः प्रविशति भ्रमरक द्वितीयः कलकण्ठः।

अवगुण्ठिताश्च रमयन्तिका नवमालिका कालिन्दी मधुकरिकाः

कलकण्ठः। भ्रमरक! कथमाश्रमे न दृष्टो मल्लिका सखो वयस्यः।

भ्रमरकः। णाह! अअउदो अस्समेसु दिट्ठव्वं।

कल। भवत्वेषु चन्द्रिकावतारसुभगेषु लतामूलेष्वन्वेषामः।

सर्व्वाः। अदिहि णाम उअसु आम्ह पिअसहीए मल्लिआए दंसणाअ।

नवमा। सहीओ सह पंसुकीलणादो आरहिअ एत्तिअं समयं पिअसहीए अमुक्कवासा अज्जव्व अहं अदंसण दुक्खं जाणामि।

सार। विलोक्य सहर्षं। हन्त मद् चिन्तअं तीअं एव्व आअदा एदे।

कल। विलोक्य सहर्षं। इयं सारसिका।

सर्व्वाः। सहर्षं। अम्म हि सारसिआ।

सार। निर्वर्ण्य सानन्दं।

रमअन्तिआवि एसा। उपसृत्य। महाभाअ! दिट्ठिअ वड्ढसि पिअदमा लाहेण। रमयन्तिकां प्रति। सहि दिट्ठिअ लहासि।

रम। सहि। सारसिए! कहिंणु मल्लिआ।

इतराः। तुरअ तुरअं भण।

सार। सस्नेहं प्रदर्श्य। एत्थ लआ पदेसे अन्तब्ब कहं वि मारुएण णं सङ्गमिअ इह आअदह्मि।

नवमा। सहर्षं सस्मितञ्च। कालिन्दि! लज्जावइ खामी पिअसही णाम गब्भेहिं वअणेहिं।

काल। पुरतो दृष्ट्वा ससम्भ्रमं। अहो! सर्वतः संक्षुभित इवायं प्रदेशः। पुनर्विलोक्य। सारसिके! पश्य पश्य

निरन्धद्भिध्वस्तं किरणमहिमानं हिमरुचः
प्रतिघ्नच्चक्षूंषि प्रकटित भयाश्चर्य्य मभितः।
तमो वा तेजो वा तदुभय परिप्रक्तिरथवा
किमप्येतत्तत्वं तिरयति जगद्दीपयति च॥(२४)

सर्व्वाः। सभय विस्मयं पश्यन्ति।

नेपथ्ये। हा प्रिये! मल्लिके!

---

(२४) निरुन्धदिति। अथवा तदुभय परिप्रक्तिः तदुभययोः तमस्तेजसोः परिप्रक्तिः सम्पृक्तिः सम्मिलितोभय स्फुरणं वेत्यर्थः। किमपि अनिर्व्वचनीयं एतत् दृश्यमानं वस्तु। जगत् कर्म्म तत्त्वं सत्यत्वेन तिरयति च्छादयति दीपयति प्रकाशयति चेत्यन्वयः।

कल । साशङ्कं सविषादञ्च । हन्त वयस्यस्याय मार्त्त-आक्रन्दः ।

सर्व्वा अशनि ताडिता इव भवन्ति ।

कलकण्ठः । सत्वरमुपसर्पति ।

ततः प्रविशति सवाष्पवदनो मारुतः ।

मारुतः । हा ! प्रिये ! क्वापगतासि

स्फुरति कथयेवात्मा चेतो निमग्नमिवानले

भवति च वपुः क्ष्वेड़ग्रासादिवाधिक विह्वलं

अयि हतविधे ! प्रापय्य प्राक् तथा पद मुच्चकैः

अकरुण कथमन्धे कूपे निपातयसेऽद्य मां ॥

कल । उपसृत्य । सखे किमासीन्मल्लिकायाः ।

सर्व्वाः । उपसृत्य । महाभाग ! किं णु पियसहीए

मारु । विलोक्य सवाष्पानिमाः । स्वगतं । हन्त आगता एतेऽपि । प्रकाशं । हा सखे ! व्यर्थस्ते परिश्रमः । हा सख्यः ! मुषितं वो जीवितम् ।

कलकण्ठः । सखे ! कथमव्यक्त कथनेन खेदयसि । ननु पृच्छ्यते किमासीन्मल्लिकाया इति ।

सर्व्व । महाभाग ! णं दाणिं एव्व तुमं पल्लव तप्पिं संपत्ता ।

मारु । तर्हि श्रूयतां श्रवणपरुषं

अव्याज रम्य मधुर ग्रह लोलुपोऽहं

व्रीड़ानतं वदनमुन्नमयामि यावत् ।

तावत् कुरङ्गमिव कातरकातरे ते

नेत्रे निमीलितवती बत हा हतोऽस्मि। इति पतति

कल। छत्वा। सखे! यदि मूर्च्छिता तर्ह्येहि शिशिरै

राश्वासयामः।

सर्व्वाः। सवाष्पं। झत्ति आसा सेह्म पिअसही।

सार। कृत्वा। महाभाग! कहिअं मह कसे पुढ़

एव्व भअवदीए। मल्लिआ पुढ़म सङ्घये मुच्छिआ भवि

दित्ति। ता आसा सेह्म।

मारु। अन्यदपि दारुणं श्रावयिष्यामि।

कल। साशङ्कं। किमिव।

मारु। अथ तस्मिन् क्षणे।

तां पैतुषीं लुलित विह्वल गात्रमङ्के
हा हा किमेतदिति यावदहं बिभर्म्मि।
ताव द्विमोह करणं मम नैव जाने
भूतेन केनचिदपह्रियतेस्म बाला॥ (२५)।

इति मोहं नाटयति।

कल। सवाष्पं धारयन्। हन्त! तत् प्रयुक्त एव प्राग्

दृष्टः संक्षोभोऽपि।

नव। हा पिअसहि मल्लिए! देहि मे वअणं। इति

च्छिन्नपातं। (२६) पतति।

---

(२५) करणं इन्द्रियवर्गमित्यर्थः।

(२६) छिन्नं पातं पतति। छिन्नवत् पततीत्यर्थः। उपमाने

कर्मणि चेति णमुल्। कषादिष्विति पततेरनुप्रयोगः।

इति श्रीमल्लिकामारुतव्याख्याने परिमलाख्याने अष्टमोऽङ्कः।

कालिन्दी। हा हदअदेव्व! सअं एव्व वड्ढिदा लदा कहं णु फल समए लूणा। इति नवमालिकां धारयति।

रम। हा मन्दभाइणीए मह माअ मेणच्चिअ एसो अणत्थो। हा सहि मल्लिए! मम्भि ण एहि। इति पतति।

मधुरिका। हा स्वहिणो किअन्तेण मल्लिआ मुहेण सव्वोवि बन्धुवग्गो मारअोच। इति धारयति।

स्रम। हा सामिणि! कहिं णु अणाहं दासवग्गं उवक्खिअ गआसि।

मारु। संज्ञां लभते।

सार। नातिशोकं। स्वगतम्। मखे अहं एसो जो अविज्जा पहावो भअवदीएत्ति। प्रकाशं महामाअ! णादि संभमो कादव्वो भअवदिं दट्टूण सव्वं कप्पइ स्सामो।

कल। युक्तमाह सारसिका। तद्गच्छामो भगवतीमन्वेष्टुं।

मारु। सत्राष्यं। यद्भवद्भ्यो रोचते।

इति निष्क्रान्ताः सर्व्वे।

इति अष्टमोऽङ्कः।

---

## अथ नवमोऽङ्कः।

ततः प्रविशति सारसिका।

सार। सोच्छ्वासम्। दिट्ठिआ जोअ विज्जा पहावदो परोक्ख वोह सत्ताए (१) भअवदीए। जम्मन्दरे कुविदक्क महेसिणो सा वो वट्ठिअ मुच्छा मुसिअ करणा मलिआ झत्ति कच्चोदरं णीदा। तहिच्चिअ णिरिकाम च्छोप्प मादा सादिअ सोमन्तमणि फल मत्त णिहुणिअ मोहा अहरेणेव्व समएण पुणो पच्चाणीदाअ। सानुतापं। मारुओ उण ताणि ताणि मङ्गलेदराणि आसङ्कमाणो मए उण बहुसो णिवारिदो मणि जड़तड़ेसु कलअण्ठ दुईओ सोअ-पज्जा उलो पवि हिण्डइ। णोमालिआमुहो सव्वो अणोत्ति देसु एव्व पदेसेसु। सोच्छ्वासं। इदो वरं ताणंवि मुहुत्त परिमिदं एव्व वसणं। जदो भअवदो एहिं कच्चो-

---

अथ नवमोऽङ्कः।

(१)योगविद्याप्रभावतः योगविद्यायाः ज्योतिष्मत्याख्य मनः प्रवृत्त्या-लोकविन्यासरूपायाः प्रभावतः परोक्षबधे अप्रत्यक्षस्य विज्ञाने शक्त्या सामर्थ्यं युक्तयेत्यर्थः। तदुक्तं योगपातञ्जले प्रवृत्त्यालोक न्यासात् सूक्ष्म व्यवहित विप्रकृष्ट ज्ञानं इति। केचित् तु योगविद्यायाः प्रतिभाख्यायाः प्रभावतः इत्यर्थः प्रतिभाद्वा सर्वमिति सूत्रादित्याहुः। अन्ये तु योग-विद्यायाः धर्मलक्षणावस्थाख्य परिणामत्रये एकविषयक ध्यान धारणा समाधि लक्षणक संयम रूपायाः प्रभावतः परोक्षो यो बोधः तस्मिन् अतीतानागतज्ञाने इत्यर्थः। यदुक्तं सू० परिणाम त्रय संयमादतीताना-गतज्ञानमिति प्रेतुः।

उरादो आअच्छन्ती एव्व एत्थ असमे मम्मुहादो मादअस्स असाणं अ वसणं सुणिअ तेणव्व जोअविज्जा पहावेण मणि जड़ं एव्व मल्लिअं णोदवदो। अहं वि अवव सोअ-विह्वलं अम्मच्चवीसवसुकुडुम्बं आसासेमि। नभो विलोक्य। हु पवुट्टो एव्व तमालजाल णिणिद्ध जलहर परिणाह कवलिअं वराऽभो अ दंसणमेत्त बिहड़न्त विरहि जणा उसो वरिसो ता मुहुत्तपरिमिदं वि मादअस्स महन्तं वसणं सङ्केमि। इति निष्क्रान्ता। प्रवेशकः।

ततः प्रविशति मारुतः कलंकराठश्च।

काल। सकरुणं।

नैवोपायान् गणयति तथाऽगोचरे विक्रमाणां
वैलोक्ये ऽस्मिन्नह नियमादेधमाने विधातुः।
क्रूरातङ्कक्रकचविदलद्धैर्य्यसारा वतामो
संसीदन्तो व्यसनदहने कूलपातं पताम: ॥ (२) ॥

मारु। सकरुणं निश्वस्य। हा प्रिये ! कामवस्थां प्रपन्नासि।

तन्वङ्गि ! दर्शय तदङ्गज सार्व्वभौम
माङ्गल्यदाममधुरं वदनेन्दुविम्बम्।
किं नेच्छसे महति सन्तमसे पतन्तं
अन्धं भविष्णु सकलेन्द्रियमात्मदासम् ॥ (३) ॥

---

(२) कूलपातं पतामः कूलवत् पताम इत्यर्थः। तटवत् अघातपतनाः स्म इति भावः।

(३) तन्वङ्गीति। अङ्गजसार्वभौमस्य मन्मथ चक्रवर्त्तिनः माङ्गल्यं मङ्गलप्रदं यत् दाम तेन मधुरं मनोहरं स्पष्टमर्थंत्।

कलः । हन्त ! भगवत्यपि न ज्ञायते क्व गतेति ।

ईषत् सोच्छ्वासं । अथवा

परमवलम्बोऽस्माकं भगवत्यन्वेष्टुमगमदित्याशा ।
पततामगाधकूपे पारे रूढ़ेव तृणवल्ली ॥ (४)

मारुतः ।

हा मज्जीवितमल्लिके ! क्व नु गतं दासे मयि प्रेम तत्
त्यक्त्वा मामशरण्यमार्त्तमदये क्व त्वं गतासि स्वयम् ।
पृच्छ त्वं कलकण्ठमुद्भ्रमति मे चेतो धृतिर्ध्वंसते
चूड़ायामयमञ्जलिर्मधुरया वाचा सकृत् संलप ॥

सबाष्पातिशयं । कथमद्यस्थितैव गतासि ।

स्मरामि तव तत् प्रिये ! जघनभारमन्दं गतं
सखीव वचनकाकुभि (५) स्तदपि सस्मितं व्रीड़ितं ।
चलाचलकनीनिकातरलनोत्तरङ्गं च तद्
विलासभ्रमन्थरं वलितकन्धरं वीक्षितं ॥ (६) ॥

---

(४) काञ्चित् युक्तिमाह । अथवेति । अथवा अगाधः अतलस्पर्शः यः कूपः तस्मिन् पततां न्रृणां पारे कूपतीरे रूढ़ा तृणवल्ली वेत्युपमा अस्माकं परं केवलं अवलम्बः आश्रयभूता भगवती मन्दाकिनी मल्लिकामिति शेषः । मल्लिकामन्वेष्टुमगमत् इति आशा अस्तीति भावः ।

(५) सखीवचनानां काकुभिः पारिहासिक स्वरविकारैः सस्मितं तत् प्राकृदृष्टं व्रीडितमपि स्मरामीत्यन्वयः ।

(६) चलाचलायाः कनीनिकायाः तरलनेन उत्तरङ्गं उद्गततरङ्गं अतएव विलासानां तात्कालिक स्वकीय विशेषाणामित्यर्थः । तात्कालिको विकारः स्याद्विलासो दयितेक्षणे इत्युक्तेः । शतेन (संख्याबाहुल्ये

कन्द। स्वगतं। इन्त केनोपायेन वयस्यं माश्वासयामि।

मारुतः। सकरुणाक्रन्दं।

हा शृङ्गार रसाधिराज! करुणो जातोऽसि हास्योऽथवा
हा कन्दर्प! हतो मदस्तव धनुः सन्यस्य गच्छाटवीम्।
हा भ्रूचक्र! परिष्कृतिस्तव गताद्या मत्यशेषा यया
हा विश्वस्य विलोचनानि मुषितं तदस्तपस्या फलम्॥ (७)॥

---

इदमुपलक्षणं) मन्थरं मन्दसञ्चारं बहुविध विलास पूर्णमित्यर्थः। तदसमन्थरमुग्धमन्दस्निग्धाद्यनेक नामास्पदमिति भावः। प्रतिपादितश्च तारका व्यापार भूतानां अनेकप्रकारविलासानां सम्भवेन अपाङ्गे यस्य दृष्टिपातानां अष्टधा स्थायिजा दृष्टिः विंशतिर्व्यभिचारिणाम्। कान्ता-हास्येत्यादि भेदाद्रस दृष्टिस्तथाष्टधा। इत्युक्त दृष्टयो लोकदृष्टिमार्गमुपा-गताः। षट्त्रिंशत् किन्त्वनन्ताः स्युः ताराभ्रू पुटक कर्मणा सन्दिर्भाह्न(?)स्व-वाच्ये ताः प्रत्येकं बहुमतया इति। वलिता कन्धरा यस्मिन् तत् तथोक्तं वीक्षितं शृङ्गारदृष्टिपातश्च स्मरामीत्यन्वयः।

(७) हा इति। हा शब्दः खेदे। खेदप्रकारमाह। शृङ्गार-नामक रसाधिराज रसश्रेष्ठ!। सर्वरसमूलत्वात् श्रेष्ठत्वोक्तिः। यदाह प्रकाशकारः। शृङ्गारं एक एव रस इति सर्वरसानां शृङ्गारमूलत्व प्रति-पादन प्रपञ्चस्तु। तज्जन्यत्वेन हास्यः इत्यादिनात्मत्र रसायणादौ द्रष्टव्यः। करुणः करुणरसः शोकपरिपोष इति यावत्। जातोऽसि प्रियाया हत-त्वाभिप्रायेण करुणो जातोऽसीत्युक्तिः। औचित्येन परिपूर्णो मोमसेव-नादि विभावैः मधुराङ्ग विचेष्टिताद्यनुभावैः हर्षादि व्यभिचारिभिश्च भग्नावरण चिद्विशिष्टो यो रति भावस्तथा भूतस्य तव। व्यसनेष्टनाशादि विभावैः निश्वासोच्छ्वासरुदितादिभिरनुभावैः मोह दैन्यविषादादि व्यभिचारिभिश्च भग्नावरण चिद्विशिष्ट स्थायि शोकत्वेन परिणामात् इति भावः। तथाच रतेः साङ्कर्य्येऽपि स्थायि शोकादसाधारणात् कारणात्

निश्वस्य। अयि! दयित मारुते मल्लिके कुतो माम-काण्ड एव परित्यज्यसि कमपराधं पश्यसि। विचार्य।

भवतु ज्ञातं।

अव्याज विभ्रममयैरनवद्य हृद्यै-
रम्लानचम्पकविलासधरैर्यदङ्गैः।

करुणरसत्वेन भिन्नोऽसीति निष्कृष्टोऽभिप्रायः। अथवा पक्षान्तरे हास्यः हास्यरसः स्वनिष्ठो हासपरिपोष इति यावत्। यत्नुभिः स्वयमपहास्य इत्यतः ताम् सम्बरकादीन् प्रति परनिष्ठहासपरिपोष इति वा जातोऽसि इति। काकाक्षिगोलकन्यायेन अत्रान्वयः। अङ्ग वैकृत्यादि विभावैः विकृत वाक्याद्यनुभावैः आलस्यासूयादि व्यभिचारिभिश्च सम्भावरस्य-र्चिह्नविशिष्ट स्थायिहासत्वेन परिणामादिति भावः। (कथमङ्ग स्थितैश्च गताधीयुक्त्या स्वनिष्ठ स्मितं गम्यते) अत्र च रतेः वाङ्मयेऽपि स्थायि हासा दसाधारणात् कारणात् हास्य रसत्वेन भिन्नोऽसीति निष्कृष्टोऽभिप्रायः। हा! कन्दर्प! मन्मथ! तव यद्यः मल्लिका-वलम्बा त्रिलोक विजयित्वजो मोहानन्द सम्भेदः हृतः नाशितः अव-लम्बनाभावादिति भावः। धनुः कर्म्म सन्यस्य सन्यज्य अटवीं गच्छ पलायस्व। यतां माने म्लाने मरण अथवा दूरसरण मिति न्यायात् अधुना तव निर्जन प्रदेशपलायन मेव श्रेय इति भावः। हा भूचक्र! भूमण्डल! तव परिष्कृतिः अलङ्कृतिः गता नष्टा। यया परि-ष्कृत्या अलङ्कारभूतया मल्लिकयेति यावत् द्यां स्वर्गं अत्यशेथाः अत्यक्रामः अतिशयित वद्भूरिति यावत्। स्वर्गस्यापि मल्लिका सदृश सुन्दराङ्ग नालङ्कृतत्वा भावादिति भावः। सा परिष्कृतिरिति पूर्वेण सम्बन्धः। हा विश्वस्य लोकस्य जनस्येति यावत्। विलोचनानि इति सम्बोधनम्। वः तत् अनिर्वचनीयं तपस्याफलं युष्मदीया परिमितैकी भूत सत्-कर्म्म परिपाकः मल्लिका प्रेक्षकत्व रूपः इति यावत्। मुषितं अपहृतं तस्याः प्रणाशादिति भावः। यद्वा तपस्या फलं तपस्या फल भूता मल्लिका इत्यर्थः।

मन्मूलमङ्गजरुजा (८) चिरमन्वभावि
मन्ये मनस्विनि ततस्त्वममर्षितासि ॥

सोपालम्भम् । यद्येवं किं न जानासि त्वद्दर्शनतः प्रभृति अनितर साधारणीमवस्थाम् ।

मत्वालापं तव पिकवधूकूजिते मून्मना ये (९)
नेत्रच्छाया प्रणयिषु रमे (१०) दीर्घिकेन्दीवरेषु-
प्रत्युद्गच्छास्युपवनतले सञ्चितां त्वां विशङ्क्य
प्रत्यग्रोद्यत् कुसुमकलिकां बालमन्दारवल्लीम् ॥

अपिच ।

त्वद्वीचासु निमेष कर्म्म मनुते दृष्टिर्दृढ़ामर्गलां
तन्नामाक्षरमेव वक्ति रसना वाक्यान्तरे प्रस्तुता ।
त्वत्संकल्प समागमेष्वपि घनोत्तुङ्ग स्तनालिङ्गने
वचो मे व्यवधानदान परुषान् हारानपि ध्यायति ॥(११)

---

(८) अव्याजेति उक्त विशेषण विशिष्टैः अङ्गैः यत् यस्मात् कारणात् अङ्गजरुजा मन्मथ व्याधिः चिरं मन्मूलं मन्निमित्तं अन्वभावि अनुभूता। हे मनस्विनि ! प्रशस्त मानसे ततः चिरतर मन्निमित्तक मन्मथ व्याध्यनु भवाद्धेतो स्त्वं अमर्षितासि कुपितासि इति मन्ये । अन्यथा प्रशस्त मनस्कत्वान्नैवं कुप्येरिति भावः ।

(९) उन्मना ये । अनुत्सुकः उत्सुको भवामीत्यर्थः । उत्क उन्मना इत्यमरः । अभूततद्भावविषयात् उन्मनः शब्दात् भवत्यर्थे भृशादित्वात् क्यङ् सलोपश्च । सू । भृशादिभ्योभुव्यच्वेर्लोपश्च हल इति । ततोङित्वात् कर्त्तर्य्यात्मनेपदे लटि उत्तमैकवचनम् ।

(१०) रमे क्रीड़ामीत्यर्थः ।

(११) त्वद्वीचास्विति । दृष्टिः कर्त्री त्वद्वीचासु विषये निमेष-कर्म्म पक्ष्मपतनव्यापारं कर्म्म दृढ़ामर्गलां दृढ़ार्गलमिव प्रतिबन्धकत्वेन-

आकाशे। भगवति मन्दाकिनि! त्वमपि कथं न लक्ष्य-
यसि। अथवा अवगतमेव।

परमवसितां प्राणेनापि प्रियां वत मल्लिकां
स्वयमनुयती(१२)शोकावेगादपुष्यपि निस्पृहा।
नयनसलिलैः श्यात्कुर्व्वाणे ध्रुवं निजधारणा
बलसमुदिते भस्मीभूतासि योगहुताशने॥

कलकण्ठः। कष्टं भोः।

छिन्नाः पातालकुक्षौ किमु किमु निरये यन्त्रिताः किं प्रविष्टा
मृत्योरास्ये निमग्नाः किमु निविड़तमे वाड़वे धूमचक्रे।
विघ्नौ नो दुर्विभाव्ये तमसि निपतिताः क्वापि कर्त्तव्य मूढ़ाः
नद्याऽऽवर्त्तानु घूर्णत्तुटया कणिका निर्विशेषा भ्रमामः॥

---

त्यर्थः। मनुते वाक्यान्तरे प्रस्तुता रसना त्वन्नामाक्षरमेव वक्ति। त्वत्सङ्गल-समागमेष्वपि त्वया सह मनोरथो परिचितसम्भोगेष्वपीत्यर्थः। घनोत्तुङ्ग-स्तनालिङ्गने विषये मे वक्षः कर्त्तुं हारानपि व्यवधानदानेन हेतुना परुषान् क्रूरान् त्वदीयस्तनयोर्म्मदीय वक्षसस्र मध्यवर्त्तित्वेन आलि-ङ्गनविरोधित्वादिति भावः ध्यायति चिन्तयति। यदाहुरन्येऽपि रतिसमये रमणीनां भूषाहानिस्तु भूषणं भवति इति।

(१२) परमिति। प्राणेन परं केवलं अवसितामपि प्रियां प्रेमास्पदां मल्लिकां वतेति खेदे स्वयं अनुयती अनुसरन्ती सती शोका-वेगात् दुःखातिभूमि संरम्भात् वपुष्यपि निस्पृहा इच्छारहिता नयनसलिलैः श्यात् कुर्व्वाणे श्यात्कारकरे (श्यात्कारो वह्निनिर्वापण-शब्दः) निजा या धारणा नाभिचक्रादिषु देशेषु चित्तस्य वृत्तिमात्रेण बन्धरूपा। उक्तञ्च देशबन्धश्चित्तस्य धारणेति तस्याः बलेन सामर्थ्येन समानजयरूपेण समुदिते आविर्भूते। उक्तञ्च समानजयात् ज्वलनम् इति। योगहुताशने योगाग्नौ ध्रुवं सत्यतया भस्मीभूतासीत्यन्वयः।

माधवं प्रति। वयस्य! समाश्वासयात्मानम्। ननु श्रूयते
धैर्य्येण विपद स्तीर्य्यन्त इति।

माध। निःश्वस्य।

यामय्याऽऽविशति प्रवाल शयनं द्राक् दाहभीत्याकुला
मा मा साहसमार्य्यपुत्र! रचयेत्या मुग्धमाभाषिणी।
आलम्बिष्ट करेण कङ्कणजुषा चेलाञ्चले तादृशीं
प्रत्याख्याङ्गगतां रमामिव कथं धैर्य्यं धरेयं सखे!॥

अपिच। तस्मिन् मन्दारमूले

परपरिणये (१३)ज्ञाते प्राणाञ्जिहासु रशङ्कितं
प्रियसहचरी बुध्वा प्रेमाकुलं परिरभ्य माम्।
विलपितवती यद् यद्वाला सगद्गदिकाचरं
परिसरजुषा तत्तत् सर्वं त्वयापि सखे! श्रुतम्॥

आवेगं नाटयन्। हा:!

किमपि करणद्वाराण्यन्धन्तमः पिदधाति मे
भ्रमति हृदयं मोहाविष्टं विषीदति जीवितम्।
हहह! सहसा सर्व्वाङ्गीणः (१४) प्रसर्पति कश्चन
प्रलय शिखिना तुल्य स्तापः सखे! करवाणि किम्॥

---

(१३) परपरिणये इति। परेण परिणये विवाहे ज्ञाते सति
जिहासुः हातुमिच्छुः। षष्ठेऽङ्के अद्र जीविदणिव्विसेसे चोमा-
इत्यादिना सहि चोमालिए जाणेहि एदं पच्छिमं परिरम्भं
प्रकारो विलाप इति बोध्यम्।

(१४) सर्व्वाङ्गीणः सर्व्वाण्यङ्गानि व्याप्नुवन् इत्यर्थः। तत्
दिः पथ्यङ्गेत्यादिना खः।

कल । स्वगतं । हन्त न शक्नोमि वयस्य मन्यताचेष्टुम भवतु इदमेव प्रावृडारम्भ रामणीयकं दर्शयन्नोषहिनोद यामि । प्रकाशं । सखे ! ननु सर्व्वार्त्तिहरोऽयं समयः । पश्य

अमीभिराखण्डलचापमण्डिते-
स्तटिन्नटी ताण्डव रङ्ग मण्डपैः ।
निचोलितं व्योमसमीरणेरितै
स्तमालमाला मलिनैर्वलाहकैः ॥

वयस्य ! पश्य पश्य ।

अमी किमपि वासराः प्रसुवते मुदं देहिनां
विजृम्भि नवकन्दलीदलनिलीनपुष्पन्धयाः ।
पयोद मलिनी भवद्गगनदर्शन प्रोज्वलत्
कृषीवलविलासिनी नयन कान्तितापिञ्छिताः ॥(१५)॥

परितो दर्शयन् ।

इह गिरिकटकेषु प्रौढ़ जीमूत गर्ज्जा
स्फुटदलित विदूर चोणि चिलीयमाणाः ।

---

(१५) अमीति । नवकन्दलीनां पुष्पाणि नवकन्दल्यः पुष्पमूलेषु बहुलमिति लुप् । विजृम्भिण्यो या नवकन्दल्यः वर्षालक्षणतया भाविसस्यसम्पत्तिसूचकानि नूतनशिलीन्ध्रकुसुमानि । उक्तञ्च कालाब्दयोगादुदिताः शिलीन्ध्राः सम्पन्नसस्यां कलयन्ति पृथ्वीमिति । तासां दलेषु निलीनाः पुष्पन्धयाः भ्रमराः येषु ते तथोक्ताः । तापिञ्छाः कृताः तापिञ्छिताः तत् करोतीति णिजन्तात् कर्म्मणि क्तः । पयोदैः मलिनी भवतः गगनस्य दर्शने प्रोज्वलतां कृषीवलविलासिनी नयनानां कान्तिभिः तापिञ्छिताः तापिञ्छाः कृताः सर्व्वत्र तमालप्राया इव श्यामीभूता इत्यर्थः ।

प्रियसख ! तव दृश्योः प्रीति मुद्दामयन्तु
स्फुटित कुटज मालोद्गन्धयः काननान्ताः ॥(१६)॥

अथवा । बलादाकृष्टेऽपि स्वयमपि मनस्ते करिघटा
करास्फालातिस्यद् घनशकलकीर्णा गिरि भुवः ।
मदक्रीडत् केकिस्वन चकित वल्मीक निपतत्
फणिश्रेणी चूडामणि किरण किर्मीर ककुभः ॥(१७)॥

अपिच । आमूल कुड्मलित बालकदम्बजाल
व्यालोलनोद्गलित धूलि मिलद्द्विरेफम् ।
पौरस्त्य(१८)माकलित बर्हिण बर्हभारं
सेवस्व सर्वपरितापहरं समीरम् ॥

माध । परितो विलोक्य । सावेगं । वयस्य ! स एष दिङ्मू-ढस्य उन्मादावतारः। यत् प्रियाजन वियुक्तस्य प्रावृडारम्भः ।

---

(१६) प्रौढ़ाः याः जीमूतगर्जा स्ताभिः स्फुटं दलिताभिः विदूरक्षोणिभिः वैदूर्य्यरत्नस्थलीभिः चित्रीयमाणाः अद्भुतायमाना इत्यर्थः । स्फुटितकुटजानां विकस्वरगिरिमल्लिकाकुसुमानां मालाभिः पङ्क्तिभिः उद्गन्धयः अतिसुरभिता इत्यर्थः । काननान्ताः वनमध्य-प्रदेशाः ।

(१७) बलादिति । करि घटाया हस्तिसमूहस्य करास्फालैः सम्फूत्कार शुण्डोत्क्षेपावक्षेपैः स्यातिस्यन्त्यः समन्तादार्द्रीभवन्त्यः, तथा घनशकलैः खण्डशः सञ्चरद्भिर्मेघैः कीर्णाः व्याप्ताः मदेन क्रीड़तां केकिनां स्वनात् चकिताः अतएव वल्मीकात् निपतन्त्यः सफूत्कारमुत्-पतन्त्यः याः फणि श्रेण्यः तासां चूड़ामणिकिरणैः शिरोरत्नप्रभाभिः किर्मीराः चित्रवर्णाः ककुभो दिशः यासु ताः तथोक्ताः गिरिभुवः ते तवापि मनः कस्मै बलात् स्वयं अप्याकृष्टे आकर्षति वा इति प्रश्नः ।

(१८) पौरस्त्यं प्राच्यमित्यर्थः ।

जलदनिनदत्रस्यन्मुग्धाङ्गनास्वयमर्पित
स्तनतट परीरम्भ क्रीड़ा प्रहर्षुल कामुके ।
कुपित मदने काले केकाकुल प्रचलाकिनि
क्षणमपि कथं प्राणित्येष प्रिया विरहीजनः ॥ (१८) ॥

अपिच ।

एते प्रेङ्खोलयन्तो वियति घनघटो पान्तलोला बलाका
धाराम्भश्चूर्णयन्तः सकरक मभितश्चातको पीत शेषं ।
सञ्चेरन् पूर्ववाताः कथमिव पथिक प्रेयसी हस्त पाली
विन्यस्ता पाण्डुवक्त्राम्बुजगलितघनश्वासहस्तावलम्बाः(२०)॥

नभो विलोक्य । सकरुणं । हा प्रिये मल्लिके !

तद्दर्शयस्व तव काञ्चन कर्णिकार
कर्णे जपप्रभमतन्द्रितगात्रि ! गात्रं ।
एषा पुनस्तत इतो गगने स्फुरन्ती
सौदामिनी भवतु सम्प्रति लब्धलज्जा ॥ (२१) ॥

पुरतो विलोक्य ।

लम्बन्ते भ्रमराः कदम्बमुकुले । सोच्छ्वासं । हा मेचकाः कुन्तलाः ।

अन्यतो विलोक्य ।

संभावयन्ति चकोरकाः प्रतिवनं । सवाष्पं । हा मन्थरे लोचने

---

(१८) केकाकुलाः प्रचलाकिनो मयूराः यस्मिन् इति काल-विशेषणम् ।

(२०) प्रेङ्खो लयन्तः तरलयन्तः प्रेङ्खोलितं तरलितमिति कृवः ।

(२१) तदिति । काञ्चनकर्णिकाराणां कनकपरिव्याधकुसुमानां कर्णेजपाः पिशुनाः प्रभाः यस्य तत् तथोक्तम् ।

अन्यतो दृष्ट्वा।

विष्वक् फुल्लति मालती सुरभिला। सशोकं। हा मुग्धमन्दस्मित!

इतरतो विलोक्य।

श्यामं प्रावृषमिन्द्रगोप निवहैः। साक्रन्दं। हा ताम्रविम्बाधर!

(२२)इति मूर्च्छति।

कल। सकरुणं। किमेतत्। धिक् कृतान्त! कथमेकान्त निष्ठुरोऽसि। सवाष्पं। हा धिक्! कष्टं

किं वज्रसार शतधा न विशीर्णमासीत्
अद्यापि ते हृदय माः कठिनोत्थवाऽहम्।
पश्यन्नपि प्रियसखस्य तथैव वर्त्तं
यच्छोक मोह मुकुलन्नयनं मुखेन्दुम् ॥(२३)॥

हन्त। जलधरारम्भं वर्णयन्। हतकोऽहमेव कारणमस्मि। नभो विलोक्य।

जलधर जलधर मन्मथ मन्मथ पवमान पवमान।
सर्व्वान् वः प्रणतोऽहं प्रियसुहृदो जीवितं भिक्षा।

---

(२२) लम्बन्त इति। अत्र प्रावृड्लक्षणत्वेन सन्निहितानां भ्रमरचकोरादीनां उपमानवस्तुत्वेन तद्दर्शनात् क्रमेण तत्तदुपमेयभूतनायिका कुन्तललोचनादीनां स्मरणाविर्भाव इति बोध्यम्।

(२३) किमिति। हे वज्रसार! इति कृतान्तसम्बुद्धिः। ते हृदयं कर्तृ। अद्यापि शतधा विशीर्णम् किं कुतः नासीत्। आः इति सन्तापे। तच्च आत्मनि दोषमवगम्य परनिन्दकत्वं चिन्ताजन्यम्। कठिनः वज्रसारः अहमेव। एवकारान्नत्व मित्यर्थः। तत्र हेतुमाह। पश्यन्नपीति। उत्तरार्द्धः स्फुटार्थ एव। अत्र पूर्वार्द्धे कठिनोऽयमाहमिति क्वचित् पाठः।

मारु। प्रबुध्यते।

कलकण्ठः। सोच्छ्वासं।

एष मत्प्रार्थितोऽभ्येत्य मारुतो मारुतं शनैः।
ऐकशब्द्यादिव स्निह्यन् शीकरैः सम सोमुदीत् ॥(२४)

मारु। सोन्मादं।

कोऽयं देशः सुभगविपिनः सैषभूभृन्नितम्बः।
कोऽहं वाष्प प्रचुरवदनो नन्वहं मारुतोऽस्मि।
किं वाष्पं मे मनसि करुणा स्तायते कोविभावः
कस्मादेषोऽप्यहह मुषिता प्रेयसी मल्लिका मे ॥(२५)॥

---

(२४) एकः शब्दः ययो स्तौ तयोर्भावः ऐकशब्द्यं तस्मादेतो मारुताख्यासाम्यादित्यर्थः। स्निह्यन् प्रीणन्निव वेत्युत्प्रेक्षा।

(२५) कोऽयमिति। पूर्व्वार्द्धः स्फुटार्थ एव। मे मम वाष्पं कि कुतः इति प्रश्नः। मनसि करुणः करुणरसः तायते विस्तृतो भवतीत्युत्तरम्। करुणस्यानुभावत्वेन वाष्पोद्गम इति भावः। अस्येति शेषः। अस्य करुणस्य विभावः उद्दीपनविभावः कः। अस्य करुण प्रसरे उद्दीपनं कारणं किमित्यर्थः। एषः करुणोऽपि कस्मात् कि मालम्ब्य जात इत्यर्थः। करुणस्य आलम्बनविभावोऽपि क इत्यर्थः। तथाच करुणविस्तरकारणं उद्दीपनं किम्। तथा करुणोत्पत्तौ समवायिकारणं आलम्बनमपि किं इति प्रश्नद्वयम्। अहह इति खे प्रश्नतः स्मारितत्वसूचकमिदम्। मे मम प्रेयसी मल्लिका मुषिता अपहृता इति प्रश्नद्वयस्याप्युत्तरम्। अनेन प्रेयसी शोषः उद्दीपनम् प्रेयसी आलम्बनमित्युक्तम्। भर्त्ति। पूर्वार्द्धे। सैष भूभृन्नित इत्यत्र सः एषः इति पदच्छेदः। सन्धिस्तु सो चिलोमे चेत् पादपूरणे इति अनेन तच्छब्दप्रथमैकवचनान्तस्य सस्य लोपः। हल्लिरेचि दीर्घः इद्धिः।

कल। सावेगं। कथमुन्माद इव।

माध। यावदिह वनेऽन्वेषयामि। सत्वरमुत्थाय प्रचलति।

कल। सत्यं ग्रस्त एव माधवः उन्माद कालसर्पेण।
कठिन कलकण्ठ! किमद्यापि जीवसि।

माध। परितो दृष्ट्वा। हन्त सर्व्वतो रमणीयेषु कत-
मन्मार्गं प्रथममन्वेषयामि। हस्तेन दर्शयन्। एषु रक्तकदम्ब-
गुच्छलाञ्छनेषु न सम्भाव्यत एव।

अत्र क्वचित् गिरिनदीतट सैकतेन
बाला मरालललितं यदि सञ्चरेत।
श्रोणीभरालसचलोलपदक्रमोत्थं
श्रूयेत मञ्जुविरुतं मणिनूपुरस्य॥

कलकण्ठः। अहो अहो परां कोटिमारूढ़ उन्मादस्य।
यतस्तथाविधं तस्याः नाम विस्मृत्य अन्वेष्टुं प्रवर्त्तते।
भवतु अहमपि एतदेवानुवर्त्ते।

माध। कर्णं दत्त्वा। सहर्षम्। सखे! अप्रमत्तः सव्यतः
कर्णं प्रयच्छ।

इह नवकरिदानोद्गन्धि वीचीकुलस्य
द्रुमगहन निगूढ़े कूलभागे ह्रदस्य।
नखनिहतविपञ्ची पञ्चमस्वान मुग्धां
गिरमविशदवर्णां स्निग्ध कण्ठ्याः शृणोमि॥

सोपालम्भम्।

अस्यानुपेक्ष्य घनदारुणशोकदीनान्
मुक्त्वा सखीरपि सवाष्पकृतप्रलापाः।

पद्भ्यां कुशेशयदलादपि कोमलाभ्याम्
मुग्धा कथं चरति शैलतटे मृगीव ॥

कल । स्वगतम् । हन्त कोकिलास्वरेण भ्रमति वयस्यः ।
प्रकाशम् । नहि नहि मल्लिका संलपति । एषा तु ।

पचेलिम जम्बूफलखण्डप्रहृष्टाया: कूजा
कोकिलवध्वा: न सखे ! सख्या: स्वर: सहि स्निग्ध: ।

मारु । सविषादम् । किं पिकवधूकूजितमेतत् । पुन:
कर्णं दत्त्वा । हन्त स्फुटेऽपि वैसादृश्ये भ्राम्यतो ।

मम कर्णौ दृषदामपि दर्शित द्रवत्वात्
प्रतिवर्णं चरितामृता स्रव: सु ।
स्वरसं पदनिन्दिता सुकण्ठ्या:
कथमेवं परुषा मम प्रियाया: ॥

सनि:श्वासम् । कस्य मुखात् प्रियतमाप्रवृत्तिमुपलप्स्ये । दृष्ट्वा
सकौतुकम् । एष:

परिवृत्तिलोभनीयप्रचलद्बालतरङ्गमालभारी । (२६) ॥
अमरकाननदेवतावगाहै: परिपूत: पुरतो ह्रद स्वकास्ति ॥

यावदेनं पृच्छामि । उपसृत्य ।

(२७) ह्रद ! हृदयहरे ते निम्नताभीह्रदास्मिन्
पयसि सहचरी मे स्नातुकामाऽवतीर्णा ।

---

(२६) परिवृत्तीति । परिवृत्त्या भ्रमणेन लोभनीया: तथा प्रचलन्त्यश्च या: बालतरङ्गमाला ऊर्म्मिलेशपंक्तय: ता: बिभर्त्तीति तथोक्त: । मालाशब्दस्य दृष्टकादित्वात् तदन्तस्य चेति ह्रस्व: ।

(२७) ह्रदेति । हे ह्रद ! हृदय हरे मनोहरे ते तव

अपि चटुलमृगाक्ष्याश्चक्षुषोश्चातुरीभिः
प्रतिलहरिवितीर्णाः काश्चिदन्याश्च शय्याः ॥

कथं प्रदत्तोत्तरस्तूष्णीं तिष्ठति। मन्ये स्नातुमवतीर्णैव अगाधे पयसि मग्नेत्यप्रियावेदनाद्विरमति। विलोक्य। सावेगम्। वयस्य! महान् प्रमादः। सत्यं मग्नैव पयसि प्रेयसी। बोधयति चास्मान्।

इयं सा विच्छिन्ना वियति धवला हारलतिका
पुरा मालां लब्ध्वा कुवलयदृशो यामहमदाम्।
यया प्राप्तं तन्व्याः किमपि मदनज्ञानलरुजा
विपाण्डुप्रोत्तुङ्गस्तनकलशदोलायितसुखम् ॥

पुनर्विलोक्य। सवयस्यम्। वयस्य! न सा मग्ना इदानीं तु मज्जति।

एतत्तदिन्दुपरिपन्थि महेन्द्रनील
सौन्दर्य्यचौर्य्यचतुरैरलकैः सनाथम्।
आकण्ठमग्नवपुषो हरिणेक्षणाया
हा हन्त पश्य मुखमम्बुनि कम्पमानम् ॥

---

अस्मिन् पयसि निम्ननाभीहृदा मे सहचरी स्नातुकामा अवतीर्णा इति प्रश्नार्थकः। काकुः। चटुलमृगाक्ष्या चक्षुषोश्चातुरीभिः प्रतिलहरि अन्याः अन्यादृश्यः काश्चित् शय्याश्च रीति विशेषाश्चेत्यर्थः। तरङ्गिताक्ष्या इति भावः। तरङ्गितलक्षणन्तु कल्लोल इव यः कान्तिविच्छेदस्तत्-तरङ्गितं इति। अपि वितीर्णाः दत्तावा इति प्रश्नः अथवा। स्नातु-कामा अवतीर्णा अवततार इत्यर्थः। तत्र युक्तिमाह। अपि किञ्चे-त्यर्थः। प्रति लहरि अन्याः काश्चित् शय्याश्च दत्ताः। यद्वा शय्या अपि दत्ताश्च इति योजना। प्रथमान्वये सन्देहपूर्व्वकः प्रश्नः उत्तरस्तु निर्द्धारपूर्व्वकः प्रश्न इति भेदः।

उर्व्वैः प्रिये ! मा भैषीः । अयमहं मुद्राभिं ।

कल । स्वगतं । हन्त सर्व्वत्र सदृश वस्तुषु भ्रमति वयस्यः

प्रकाशं । सखे ! ननु चन्तुस्ते कर्णपथमवगाहते ।

मारु । क्रमिषोऽपि भ्रम एव । निर्वर्ण्य । सविषादं ।

एष व्योमनि मानसं जिगमिषुर्हंसालि रुड्डीयते
चञ्च्वग्रैश्चरणैश्च विद्रुम सखैः क्षिप्ता न मुक्तावलिः ।
एतच्चाम्बुनि वीचि वेगतरलं कूजद्भिरिन्दिन्दिरै
र्नालीकं न पुनर्घनालक कुलं वक्त्रं चकोरी दृशः ॥(२८)॥

---

(२८) एष इति । व्योमनि एषः हारलतिकात्वेन पुरो दृश्यमानः । विद्रुमसखैः चञ्च्वग्रैः चरणैश्च हेतुभिः । हंसालिः हंसपङ्क्तिः अन्यथा लोहितचञ्च्वग्रचरणाभावादिति भावः । स इति कर्त्ता गम्यमानत्वादप्रयोगः । मानसं सरो विशेषं जिगमिषुः गन्तुमिच्छुः सन् उड्डीयते उद्गच्छति । क्षिप्ता विक्षिप्ता मुक्तावलिः न । अम्बुनि जले एतत् अलकसनाथ कम्पमानमुखत्वेन दृश्यमानं च । कूजद्भिः शब्दं कुर्व्वद्भिः इन्दिन्दिरैः भ्रमरैः हेतुभिः वीचिवेगतरलं नालीकं सरोरुहम् । अलकसनाथ मुखत्वे शब्दाभावादिति भावः । सरोरुहत्वे कम्पमानत्वे को हेतुरित्यत्रोक्तम् । वीचिवेग तरलमिति । घनं सान्द्रं अलककुलं यस्मिन् यस्य वा तत् तथोक्तम् । चकोरीदृशः वक्त्रं पुनर्न । अत्र तत्व कथनद्वारा हारत्वेन मुखत्वेन च भ्रान्त्यो र्निवारणात् भ्रान्तापह्नुती तयोश्च लोहितचञ्च्वग्रचरणैः कूजद्भिरिन्दिन्दिरैरिति युक्तिपूर्व्वकत्वात् । हेत्वपह्नुतिभेदावलङ्कारौ । लक्षणन्तु । भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे इति । स एव युक्तिपूर्व्वश्चेदुच्यते हेत्वपह्नुतिरिति च । हेत्वपह्नुतिद्वयभेदयोश्च परस्परनैरपेक्ष्यात् संसृष्टिः । हेत्वपह्नुतिभेदत्वोक्तिस्तु । सएव युक्तिपूर्व्वे

तदन्यतः पश्य । परिक्रम्य । सहर्षं ।

प्रथमजलधरधारा सेकोच्छ्वसित सुरभिकटकस्थला-
लङ्कारस्य तमालतरोः ।

मदमुकुलितापाङ्गे विभ्रद्दृशौ मधु पिङ्गले
परिसर झरीझात्कारेषु क्षणं निभृत श्रुतिः ।
धवल पृथुले दन्ते शुण्डा लतां विनिवेशयन्
गिरिरिव गिरिं रुन्धन् गन्धद्विपोऽयमुदीक्षते ॥

यावदेनं पृच्छामि । उपसृत्य ।

करिपते ! कथय क्व मम प्रिया
यदि दृष्टा स्तव मार्गमुपागता ।
गिरितटीषु झरीषु वनीषु वा
कुररिकेव वतार्त्त विलापिनी ॥

सहर्षं । एष क्षणं स्तम्भितः शृणोति सादरं मे वाचः । परितस्ताण्डवित नीलकण्ठ षण्डेन स्तनितगम्भीरेण गर्जितेन प्रति वक्ति च । सविस्मयं । गजराज ! किमात्थ कानि तस्या लक्षणानीति । तर्हि श्रूयताम् ।

त्वत् कुम्भोपम विभ्रमः कुचभरस्त्वद्दानखिन्नं गतं
त्वच्छुण्डासम मूरु काण्ड मपि तु स्पृष्टं न कार्कश्यतः ।
शाणोल्लीढ़ सुवर्णदर्पणतलस्वच्छे कपोले सखे !
त्वद्दन्त प्रथम प्ररोह धवला जागर्त्ति काचिच्छविः ॥

निर्वर्ण्य । सविषादं । कथं मुकुलितनयनं उदास्ते ममा-

---

दिति वचनेन युक्तिपूर्विका मुद्रापह्नुतिः हेत्वपह्नुतिरिति गम्यमानत्वात् । प्रकृते भ्रान्त्यापह्नुत्योर्युक्तिपूर्वकत्वान्न इत्यवगन्तव्यम् ।

र्थितम्। हन्त तदेतद् गज निमीलितं नाम। सनिर्वेदं।
अहो दुर्ललितः खलजनः।

प्रणयवचनमर्थिभिः प्रयुक्तं
यदयमहो न शृणोति दुर्मदान्धः।
अथ कथमपि चेत् करोति कर्णौ
नयननिमीलितमुत्तरं विधत्ते ॥

तदन्य मभ्यर्थये। पदान्तरे स्थित्वा। एष प्रकट दृष्टापराधः प्रणय कोपदुरुपसर्पां प्रेयसी मनुवर्त्तते मतङ्गज तरुणः। सविस्मितं। इयं खलु।

आनत्ते प्रणयार्पितानपि मुहुर्मा सल्लकी पल्लवान्
कुम्भस्पर्श परं निरस्यति करं धूत् कुर्वती शुण्डया।
प्रत्याख्याति पराङ्मुखो नयनयो र्हस्ताग्र कण्डूयनं
पत्यु र्नानुनयं प्रतीच्छति वशा मानस्य याता वशम् ॥(२८)

अतो नोचितमत्र प्रार्थन कदर्थनं। अन्यतो दृष्ट्वा। एतत् पारिप्लव नयन प्रभेन्दीवरित हरिन्मुखं हरिणी वृन्दं इतः प्रतिष्ठते। तदस्मिन्नन्यतमां हरिणीं प्रक्ष्यामि। स्त्रियः खलु स्त्रीवृत्तान्त परिज्ञाने सविशेष माग्रहिण्यः।

विलोक्य। कथं प्रचलत्यपि यूथे मत्प्रार्थित मवधाय एका विलम्बते।

---

(२८) मानः कोपविशेषः। उक्तञ्च स्त्रीणामीर्ष्याकृतः कोपः मानोऽन्या सङ्गिनि प्रिये इति हेमचन्द्रेण तु ईर्ष्या मानः स्त्रीणामेव इति। तस्य वशं याता वशा करिणी पत्युः करिणः अनुनयं न प्रतीच्छतीत्यन्वयः। तथाच स्वयं मृगजातिरपि मानवशगा मानिनीव मानचेष्टाः करोतीति भावः।

एषा पुरः प्रणयिना परिभुग्नकण्ठं
प्रेम प्रसारितदृशा परिपाल्यमाना।
आस्ते स्तनन्धयविवल्गितदत्तदृष्टि-
राक्रान्तशर्करिलशैलतटा कुरङ्गी॥ (२०)॥

निर्वर्ण्य। अति हि नाम लोभनीयमेतासां कातरस्निग्ध प्रेक्षितं। मन्ये अत्र क्वचिद्गिरि कन्दर लता मन्दिरेषु सन्निहिता पाठयति पक्ष्मलाक्षी। सनिश्चयं।

एणीनां चकित विलोकितोपदेशे
वामाक्षी प्रभवति सैव मल्लिका मे।
शिष्यस्थं गुणमवलोक्य लोक कान्तं
विद्वद्भिर्गुरुरपि तद्गुणो हि कल्प्यः॥

पृच्छामि तावत्।

सारङ्गि! शंस गमनोन्मुखि! जीवनाथा
सा मे विभूषयति सम्प्रति कं प्रदेशम्।
यो पादिशत्स्म तव कातरकातरेक्षा
माचार्य्यकीं नयन चंक्रमचातुरीणाम्॥

कथमदत्तोत्तरा सह तर्णकैः (२१) प्रस्थितैव। किमनादर-कारणमस्याः किं प्रियया सह सङ्घर्षः। सवितर्कं।

---

(२०) स्तनन्धयस्य शिशोः विवल्गिते गमनाऽपाटवप्रयुक्ते किञ्चिदुपप्लवनरूपे गमनविशेषे दत्ता दृष्टिर्यया सा तथोक्ता इति कुरङ्गी विशेषणम्।

(२१) तर्णकैः सह वत्सतरैः साकमित्यर्थः। सद्योजातस्तु तर्णक इत्यमरः।

लब्ध्वा कियन्तमपि नैव गुणं प्रियायाः
स्पर्द्धां तथैव हरिणाः कथमादधीरन् ।

विमृश्य । सनिश्चयं ।

स्पष्टं तदेतदथवा भजते यदस्याः
वक्त्रद्विषं हिमकरं कुलमौलिरेषां ॥ (२२) ॥

उपालभे तावत् । भोः भोः !

हरिणवंश्याः ! मा गर्वन्तु (२३) भवन्तो मल्लिकायाः लोचन सौभाग्य सर्वस्व हारिणो वयमिति ।

कातर्य्यं पक्ष्मलता वैपुल्यं स्निग्धतेति तन्वङ्ग्याः ।
प्राप्ताः केऽपि विशेषा दुष्प्रापा विभ्रमास्तु नाभ्यस्ताः ॥

कल । सकरुणम् । हन्त परां काष्ठा (२४) मधितिष्ठति वयस्यः उन्मादस्य । यत् तिरश्चोऽपि प्रार्थयते अचेतनानप्या-

---

(२२) अथवा तदेतत् स्पर्द्धाधारणमित्यर्थः । स्पष्टं शङ्काऽनास्पदम् । यत् यस्मात् एषां हरिणानां कुलमौलिः कुलप्रधानो हरिणः कर्त्ता अस्याः प्रियायाः वक्त्रद्विषं हिमकरं चन्द्रं भजते । स्वकुलगुरुपरिग्रहेऽपि वक्त्रशालित्वेन प्रियया सह हरिणानां स्पर्द्धाविधानं निःशङ्कमेव इति भावः ।

( २३ ) मा गर्व्वन्तु मा दृप्यन्तु इत्यर्थः । कर्व्व खर्व्व गर्व्व दर्पे इति धातोः कर्त्तरि परस्मैपदाल्लोट् । भवन्त इति कर्त्रुपादानात् प्रथमपुरुष बहुवचनम् । स्तवम् । शेषे प्रथमः इत्यनेन मध्यमोत्तमयोरविषये प्रथमपुरुषत्वविधानात् ।

( २४ ) परां काष्ठामिति । परां दूरां श्रेष्ठान्यदूरश्रेष्ठास्तु परः स्याद्वाच्यलिङ्गक इति नानार्थरत्नमाला । उन्मादस्य चित्तविभ्रमस्य काष्ठां दिशम् । अतिदीर्घमुन्मादप्रकारमित्यर्थः । अथवा परां काष्ठां अत्युत्तमप्रकर्षमित्यर्थः । काष्ठा दर्व्यां काष्ठभेदे प्रकर्षे दिशि सान्नि चेति नानार्थरत्नमाला ।

भाषते । हा कष्टमेतावती मम मारुतप्रत्याशा । धिङ् नाम मम जीवितं यद्देवं गते प्रियसुहृदि स्वयमेव न भिद्यते ।

सोपालम्भम् ।

यस्य त्वमेव परमाश्रमभूरमुष्य:
स्वेभ्योऽपि यस्य तव सम्मत आत्मनोऽपि ।
उन्मादलङ्घितमताविति नाम तस्मिन्
हा मूढ़जीवित ! कियच्चिरमासितव्यम् ॥

मारुतं विलोक्य । हन्त दयनीयमेतत् ।

मत्वा मृगान् प्रणयतो विमुखान् समन्यु
निःश्वस्य दीर्घमपसन्नशरीर (२५) मास्ते ।
निर्वेदशोकपरितापपरिप्लुतेन (२६)
वक्त्रेण बाष्पकलदीनविलोचनेन ॥

आकाशे (२७) साक्रन्दम् ।

कथमसि मल्लिके ! करुणया विधुरा किमपि
प्रियसखि ! पश्य पश्य घनबाष्पमिदं वदनं ।
कमल इवालिपङ्क्तिरपतद्दत यत्र पुरा

---

(२५) समन्युः । सशोकः । अपसन्नं छन्नीभूतं शरीरं यस्मिन् कर्म्मणि तद्यथा भवति तथा ।

(२६) निर्वेदः स्वात्मावमाननम् । शोकः दुःखाति भूमिः । परितापः पश्चात्तापश्च एभिः परिप्लुतेन लुब्धेनेत्यर्थः ।

(२७) आकाशे इति । पात्रं विना वक्ष्यमाणत्वात् आकाशे इत्युक्तिः । तल्लक्षणन्तु । किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् श्रुत्वेवानुक्तमप्येकं तत् स्यात् आकाशभाषितं इति ।

विकसित मन्दमुग्धमधुरा त्वदपाङ्गततिः ॥ (३८)

मारु । हा किं करोमि न दृश्यते प्रियतमा । सधैर्यं भवतु पुनरित्यन्विच्छामि । श्रूयते हि अनिर्वेदः परमो हेतुः श्रेयसे इति । पदान्तरं गत्वा सकौतुकम् ।

इदं जम्बूकुञ्जस्खलितजलझात्कारलहरी
गभीरायाः सिन्धोर्मुदितश्च विहगध्वानिनि तटे ।
क्रमोन्नाढ़ानङ्गज्वरविधुरकर्णाटयुवती
कपोलापाण्डु (३९) द्रागद्लति रुचिरं केतकदलम् ॥

साकूतम् ।

इदमभिनवोद्भेदस्वच्छामलद्युति केतकी-
दलमधिशिखाद्रोणिक्रीड़न्मन्दान्धमधुव्रतम् ।
स्मरयति पुरा पश्यन्त्या मां त्रिनीलकनीनिका
लुलितलुलितप्रान्तां वामभ्रुवो विशदां दृशम् ॥

तदेनं विशिष्ट गन्धप्रियं (४०) भृङ्गराजं पृच्छामि । अभिमुखं स्थित्वा ।

---

(३८) विकसित मन्द मुग्ध मधुरा । विकसिता विषयविशेषग्राहिणी विकासितं यद्विषये विशेषमवगाहते इति लक्षणात् । मन्दा मन्थरा मुग्धा सव्याजगर्भस्वभावा मधुरा सन्तापहरा चेत्यर्थः । कटाक्षं हर्षगर्भस्तु सम्भोगौत्सुक्यभावना शीतली क्रियते तापो येन तन्मधुरं स्मृतं इति लक्षणात् । अपाङ्गततिः कटाक्षपङ्क्तिरित्यर्थः ।

(३९) क्रमेणोन्नाढ़ दृढ़ीभूतः अनङ्गज्वरः यस्याः सा च सा विधुरकर्णाटयुवती च तस्याः कपोलवत् आपाण्डु धवलमित्यर्थः ।

(४०) विशिष्ट गन्धप्रियं उत्कृष्टगन्धाभिलाषमित्यर्थः । अत एव सर्वोत्कृष्टगन्धिमल्लिकावदनमवश्यमासादितमेव स्यादितिभावगर्भमिदं विशेषणम् ।

मधुकर ! मदिराक्षी मे दृष्टा विपिने त्वया भ्रमता
अपि परिजातसौरभमवनिजुषाप्राप्तमाननस्पर्शात्।

(४१) कर्णं दत्त्वा। कथमनाद्रियमाणः सगर्वं गायति। भवतु तथा प्रिया पाङ्गस्मारणमेन मनुयामि। पदान्तरे स्थित्वा। कथमत्र रक्तकदम्बे प्रफुल्लेष्वपि पुष्पस्तवकेषु पल्लवमधिशेतेऽन्यो भृङ्गयुवा। निर्वर्ण्य सानुकम्पम्।

न पिबति सविधेऽपि स्यन्दमानं मधूलिं
न मिलति सह यूथ्यैर्नो कलं झङ्करोति।
नच मरुदुपनीतैर्मोदिते पुष्पगन्धैः
तदयमपि तपस्वी कान्तया विप्रयुक्तः॥ (४२)॥

नैतं प्रवक्ष्यामि। निर्वर्ण्य। सहर्षम्।

इयमनतिदूरवर्त्तिनः कदली कुसुमादागतैव विरहपीड़िताङ्गी भृङ्गी।

---

(४१) मधुकरेति। हे मधुकर ! विपिने भ्रमता त्वया मे मदिराक्षी दृष्टा इति स्वरविकारः। अवलोकितावेति प्रश्नः। कदाचिद् यां काञ्चिदवलोक्य तस्यां एतद्भ्रमेण दृष्टेति न प्रतिवक्तव्यमित्याशयेन तदीयमनितरसाधारणं लक्षणमपि पृच्छति। अपीति। अवनिजुषा भूलोकस्थेन त्वया आननस्पर्शात् तन्मुखसंसर्गाद्धेतोः पारिजातसौरभं स्वर्लोकीयनन्दनवनस्य कल्पद्रुमस्यापूर्व्वं भौमकुसुमसौगन्ध्यं कर्म्म अपि प्राप्तं आसादितं वा इति प्रश्नः।

(४२) तत् तस्मात् उक्तप्रकारेण विषयेषु अरतिमत्त्वादिति भावः। तपस्वी शोच्यः अयञ्च भ्रमरोऽपि कान्तया विप्रयुक्तः विरहितः। विषयनिवृत्तिस्वरूपानाम इत्यादिना विषयेष्वरतेः अवस्थाविशेषत्वेन विरहिस्त्रीपुंसलक्षणत्वादिति भावः।

स्निह्यति हृष्यति पश्यति चुम्बति गायत्यनङ्गधृप्रेमा ।
प्रत्यागतां द्विरेफः प्राप्य प्रणयाकुलां दयिताम् ॥

दृष्ट्वा चैतत् पूर्वेदुरनिशावृत्तान्तः स्मर्य्यते। तथाहि तस्मिन् समये।

पाल्लवं तलिम (४३) मास्थिते मयि प्रापदिन्दुवदना मदन्तिकम्

पुनः स्मरणमभिनीय ।साक्रन्दम् ।

हा हतोऽस्मि ननु तत्पणेदृशौ नीलनीरजरुचौ न्यमीमिलत् ॥

कल । हा धिगियन्त

समयं उन्मादतिरोहितः संस्कारः सदृशदर्शनादुद्बुद्धः ।

मारु। धिङ् मां प्रमादिनं यदुन्मत्त इव विस्मृत्य तादृशं कृतान्तनैष्ठुर्य्यं (४४) कानन भ्रमणेन कालं क्षिपामि। आकाशे। हा प्रिये मल्लिके ! कथं मया विना त्वगं मारूढासि ।

विपुल जघने मन्दं याहि क्षणं त्रिदशालये
त्रिदशसरितः कूले यावन् मयापरनुधाव्यते ।
पदनलिनयोः केलीयान प्रकार मधीयतां
विमललहरी लोला वेधो रथा द्विजजातयः ॥ (४५)

---

(४३) पाल्लवं तलिमं किसलय तल्पमित्यर्थः । तलिमं कुट्टिमे तल्पे चन्द्रहासेऽप्येति नानार्थ रत्नमाला ।

(४४) तादृशं कृतान्तस्य दैवस्य नैष्ठुर्य्यं क्रौर्य्यं मरणरूप मित्यर्थः । कृतान्तो यमसिद्धान्त दैवा कुशल कर्म्मसु इत्यमरः ।

(४५) विपुलजघने इति । हे विपुलजघने ! इति सम्बुद्धिः। वक्ष्यमाण व्यापारान्यथाकरणे तव जघनखेदः सम्भवेदित्याशय गर्भा।

तत्र च।

तरन्तो जाह्नव्याः कनककमलोद्भासिनि जले
मरन्दे मन्दारद्रुम सुमनसां मग्नवपुषः।
सलीलं पौलोमी कुटिल चिकुरान्दोलनपराः
शनैः सेविष्यन्ते सुमुखि! भवतीं स्वर्गपवनाः॥ (४६)

सवितर्कम्। हन्त विशिष्टगुणवत्त्वमपि क्वचिदनिष्टाय। तदुपदिशामि। आकाशे। अथ मल्लिके सम्भावितनन्दन-वनोपकण्ठ सञ्चारां भवतीं किञ्चिद्वदामि।

कल्पद्रुमावलि विलोकनकौतुकेन
मुग्धे! तदुन्नमय मा मधुरं मुखाब्जम्।
जिघ्रासवः सुरभिनिश्वसितं सहेलं
निर्धूतपुष्पमलयो द्रुतमापतेयुः॥

---

त्रिदशालये त्रिदशसरितः कूले विनोद सम्पत्तिसूचकमेतत्। त्वयं मन्दं याहि। अतिमनोहरायां देवसरिति दत्तदृष्टिः स्वजघन भार सौस्था विरोधेन मन्दं व्रजेति भावः। एवं करणे तव महत् सेवाच सङ्घटत इत्याह। यावत् मयापि अनुधाव्यते तावत् वेधसः ब्रह्मणः रथाः वा-हनभूताः बिमललहरीषु लोलाः आसक्ता विहरन्त्यः द्विजजातयः हंसाः इत्यर्थः। पदनलिनयोः त्वदङ्घ्रि सरोरुहयोः सकाशात् केलीयान प्रकारं कर्म्म अधीयताम्। स्ववाहनानां केलीयान प्रकार-शिक्षणेन वेधास्तुष्येदिति भावः।

(४६) तरन्त इति। अत्र तरन्तः मग्नवपुषः आन्दोलन पराः इति विशेषण त्रयेण क्रमात् शैत्य सौरभ्य मान्द्यात्मयोगुणाः। प्रति-पादिताः इति बोध्यम्।

कल । अयमन्य: प्रकार उन्मादस्य ।

मार । प्रिये ! अदृष्ट चरे देशे कथमेकाकिनी प्रतिपालयेयमिति मा मनसि खेदः कार्य्यः ।

वलितवदनं भूयो भूयो मदागमनोचिते
प्रहितनयनां मार्गे साक्षाद्रमामिव तस्थुषीम् ।
तत इत उपेत्यारात् प्रीत्यज्ञ ताकुलचेतसः
सुरयुवतयो द्रक्ष्यन्ति त्वां निमेष मुचा दृशा ॥

वक्ष्यन्ति च ।

सखि ! कथय कुतस्त्वं कस्य कान्तासि मा मा
बिभिहि ननु वयन्ते केलिसख्यः स्म सर्व्वाः ।
अथ सहभुव एतान् कल्पवृक्षान् दिदृक्षुः
स्वयमिह चरसि श्रीः सोदरी स्तर्कयामान् ॥

किम्बहुना एवमादि भूयो भूयः कौतुकेन पृच्छन्तीषु तासु लज्जा गृहीतकण्ठा यावत् किञ्चिदारभसे वक्तुं तावदहं झटित्यागत्य तासां सम्यगुत्तरयामि । परितो विलोक्य । ससम्भ्रमम् । कथमिदं भूपृष्ठमात्रगोचरं वपुर्विहाय प्रियतमा समीपं गमिष्यामि ।

कल । सावेगम् । हन्त किमिदमारप्स्यते । ननु भो हतविधे ! किं मन्यसे । कीदृशमिदमुन्मादं परिणमयसि । साञ्जलिबन्धं । भगवन् कुसुमायुध ! भूयोऽपि प्राक्तनमुन्मादं आवर्त्तयस्व । यत्र वने वने अन्वेषमाणेन प्रियवयस्येन नैतादृश मारब्धम् ।

मार । कर्णं दत्त्वा । सहर्षं । दूयन्तं समयं प्रियतमां

विहाय प्राणाते (४७) मह्यं प्रकुप्यन् देवो मकरकेतन एव मदनुकूले प्रवर्त्तते। अयं हि।

आस्फालयति मुहुर्मुहुरारोपित चण्ड मौर्वि कोदण्डम्।
आकर्ण्यते हि तादृक टङ्कारो मुखरयन् ककुभः॥ (४८)

कल। हन्त मधुकर झङ्कारं मौर्वि टङ्कारयति।

मार॥। यावद्दिनं त्वरयामि। सप्रार्थनं।

तं बाण मुद्धर निषङ्ग मुखादनङ्ग
पञ्चाऽपि वीक्ष्य यमवैष्यऽविकुण्ठ धारम्।
तेनैव सत्वर मसून् जहि मे दयालो
न द्विःशरं धनुषि सन्दधते हि शूराः॥ (४९)

स्मरणमभिनीय। हन्त लोकान्तरं यियासता मया नह्या पृष्टः प्रियमित्रं कलकण्ठः। हा सखे कलकण्ठ! क मां विहाय गतोऽसि।

कल। सवाष्पं। सखे!

---

(४७) प्राणते जीवमानायेत्यर्थः।

(४८) अयंहीति। अयंहि मदनोहि आरोपितचण्ड मौर्वि कोदण्डं आस्फालयति। अत्र युक्तिमाह। हि यस्मात् ककुभः मुखरयन् तादृकः कौदण्डः टङ्कारः आकर्ण्यते इति योजना।

(४९) तमिति। हे अनङ्ग! तं वाणं निषङ्ग मुखात् उद्धर पञ्चापि वाणानितिशेषः। वीक्ष्य परिशोध्य यं वाणं कर्म्म अविकुण्ठा क्रियानिपुणा धारा निशितप्रान्तः यस्य तं तथाभूतं अवैषि जानासि तेनैव तथोद्धृत वाणेनैव हे दयालो! मे असून् सत्वरं जहि। तथाहि शूराः द्विःशरं न सन्दधतेहि इत्यन्वयः। सामान्येन विशेष समर्थनरूपोऽर्थान्तरन्यासः उक्तिरर्थान्तरन्यासः स्यात् सामान्य विशेषयोरिति लक्षणात्।

नाहं गतोऽस्मि भवत स्मरणाञ्च पार्श्वात् ।

मार । अनाकर्णितेन । शृणु ममेदं पश्चिमं वचनम्

इति वदन्नेव मूर्च्छां नाटयति ।

काल । सत्वरमुपसृत्य ।

शेषं वचः कथय मा विरमार्द्र मुक्ता ।

निर्वर्ण्य । सावेगम् ।

भक्तं कथं नु खलु मामवधूय दीनं

निःसङ्ग लोकमपरं प्रति यास्यकाण्डे ॥ (५०) ॥

इति धारयन् ।

हा प्रिय वयस्य मारुत ! पश्य मामनाथं हा नृशंस मकरलाञ्छन ! कथं प्रार्थितोऽहमिति प्राणान् हरसि वयस्यस्य । चौर किं त्वमिव त्वत् सायका अप्यदृश्या एव ये अलक्षित पतना एव व्यापादयन्ति शरीरिणः । शीतलोपचारं नाटयन् । निर्वर्ण्य । हा हतोऽस्मि मन्दभाग्यः । अद्यापि निर्विकारं वदनम् । सबाष्पम् ।

एतदेव तदराल कुन्तलं पेशल स्मितमुदार भाषितम् ।
पुण्डरीकदल दीर्घलोचनं पूर्णचन्द्र रमणीय माननम् ॥

परितो विलोक्य । हा भूधर नितम्ब वासिन्यो वनदेवताः ! परित्रायध्वं परित्रायध्वम् ।

(५१) विरमत्यसावहह विश्वमङ्गलं
कलकण्ठ जीवित निबन्धनं जनः ।

---

(५०) अकाण्डे । अनवसरे इत्यर्थः ।

(५१) कलकण्ठ जीवितस्य निबन्धनं बन्धक इत्यर्थः । जनः वि-

य मलालयन् ललितमुग्धमल्लिका
किलकिञ्चित स्मित विलोकितादयः ॥

सखे! मारुत! दिवं गतेन त्वया न चिरं प्रतिपाल्योऽस्मि।

नाहं विलम्ब कणिकामपि नाथ कुर्य्यां
जानामि ते पृथगवस्थिति कातरत्वम् ।
स्वर्गं गतोऽपि च्चहृ मल्लिकया समेतो-
ऽप्युत्कण्ठसे नु कलकण्ठ विनाकृतः किम् ॥ (५२)

अमर लोक ललाम भूतयो युंवयो रस्ति च मयाप्युप-
योगः ।

अथ्रीया मलकार्पणोचित गुणां कल्पद्रु सूनैः स्रजं
लीला साधन(५३)मास्तृणीय तलिमं बालैस्र तत्पल्लवैः ।

---

रमति । निबन्धन नाशे वज्र नाशः स्फुट इति भावः । ललित मुग्ध मल्लिका किलकिञ्चित स्मित विलोकितादयः । रोषाश्रु हर्षभीत्यादेः सङ्करः किलकिञ्चितं तच्च । स्मितं मन्दहसितञ्च विलोकितञ्च इति द्वन्द्वः । ललितानि चारूणि ( ललितं चारुणि त्रिषु इति नानार्थ रत्नमाला ) मुग्धानि नूतनानि (मुग्धः सौम्ये नवे मूढ़े इति नानार्थ रत्नमाला) । यानि मल्लिकायाः किलकिञ्चित स्मित विलोकितानि तानि आदीनि येषां ते तथोक्ताः आदिपदेन भ्रूभङ्गादयो गृह्यन्ते । मल्लिकायाः हाव-विशेषाः इत्यर्थः ।

(५२) कलकण्ठेन विनाकृतः विरहितः सन् किंनु वस्तु इत्यर्थः कर्म्म । उत्कण्ठसे अभिलषसि सर्ववस्तुनिच विमुखोऽसीतिभावः ।

( ५३ ) आः इति सन्तापे । आस्तु सन्तापकोपयोरिति नानार्थ रत्नमाला । बालैः तत्पल्लवैः कल्प किसलयैः लीलासाधनं युवयोः क्रीड़ोपयोगि तृणीय तलिमञ्च । गृह्णीयामित्यनुषङ्गः ।

प्रत्यग्रोपहृतेन मन्दपवनं मन्दाकिनीजन्मना
स्वर्णाम्भोरुहिणीदलेन मृदुना सञ्चारयेयं सखे ! ॥

वक्ष इव परिरभ्य ।

विकटमणिकवाटश्रीमदेतन्मदङ्गे
मुहुरपि परिरम्भं साश्रु संहृत्य नीतम् ।
विरहयति न वक्षो मल्लिकाप्रेमदत्त
स्तनसुरतरुदाम्नः (५४) सान्द्रमद्यापि गन्धम् ॥

हा जननयनचन्द्र ! हा गौरीप्रसादलब्ध ! हा कुलतन्तो ! हा कलकण्ठजीवित ! हा मल्लिकाविलासप्रबन्धलालित !(५५)

इत्यविशदवर्णं विलपन् मूर्च्छति ।

ततः प्रविशति वाष्पायमाणवदना नवमालिका
रमयन्तिका कालिन्दी च ।

सर्व्वाः । हा वल्लह सही अणि (५६) मल्लिए देहि णो

---

(५४) विकटेति । विकटं मणिकवाटवत् विशाल रत्नकवाटवत् श्रीमत् शोभाशालि । विकटः पृथुले रम्ये विशाल विकरालयोरिति नानार्थ रत्नमाला । साश्रु यथा तथा मदङ्गैः संहृत्य परस्परं संबध्य मुहुः परिरम्भं नीतं प्रापितं वक्षः मारुतोरः कर्त्तृ । मल्लिकया प्रेम्णा दत्तं यत्स्तन सुरतरुदाम कुचवर्त्ति कल्पद्रुममाल्यं तस्य सान्द्रं गन्धं अद्यापि न विरहयति न त्यजति इत्यन्वयः ।

(५५) मल्लिकायाः विलासानां लीलादीनां प्रबन्धेन बन्धनेन लालितविनोदित इति सम्बुद्धिः ।

(५६) वल्लहसही अणे । वल्लभः सखीजनो यस्याः तथा भूते इति सम्बुद्धिः ।

वअणं सुन्दरि विहडन्त चम्मअदलसुरहिरमणिज्जा विल-आणं वि दिसव'मह्वियारा (५७) तारिसी तुह तणु-लच्छोकोरिसस्स हेव्वदुव्वि वा अस्स भाअणं आसि। हा महाभाअ माढअ! कहं ण सहेसि तुमं वि मल्लिआए विओअम्। जाए किदे कण्ठ, च्छेद साहसे ससाहो किदो।

नवमा। हा असोढ णवमालिआ खणविरहे कीस मं उवेक्खसि। चिट्ठउ दाण णोमालिआ तुह जीविअ णिव-अण व सविह मुक्क करुणक्कन्दस्स माढअस्स वा दंसणं देहि। संस्कृतमाश्रित्य।

---

(५७) विलआणंवि दिस वम्महविआरा। (वनितानामपि दत्तमन्मथ विकारा) दत्तः मन्मथविकारः रिरिंसा यया इति विग्रहः। लोकेहि प्रायशः स्त्रीभिः पुरुषाणामेव मन्मथविकारोत्पादनं दृश्चरम्। नतु स्त्रीणां तथेदमप्रसिद्धं स्त्रीणामपि मन्मथ विकारोत्-पादकत्वमस्यां प्रतिपादित मित्यतोऽवाङ्मनसगोचरोऽस्याः शोभाविशेष इति फलति। (न च) पुरुषेण पुरुषाणामिव स्त्रिया स्त्रीणां मन्मथ विकारोत्पत्तेः। यकारादि धात्वर्थप्रयोजकत्वा भावेन विफलत्वात् कर्मानुभविकत्वाच्च असमञ्जसोऽयमुपन्यास इति शक्यम्। स्त्रिया स्त्रीणां मन्मथविकारोत्पत्तेः तदुत्पत्त्या कार्य्य विशेषसम्भवस्य च मानिनी जनरहस्यत्वेन नपुंसामनुभव पथ मवगाहते। वस्तुतस्तु श्रुत्यैव आस्वादवगम्यते यदाङ्करायुर्वेदिनः। यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन। मुञ्चतः शुक्र मन्योन्यं अनस्थितत्र जायते इति। अत्र प्रति पादितयोः कारण कार्य्ययोर्वृषस्यन्ती परस्परसङ्गमाऽनस्थि प्रसवयो रन्यतरस्य कार्य्यभूतानस्थि प्रसवस्य प्रसिद्धत्वेन कार्य्यविधया कारण समर्थनमपि अन्वयव्यतिरेकाभ्यां सुशकम्। अत्रापि सन्दिह्यतान्तु स पृच्छया कलत प्रतिवचनमेव जीवातुरित्यलमधर्य्युपरि बहुडीयनेन।

दहति तदिदमद्य स्मर्य्यमाणं मनो मे
सकलकलमृगाङ्कच्छायमच्छस्मिताद्रम्।
स्मरमुकुरकपोलस्खेतिमोनीतराग
व्यतिकरसुभगन्ते कोमलापाङ्गवक्रम्॥

आकाशे। सहि! मामसेहि णोमालिआ तुमं विहा
मूलो ण खणं वि वट्टिस्सदि त्ति। अज्ज एव्व खणे पेच्छ
तुह पस्स परि वट्टिणिं। कहं णु जलहराणं मज्झे प
अण रहिआ चिट्ठिस्ससि।

कालिन्दी। हा सहि! एक्कपदं चिअ (५८) सुमरि
दव्वा जादासि। हा भअवदि! मण्णे तुमं वि मल्लिअं एव्व
अणगद वदित्ति। हा महाभाअ मारुअ! कलकण्ठ मे
सहाओ तुमम्पि कहिं गदोसि।

रमयन्तिका। हा मन्द भाइणि रमअन्तिए! तुह सङ्कमो
एव्व सव्वस्स अस्स अणत्थस्स मूलं आसि। सुणीअदि
खु जं जस्स पुढम भाविदं तं तस्स कारणंति। (५९)

कालिन्दी। सहिओ महाभाअं वा इह काणणे अण्
सामो।

सर्व्वाः। हा महाभाअ! तुमं वा दंसणं देहि।

---

(५८) एक्कपदं च्चिअ। एकपदयैव तत्काल एव इत्यर्थः। अक
स्मादेव इति यावत्। सद्यः सपदि एकपदे इत्यभिधानम्।

(५९) आत्मनिन्दां मनुतिष्ठति हा मन्दभाइणि इति। अन्वयःस्फुट
एव। तथाच घटस्य इदिव प्रथम भावितत्वात् मत्सङ्गम एव सर्वा
नर्थस्य कारणं आसीदिति भावः।

उपसर्पन्ति मारुतकलकण्ठौ दृष्ट्वा। सवष्टम्भाक्रन्दम्। एदे
दक्षोलिखुमग्गाविअ कप्परक्खा सेरदि महाभाआ। उरोजयो
राहत्य पतन्ति।

नवमालिका कालिन्द्यौ। मारुतकलकण्ठौ दृष्ट्वा। सहि
सहि रमअन्तिए! मुच्छिदा एव्व एदे ता जलहर वारिकण
तारहरेण हरिणा लदा पल्लवपिच्छेण वीजेहि।

रम। सबाष्पं तथा करोति

कल। प्रबुध्य सविषादम्। हा धिक्! वयस्य मनासाद्य
प्रतिनिवृत्तोऽस्मि विलोक्य। स्वगतम्। हन्त एता अभ्यागताः।
प्रकाशम्। हा सखि! नवमालिके! हा सखि! कालिन्दि!
पश्यत मारुतस्यावस्थाम्। एष हि।

अन्वेषमाणो विपिने पृच्छन् खगमृगद्रुमान्।
अलब्ध्वा मल्लिकां कान्तां श्रान्तः शेते सुहृन्मम॥

रमयन्तिकां विलोक्य। एषा तु मुग्धा लज्जा शोकपरवशा
निःशब्दं रोदिति। सनिर्वेदम्।

इयं हि दुर्दान्त कृतान्तलीढं
रमोपमाना रमयन्तिका माम्।
लतेव दावानल दह्यमान
मुपघ्नमाश्रित्य विशेषमेति॥

मारुतं विलोक्य। हन्त निर्व्विकारमेव वयस्यस्य वदनम्।
सत्वरमुत्थाय। वयस्य! अयमहमागच्छामि। परिक्रम्य अधोवि-
लोक्य।

अयमनयनग्राह्यतलो गिरिनितम्ब प्रपातः।

अस्मिन् गजवर्ष्मधरैर्गण्डोपलमण्डलैस्थ पुटे ॥
सख्युर्गतिमनुगच्छन् निर्झरपातं पतामि भृगुदेशे (६०)

सर्व्वाः। ससम्भ्रममुपसृत्य कलकण्ठं पृष्ठतः कृत्वा। अम्हो पुढमं पडिसुणामो।

नव। सहि मल्लिए! मन्दाभाअ मारुअ अणार्य तरेवि तुम्हाणं परिअरिआ भविस्सामि। इति पतितुमिच्छति।

काल। सर्वतो विलोक्य। ससम्भ्रमाक्रन्दं। नवमालिके!

मा मा पत सर्वतः प्रागनुभूतचरः संक्षोभ इव।
प्रकाशं रुन्धानं घन पिहित शेषं दिनपतेः। इति (६१) पादं व्यत्यस्य प्रतिच्छन्नच्छुंपीत्यादि प्रागुक्तमेव पठति।

ततः प्रविशति नवमालिका करावलम्बिनी शिखामणिना भूषिता मल्लिका

मल्लिका। सहि! मा मा पडेहि। इति नवमालिकां निवारयति।

---

(६०) निर्झरपातं पतामि। निर्झरो यथा पते तद्वत् पतामीत्यर्थः।

(६१) इति प्रकाशं रुन्धानं घनपिहित शेषं दिनपते रित्युक्त प्रकारेण पादं निरुन्धहिमरश्मिं किरण महिमानं हिमरुच इत्याकारकम्। व्यत्यस्य व्यत्यासं विधाय। तथाच। निरुन्धहिमरश्मि मित्याकारकाष्टमाङ्कोक्त पद्य प्रथम पाद स्थाने प्रकाशं रुन्धानं घनपिहित शेषं दिनपते रित्येतं पादं संयोज्य इत्यर्थः। तथा पाठो यथा।

प्रकाशं रुन्धानं घनपिहितशेषं दिनपतेः
प्रतिच्छन्नच्छुंपि प्रकटित भयाश्चर्य मभितः।
तमोवा तेजो वा तदुभय परिम्रक्तिरथवा-
किमप्येतत्तत्त्वं तिरयति जगद्दीपयति च॥

इति। व्याख्यातमेतत् पद्यमष्टमाङ्कएव।

सर्व्वाः । सहर्षं विस्मयं । मल्लिकां प्रत्यङ्गं परिरभ्य । सगद्गदं । सहि ! अवि सच्चं पच्चाअदासि । सहर्षं । दिष्ट्या अनुकम्पिता स्मो दैवेन । तदिदं प्रमुग्धस्य संज्ञालाभः, अन्धकारपतितस्यार्क दर्शनं, अङ्गार कवलितस्यामृतासारः ।

मल्लि । सवाष्पं । सहिओ कहिं अज्जउत्तो ।

इतराः । सहि ! एसो तुह तारिसेण अलद्धव्भमेण अविसाद तत्तेण अदंसणेण तक्खण सञ्जाअ मोहुम्मादपरवसो इदो तदो काणणेसु परिहिण्डिअ एत्थ एव्व लआमूले मुच्छिओ ण उण पडि बुज्झइ ।

मल्लिका । सवाष्पं । हा अज्जउत्त ! इति सह सर्वैं रुपसर्पति । इतरा दर्शयन्ति ।

मल्लि । तथाभूतं माधवं दृष्ट्वा । हा हदम्हि मन्दभाआ । हा णाह पेच्छ मं पेच्छ आगअं । इति छिन्नपातं पतति ।

इतराः । अप्राप्य भूतलामेव करतलैर्युगपद् धृत्वा । सहि ! मा मा भआहि मूच्छिओ एव्व एसो । ता अमुअसीएण तुह फस्सेण झत्ति पडि वोहेहि ।

मल्लि । सगद्गदम् । सहीओ तुरिअं मूच्छाहरं मणिं मह सिहा वन्धादो उम्मोइअ अज्जउत्तस्स गव्भे णिक्खिवेह ।

इतराः । जनान्तिकम् । मा दाव मणिं णिक्खिवामो पिअसहीए फस्सेण पडि बुज्झउ महाभाओ । प्रकाशं । सहि ! एव्वं विहेण मणि सहस्सेण वि ण सम्मइ एदस्स मुच्छा तुमं दाव रत्तुप्पल कोमलेण करअलेण जइ परा मरिसस्सि अङ्ग मङ्गं तक्खणं एव्व पडि वुज्झिस्सदि ।

कल । सखीनां वचनमनुमोदमानः ।

सखि ! धारय पत्युरङ्ग मङ्गैः

कठिनं मास्म मणिं निधेहि गात्रे ।

त्वदृशनं शोक मूढ़बुद्धे

र्ननु मूर्च्छाहर मौषधं त्वमेव ।

सवाष्पं सपुलकश्चोत्सङ्गेन धारयति ।

इतराः । सशीकरैः पल्लवैर्वीजयन्ति ।

मल्लिका । मारुतं विलोक्य । हन्थि अज्जवि ण पड़िबुज्झइ अज्जउत्तो । कलकण्ठं प्रति । भद्दाभाअ ! तुह वअणेण पड़ि बोहेहि वअस्सं । णहि तुए आह्रदो सिविणए वि तुह्निंको (६२) होइ एसो

कलः । अयि मारुत !

निशमय गिरमस्याः चक्षुषी स्निग्धतारे

तरलय धूत वाष्पां प्रेयसीं पश्य दीनाः

ननु कथयसि शश्वद्दर्शने मल्लिकाया

मम नयन निमेषो नाम क्वापि व्यथेति ॥

नव । सहि ! सहि ! दिट्ठं खु मुच्छिओ महाभाओ असे तुह परिरम्भेण पड़िबुज्झइत्ति ता क्खणं आलिङ्गेहि ।

मल्लिका । सलज्जं स्वगतम् । अज्जउत्त ! कीस उण एदाणं पुरदो लज्जावेसि । सवामि तुह चरणेहिं एकंते देमि परिरम्भं ता उट्ठेहि ।

---

( ६२ ) तुह्निंको (तुष्णीकः) तूष्णीं शील इत्यर्थः । तूष्णीं शीलस्तु तूष्णीक इत्यमरः ।

सर्व्वाः । सहि ! लद्धे पिअदमे पच्चालिङ्गिस्ससि । अज्ज उत्त एक्कं परिरम्भं देहि ।

मल्लिका । अवगुण्ठनं कुर्व्वती स्वगतम् ।

अज्ज उत्त ! पुब्बं क्खु सारसिआमुहेण पत्थिदो अज्ज दिज्जदु एसो परिरम्भो । इति समन्ताज्जं सत्रस्य पुलकश्चालिङ्गति ।

मारुतः । प्रबुध्य स्वगतम् ।

सोऽयं सर्व्वाङ्गीणः कर्पूरविलेप शीतलस्पर्शः ।
मन्ये स्वर्गमितोऽहं प्रियतमया चास्मि परिरब्धः ॥

नयने उन्मील्य मल्लिकां विलोकयन् आलिङ्गनं वीत्याय सहर्ष-गद्गदम् । अयि प्रेयसि मल्लिके !

दिष्ट्या परलोकगतामपि त्वामासादितवानस्मि ।

किञ्चाक मेत्य चकितासि विदेशमेका
किन्तेऽभवन् सवयसः सुरराजवध्वः ।
किं नन्दनद्रुमतले रमते मतिर्वा
किं मे विलम्बकलया कुपितासि किञ्चित् ॥

कल । अद्यापि सोन्मादशेषमेव हृदयम् ।

मल्लि । स्वगतम् । हत्थि मं सग्गट्ठिअं मण्णेइ अज्जउत्तो । हर्षशोकविवशा वचस्येव विलीयते ।

मारुतः । सख्यौ विलोक्य सहर्षम् ।

सखि नवमालिके ! सखि कालिन्दि ! किं युवामप्यागते स्थः । अथ जन्मनः प्रभृति अविरहितचणे युवां कथं मल्लिकां विहाय स्थास्यथः । पुनः सहर्षम् । हन्त रमयन्तिका सखः कलकण्ठोऽप्यत्रैव । सखि रमयन्तिके ! स्वागतं ते । सानन्दम् ।

अद्यास्मि पूर्णकामो यत् संगच्छे सह बान्धवैः ।
नाकोऽपि नरकस्तस्य यस्य मित्रं न सन्निधौ ॥

कल । सखे ! ननु मणिकूटशिखरमेतत् न पुनर्नाकः ।

मारु । सहर्षातिशयं परितो विलोक्य ।

सखे ! सत्यमेव मेव ।

तदिदमचलशृङ्गं पत्तनं नामराणाम्
अयमपि शुभतोयो निर्झरो नाभ्रगङ्गा ।
विपिनतरव एते न द्रुमा नन्दनोत्था
वयमपि मनुजाः स्मो न श्रिता देवभूयम् ॥ (६१)

मल्लिकामालिङ्ग्य । प्रिये ! किमेतत् ।

मल्लि । अज्जउत्त ! अहं खु तस्सिं पल्लव तप्पे पतन्निआ अदमोहा ! पुणो परिवुत्ता पेच्छामि भअवदीए उवङ्ग वट्टिणं सिहा मणिणा भूसिअं विदेसट्ठिअं अत्ताणं। कहिअं भअवदीए सो किल देसो दमिलेसु कञ्चीउरं णाम सिरि कामच्छीए ठाणंति । सर्वे विस्मयं नाटयन्ति ।

मारु । क्वाद्य भगवती ।

मल्लि । तदो कञ्चीउरादो भअवदिं आलम्बिअ झत्ति एत्थ एव्व आअदम्हि णोमालिआ हत्थे समप्पिदाअ ण पेच्छामि पुणो भअवदिं ।

---

(६१) देवभूयं देवत्वं इत्यर्थः । स्यादृब्रह्म भूयं ब्रह्मत्वं ब्रह्मसायुज्य मित्यपि । देवभूयादिकं तद्वत् इत्यमरः ।

इति श्रीमल्लिका मारुत व्याख्याने परिमलाख्याने नवमोऽङ्कः ।

प्रविश्य मन्दाकिनी । सस्मितं । वत्स ! दिष्ट्या अविपन्न मनोरथोऽसि । सर्वे सहर्षं विस्मयस्तब्धाय मवमन्ति ।

माध । भगवति अवाङ्मनस गोचरप्रभावे ! श्रोतुमिच्छामि विस्तरतोऽमुं वृत्तान्तं ।

मन्दाकिनी । वत्स ! महती खल्वियं कथा तदनवसरोऽयं । दूयन्ते खलु विश्वावसु प्रभृतयः स्कन्धावार जनाश्च । तत् झटिति गत्वा आश्वासयामः ।

कल । युज्यत एतत् ।

माध । यद्भवत्यै रोचते । कलकण्ठ ! दर्शय पन्थानम् ।

कल । इतः इतः । इति निष्क्रान्ताः सर्वे ।

इति नवमोऽङ्कः समाप्तः ।



## अथ दशमोऽङ्कः ।

नेपथ्ये ।

नेपालीना मराले विरचयति कचे केतकीपत्रकृत्यं
कण्ठे मुक्ताकलापान् द्विगुणयति सितान् पाण्ड्यसीमन्तिनीनाम्
कर्णे कर्णाटिकानां प्रकटयतितमां दन्तताटङ्क लक्ष्मीं
कार्पूरी पत्रवल्ली भवति तव यशो गण्डयोः केरलीनाम् ॥ (१)

---

(१) नेपालीनामिति । कार्पूरी पत्रवल्ली कर्पूरकल्पित मकरिका इति विधेय विशेषणम् । उल्लेखालङ्कारः । एकेन बहुधोल्लेखादसौ विषयभेदत इति लक्षणात् ।

पुनर्नेपथ्ये ।

मिथ्याव्योमगिरौ निगूढ़घटनादुन्मादनाद्दन्तिनो
यस्ते शम्बरकः क्रिया समभि हारारब्धवैरोऽभवत् । (२)
प्रत्याहृत्य फलङ्गिरास्त्रशपटैराहन्यमानः स्वयं
व्रीड़ात् सोऽद्य पलायते स्वविषया ज्वाहूयमानो जनैः ॥

वैतालिकः । (३) आकर्ण्य सापह्नवम् । पलायते इति किमुच्यते ।

स खलु कतिपयक्षणारोपित जामातृशब्दः तमाल-विटपावलम्बी कात्यायनी हेलनाद्विभ्यता स्वपरिजनेनापि दूयन्सं समयं नो मोचितः । अथ पुनः प्रतिनिवृत्तायाः मन्दाकिन्याः वचसा त्रोटितबन्धनः तत्क्षण एव महाराज-मपत्रनापृच्छ्य अपलायिष्ट मगधेश्वरम् ।

पुनर्विहस्य । विदित सकलदुर्नय प्रपञ्चो भ्रमरकः चरणताडनं कलपिङ्गकस्य साम्प्रतं (४) अमंस्त । विलोक्य साशङ्कम् । कथमसौ करतलान्दोलित कनकवेत्रलतः कञ्चुकी किमपि वन्दिमार्गमादिशति । कर्णं ददाति ।

---

(२) क्रियासमभिहारारब्धवैरः । पौनः पुन्यं अतिशयो वा क्रिया समभिहारस्तेन आरब्धं वैरं येन स तथाभूतः । अतिमात्र शतह्रेष इत्यर्थः ।

(३) वैतालिकः । बोधकार इत्यर्थः । वैतालिको बोधकार-इत्यमरः ।

(४)साम्प्रतम् । युक्तमित्यर्थः । अथसाम्प्रतं युक्तार्थे साधु-नार्थे च नानार्थ रत्नमाला ।

नेपथ्ये । भो भो वन्दिनो मन्दरक्षुभितमहोदधि कलकल-गम्भीरेण कोलाहलेन मा मा बधिरयत प्रपञ्चम् । शुश्रूषते मल्लिकासखो मारुतः कुमारो भगवत्या मन्दाकिन्या मुखात् कामपि विचित्रां कथाम् । तद्विरमतु क्षणमुज्जितम् ।

वैतालिकः । आकर्ण्य सकौतुकम् ।

कीदृशी सा कथेति कुतूहलेन स्फुटतीव मे हृदयम् । भवतु स्वयमेव सर्वं प्रकटी भविष्यति । ननु उच्यते अन्तःपुरगतमापणे श्रुयत इति तदर्थेच्छं गच्छामि ।

इति निष्क्रान्तः । शुद्धविष्कम्भकः ।

ततः प्रविशति पटमण्डपोपविष्टः कलकण्ठ सखो मारुतः समीपतश्च स्वच्छ रमयन्तिकया मल्लिका । सखिभ्यां मन्दाकिनी विभवतश्च परिवारः ।

मारुतः । भगवति ! अवहिता स्मः । प्रस्तूयतां कथा ।

मन्दाकिनी । वत्स मारुत ! श्रूयताम् ।

अस्ति सेतुबन्ध सीमन्तित महार्णव वरिवस्यमान रघुनाथ पराक्रमायामाशायाम् । (५)

मन्दानिल प्रसवगेह गुहाविहारि
नागङ्गनामणि विभूषणकान्ति चित्रः ।
कुम्भोद्भव प्रणयिनीकरवर्द्धमान
पाटीरवल्लि वलयो मलयो गिरीन्द्रः ॥

---

(५) सेतुबन्धेन सीमन्तितः सञ्जातसीमन्तः । (तारकादिभ्य इतच् । यो महार्णवः तेन वरिवस्य मानः उपास्यमानः रघुनाथपराक्रमो यस्यां सा तथोक्ता तस्यां आशायां दक्षिणदिशीत्यर्थः । वरिवसिते वरिवस्तितमुपासितश्चोपचरितञ्चेत्यभिधानम् ।

कल । स्वगतम् । सावष्टम्भोऽयमारम्भः ।

मारुतः । भगवति ! श्रूयते खल्वसौ सश्लाघम् ।

प्रतीयन्तां विश्वे परमगरिमाणः क्षितिभृतो

महीयान् कोऽप्यन्यः खलु मलय शैलस्य महिमा ।

गुणस्निग्धास्तत्तत् कुलगिरि यशोहारिणि कुचे

विशुद्धां यत् कीर्त्तिं दधति वनिताश्चन्दनमिषात् ॥ (६)

नवमालिका । जनान्तिकम् । सहि ! मल्लिए मलआ-

अलमिषेण विलआत्थणो वसिट्टो ।

मल्लिका । कथते ।

---

(६) प्रतीयन्तामिति । विश्वे लोके यद्वा विश्वे सर्वे परम गरिमाणः उत्कृष्ट महिमशालिनः क्षितिभृतः अष्टकुलाचला इत्यर्थः । प्रतीयन्तां प्रतीति विषयाः क्रियन्ताम् । तेष्विति शेषः । तेषु हिमविन्ध्याद्यष्टकुलाचलेषु मलयशैलस्य मलयनामककुलाचलस्य महिमा महीयान् । तथा कोऽपि अनिर्वचनीयः तथा अन्यः अन्यादृशः खलु इतरकुलाचलमहिमतो विजातीयः किल इत्यर्थः । उपपादयति वनिताः तत्तत्कुलगिरीणां हिमविन्ध्यादि कुलाचलानां यशो हारिणि । महत्त्व कठिनत्वादिना कीर्त्यपहार कारिणि कुचे अधिकरणे चन्दन मिषात् पाटीरलेपव्याजात् विशुद्धां विमलां यत्कीर्त्तिं यस्य मलयस्य कीर्त्तिं कर्म गुणेषु स्निग्धाः स्नेहयुक्ताः सत्यः दधति बिभ्रति । तस्य मलयशैलस्येति पूर्वार्द्धेऽन्वयः । तथा च वनिताभिः हिमविन्ध्यादिकुलाचलयशोऽपहारिणि स्वकुचे मलयशैलयशसः केवलं गुणोत्तमत्व श्लाघापूर्वकधारणदर्शनात् मलय महिमा अन्य एवेति भावः । अत्र चन्दनमिषादित्यनेन चन्दनत्या पक्षव्यक्त्या कैतवापह्नुतिरलङ्कारः कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैरिति लक्षणात् ।

मन्दाकिनी । तस्मिन् कदापि सहकारनवप्ररोह
सुह्यत् कुहूमुखमुखोद्गतमुग्धनादे ।
जाते वसन्तसमये सचिवः स्मरस्य ।
देवश्चचार किल दक्षिणगन्धवाहः ॥ ३ ॥

मारु । ततस्ततः ।

मन्दाकिनी । अहो स्वच्छन्द हृद्यानि महतां चरितानि यतः ।
सोऽयं चरन् गिरितटीषु यदृच्छया स्वं
रूपं दधौ मरकतद्युति मातरिश्वा ।
यद्वीक्ष्य हर्षजलशीकरिभिर्बभूवे
नेत्रैर्विलासवलितैर्वनदेवतानाम् ॥

मारु । सकौतुकम् । ततस्ततः ।

मन्दा । अथ मणिधरनाम्नो मन्त्रिणो नागभर्त्तु-
र्मदनजयपताका मञ्जुला नाम कन्या ।
वदनकमलगन्धाक्रष्टलोलम्बमाला
विपिनभुवि सखीभिस्तत्र चिक्रीड़ बाला ॥

मारु । ततस्ततः ।

मन्दा । ततश्च ।
सा श्रोणिमन्थरगतिस्तनताम्रमध्या
वासन्तिका सुमनसः सदयं हरन्ती ।
तापिञ्छ पिञ्छ (७) रुचिरं सविधे चरन्तम्
देवं ददर्श मरुतं लतिका निकुञ्जे ॥

(७) तापिञ्छपिञ्छवत् । तमाल कुसुम मयूरवर्हवत् रुचिरं मनोहरं मेघश्यामभित्यर्थः ।

मारु। ततस्ततः।

मन्दा। ततश्च।

सेयं कन्या किमपि विशिखैर्मान्मथैः पीड्यमाना
सीदद्गात्री दर मुकुलितापाङ्गमालोकयन्ती
प्रापद्गर्भं हृदय समनुध्यात तत्सङ्ग सौख्या
प्रासोष्टाव प्रचकित मतिः पत्रजाले कुमारम्॥

मारु। एक एवहि समयो देवता गर्भाणां धारण प्रसवयोः। ततस्ततः।

मन्दा। ततश्च। दिवो गन्धर्वहस्तामदूषित कन्याभावामनुगृह्णन् अन्यासामपि हृदयक्षोभ माशङ्कमान स्तत्रैव तिरोऽभूत्। सापि पुनर्वात्सल्यचरितस्तनापि पितुर्बिभ्यती लतापल्लव तल्पिमे निधाय तं बालं तत्पालनार्थञ्च वनदेवतां याचमाना सवाष्पं स्वं धाम जगाम।

मल्लिका। सदयम्। को उण रक्खओ अरसं मि माइपिइपरिच्चेत्त स्स कुमारस्स।

मन्दा। अथ पर्य्यन्तभाजो भगवतः कुम्भयोने राश्रमात् समिदाहरणागतैर्मुनिदारकै रुद्धृतो नीतः समर्पितश्च महर्षेः करे।

मारु। सहर्षं। ततस्ततः।

मन्दा। ततश्च।

लोपामुद्रास्वतनयमति प्रस्नुतस्तन्यपायी
काले काले कलश जनुषा क्लृप्तसंस्कारवर्गः।
हस्ताद्धस्तं मुनिजन वधू मण्डलैर्नीयमान-
स्तत्र स्थाने स किल ववृधे चक्षुषां बालचन्द्रः॥

माठ। अहो पुण्यवानयं बालः। यतो भगवतो दुर्लङ्घ्य शासन स्तम्भित विकट विन्ध्याचल विजृम्भणस्य कुम्भयोनेः पादोपकण्ठ मगमत्। सश्लाघं। वचसां दूरे खलु स भगवान् मुनि चक्रवर्त्ती।

प्राक् पाणिपल्लव पुटी चुलकी कृतेन
सत्यं समुद्र सलिलेन समं निपीतः।
दृष्टा ततोऽपि विपुलं हृदयं तदीय
मध्यास्त सुस्थिर मनन्य रुचिर्मुकुन्दः॥

मलि। सकौतुकं। भअवदि! तस्स वालस्स कीलिआइं सुणिदुं अहिलासो मे।

मन्दा। स खलु वर्द्धमानः।

क्रमलोल मुग्ध करपल्लव स्थितौ
अलिकान्त चञ्च दलिकान्त कुन्तलः।
मृदु जानु सञ्चलन मञ्जदरङ्गणन्
मथि किङ्किणी मणमरिङ्गदङ्गणे॥ (८)

ततश्च क्रमात्।

मुहुरिभ कलभानां कर्णं मामोटयन्तं
मृगपति पृथुकानां पाटयन्तं सटान्तम्।
अविनय वत मा मा वत्स हिंसां कुरुष्वे-
रिति मुनिजन एनं स्नेह गर्भं व्यरीतृणीत्॥ (९)

---

(८) अलिकान्ते भालप्रदेशे चञ्चन् अलिरिव कालः कुन्तलो यस्य स तथाभूतः।

(९) व्यरीतृणीत् वरोदेत्यर्थः।

मारु । सत्कोण्ठं । स्वगतं । कथमेतत् कथा श्रवणात् किमप्युन्मनायित मिव विभर्मि । प्रकाशं । ततस्ततः ।

मन्दा । ततश्च कालेन ।

शृङ्गार सागर विजृम्भणचन्द्रिकोत्थ
मुन्मादनौषध मनङ्ग मतङ्गजस्य ।
राग प्रवाल परिपोषवसन्त मासं
लेभे वयः स सुकृतं वनितेक्षणानाम् ॥ (१०)

नवमा । जनान्तिकं । कालिन्दि! पेच्छ पेच्छ भट्टिदारिआए अस्सिं कहासव णम्मि सविसेसो आअरो ।

मारु । ततस्ततः ।

मन्दाकिनी । आश्चर्यं । अति दुर्घटस्यापि घटने पाटवी खलु भगवान् परमेष्ठी । सहि कदाचिदुटजाङ्गण प्ररूढ़ानां बालचन्दनलतानां पल्लवैः सवयो जनेन कल्पिते घर्म्माचिते तल्पे शयानः ।

अङ्गैः कोमलजातरूप कदली गर्भप्रियं भावुकै
रम्लानैरपि विभ्रमैरनुचरान्विष्वक् सृजन्तीं स्मरान् ।
लज्जालोल कनीनिका लुलितया सम्भावयन्तीं दृशा
स्वप्ने कामपि कामनीयक निधिं कन्यां समालोकत ॥(११)

---

(१०) शृङ्गारेति । शृङ्गार एव सागरः तस्य विजृम्भणे चन्द्रिकेव उत्थं उद्भूतमित्यर्थः । सुन्दतमिति पाठे । सुन्दतं प्रियं इत्यर्थः । अत्र सुन्दतं प्रिये इत्यमर वचनात् । सुन्दतमितीदं चिन्त्यम् । सुकृतमिति पाठे । वनितेक्षणानां सुकृतं दृक्तकयुवति जनसत् कर्म परिपाक भूतमित्यर्थः ।

(११) कमनीयकनिधिम् । सौन्दर्यैकस्थान मित्यर्थः ।

मारु। सोत्कण्ठं। ततस्ततः।

मन्दाकिनी। ततश्च।

तां मन्द मन्द हसितेन मुखाम्बुजेन
वालां समीपमभियातवतीं सलीलम्।
चेलाञ्चले करतलेन समालम्बे
यावत् स तावदवधूय गतेव निद्रा॥

मल्लिका। साकूतापं। स्वगतम्। कामिश्रणप्पहेसिणी खु णिद्दा सिविणयलद्धे वल्लह जणसमागमे असहणा विश्र तक्खणेच्चिश्र गच्छइ। प्रकाशम्। भश्रवदि! पड़िबुद्धेण किं पड़िवरणम्।

मन्दा। अथ विगलितधैर्य्यो हा प्रिये! दर्शनं मे
पुनरपि वितरेति प्रस्तुतार्त्त प्रलापः।
अहमहमिकयाङ्गे (१२) पातुकाना मजस्रम्
मनसिज विशिखानामेकमासीच्छरव्यम् (१३)

सर्व्वे। खेदं नाटयन्ति।

मारु। ततस्ततः।

मन्दा। ततश्च। सह पांशुक्रीड़नादारभ्य हृदयनिर्विशेषाभ्यां जनयित्वा पवनेन समर्पित..भ्याम् ...त्मानुरूपरूपशील विद्याशौर्य्यधैर्य्याभ्यां सवयोभ्यां मुपह्वरे (१४) पृष्टो न्यवेद..तस्या लक्षणानि।

---

(१२) अहमहमिकया अहं पूर्व्विकयेत्यर्थः। परस्परमहङ्कारेणेत्यर्थः। अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कारः इत्यमरः।

(१३) शरव्यं लक्ष्यमित्यर्थः।

(१४) उपह्वरे रहसीत्यर्थः।

माक । कथमिव ।

मन्दा ।

नवकुङ्कुमपङ्कवर्णमङ्गं नयने नीलसरोजपत्रदीर्घे ।

वदनं पुनरिन्दुरेव तस्माद्गलिता रोमलता कलङ्करेखा ॥ (१५)

अपि च ।

चूडापदे स्फुरति कोऽपि मणिर्यदंशुः

सौदामिनी भवति कैशिक नीरदस्य ।

हारावली च कुचयोरिभकुम्भभासो

र्लावण्यसिन्धुचलफेनततिद्युतिर्या ॥ (१६)

कलकण्ठः । जनान्तिकम् ।

स्वप्नकान्तां कामयमानस्य तस्य सख्योरावेगमालोच्य सम्प्रति ममापि विषीदति हृदयम् ।

मन्दा । नो वाप्यः कलहंस पक्षलुलिता न स्मेरसूना लता

नो गुञ्जद्भ्रमराः सरोजपवना नोद्दामचन्द्रा निशाः ।

नो तल्पानि मृणालभङ्ग कलितान्यासन्नमनङ्गज्वर-

क्रूरातङ्कधरस्य तस्य रतये तां सुभ्रुवं ध्यायतः ॥

मल्लि । सविषादम् । अम्महे अविसादसवभावं सिवि-णायकष्णं अहिल संतस्स किं णु सरणम् ।

---

(१५) वदनं मुखं पुनः इन्दुरेव तस्मात् मुखात् गलिता कलङ्करेखा रोमलता इत्यन्वयः ।

( १६ ) इभकुम्भभासोः कुचयोश्च हारावली स्फुरतीत्यन्वयः । या हारावली लावण्यमेव सिन्धुः तस्मिन् चलायाः फनपतेः द्युतिरिव द्युतिः यस्याः सा तथा भूता । द्युतिरिव द्युतिरिति पदार्थवृत्तिर्निदर्शना ।

मन्दा। यथायमपरपक्ष चन्द्रइव दिने दिने परिक्षीयमाणशरीरः कदाचिद्यामसावावग्रिष्टे दिवसे गिरिनदीतटीभाजश्चन्दनतरोः प्रच्छाय शीतले तले किसलयतल्पिमोपविष्टः कोमलकदलीव्यजनपाणिभ्यां चिन्ताशोकसमाकुलाभ्यां सवयोभ्यामुपास्यमानः करतलनिहितपरिपाण्डु दीनवदनो निःश्वसन् वाष्पमन्थरया दृशा गगनदर्शं * यदृच्छयाऽऽलोकत। तत्र च। मुक्तावदात नयनान् पाटलचञ्चून् गृहीतविसवलयान् शशधरवलक्षगतो ददर्श गगनाध्वजाङ्घिकान् हंसान्। (१७)

मालु। सकौतुकम्। ततस्ततः।

मन्दा। तत्रैक केन विसकाण्डधिया खगेन
चञ्च्वा विदश्य कथमप्यपनीयमानः।
वेगाच्युतोऽस्य तल्पिमे निपपात कोऽपि
हारः शरद्विशदचन्द्रमरीचि गौरः॥

कल। विहस्य। उपकृतं दैवेन हंसस्य यो मृणालधिया केवल चञ्चूखेदाय तं बभार।

मालु। सस्मितम्। ततस्ततः।

---

* गगनदर्शम्। यद्यद्गगनं पश्यति तत् तत्सर्वं इत्यर्थः। तथाच निखिलं गगनमिति यावत्। कर्म्मणि दृशिविदोः साकल्ये इति णमुल्। अलोकत अद्राक्षीत्।

(१७) गगना ध्वनि आकाशमार्गे जाङ्घिकान् जङ्घाकारिकान् धावनचतुरानित्यर्थः जङ्घाकारिक जाङ्घिका वित्यमरः।

मन्दा । ततश्च पतन्तमेव तं विस्मयहर्षोत्फुल्लनयन करतलेन गृहीत्वा सखाया वाचयन्तौ ।

पुलकयति वपुर्मे स्पृष्टमात्रोऽपि हारो
ध्रुवमयमलसाभ्यां स्वप्नदृष्टो मया प्राक् ।
हरिमणिरयमग्रे प्रत्यभिज्ञायते य-
स्तनयुगमसितेन प्रावृणो दंशुकेन ॥ (१८)

कल । सवितर्कम् । एतेन सा क्वचिदस्तीति कल्पनीयं तैः ।

मल्लिका । आत्मन स्तनाग्रे हारं विलोक्य । स्वगतम् । अस्मि अज्ज उत्तेण दिस्सन्ति हारस्स मज्झे हरिमणीअत्थि ।

मन्दा । अथ तां हारलतां अधिकन्धरमारोप प्रियतमापरिरम्भमिव अनुभवं स्तदन्वेषणाय विधृतोत्साह सञ्जात प्रत्याशाभ्यां सह सखिभ्याम् क्रीड़ादना पृच्छैरव भगवन्तं कुम्भयोनिं अम्बरपथेन कौवेरीं दिशं प्रास्थत ।

मारु । युज्यते यतो हंसानामागमः सैव दिगुपगम्या ।

मन्दा । प्रतिष्ठमानश्च ।

---

(१८) पुलकयति इति । स्पृष्टमात्रोऽपि हारः मे वपुः कर्म्म पुल कयति । अयं पुलकोद्भेदकरोहारः मया प्राक् अलसाभ्यां स्वप्नदृष्ट ध्रुवं सत्यम् । अत्रयुक्तिमाह यः हरिमणिः असितेन नीलेन अंशुकेन अल्पकिरणेन । अल्पे इति कन् । स्तनयुगं कर्म प्रावृणो आच्छादयतिस्म । अयं हरिमणिः इन्द्रनीलः । अग्रे पुरस्ता प्रत्यभिज्ञायते प्रत्यभिज्ञेव आचरति । प्रज्ञानार्थकात् प्रत्यभिज्ञा पदा कर्त्तुः क्यङ्न्यादिना । क्यङि क्यङ् मानिनोश्चेति पुंवद्भावे अकृ सार्वेति दीर्घे सिद्धम् ।

सोऽयं रराज रजनीकरसुन्दर श्री-
रालोलहार किरणच्छुरिताम्र गर्भः।
आश्चर्य निश्चलकनीनिक लोचनाभि-
रालोकितो मुहुरमर्त्य नितम्बिनीभिः॥

मार। ततस्ततः।

मन्दा। ततश्च। मत्तभ्रमभ्रमरवधूस्तनघातकुम्भ
कुम्भस्थलस्खलन जर्जरितोर्म्मिमालाम्।
सप्तर्षिमण्डलनिषेवित कूलदेशम
पश्यन् जगाम स पुरन्दरलोकसिन्धुम्॥

मार। ततस्ततः।

मन्दा। तत्र च। कल्पतरूणां निकटे।
सकलसुमनः सौरभ्याणां प्रपञ्चयितुः सुतम्
मलयमरुतो दृष्ट्वा प्राप्तं मनोभवमोहनम्।
मुदितमतिरम्लानां मालां बबन्ध मधुच्युतम्
विनयनमिते मुग्धे कण्ठेऽस्य नन्दनदेवता॥ (१९)

मार। त्वद्वचसि मल्लिका दत्तां मालां वीक्षते।

मन्दा। ततश्च।
तत्सौरभानुचलितैः पटलैरलीनां
विष्वक् प्रवर्त्तित कलिन्दसुता प्रवाहः।

---

(१९) सकलेति। सकल सुमनः सौरभ्याणां प्रपञ्चयितुः विस्तार-
यितुः गन्धवहस्येत्यर्थः।

गन्धर्वगीतरव मूढ़ कुरङ्गयूथं
गौरीगुरुम् (२०) गगनचुम्बितटं प्रपेदे ॥

माक । ततस्ततः ।

मन्दा । ततश्च । तच्चितस्खलितमाया गगनसिन्धोरुप कूलं उन्मदविद्याधरीवदनाम्बुजगण्डूष शीधुसेकविकस्वर केसरम् (२१) कोमलकङ्केलि ताड़नसतृष्ण किन्नरकामिनी पाटलचरणाम्बुजजल्पाकमणितुलाकोटिमधुरनिक्वाणझल झलशीकरं गर्व्वितगन्धर्वललनातुङ्गकुचकलशा लिङ्गन पुलकितकुरवकं उद्भ्रान्तभृङ्गपटलघटितकपटाम्बुद दर्शनताण्डवितशिखण्डिमण्ड मण्डितकनककदली मण्डल मण्डपं षड़्योजनविस्तृतमाराममवगाह्य ।

---

(२०) गौरीगुरुं हिमाचल मित्यर्थः ।

(२१) उन्माद विद्याधरी वदनाम्बुज इत्यादि मद्ये । उत्कृमदो यासां ताश्च ता विद्याधर्य्यश्च तासां वदनाम्बुजगण्डूषशीधूनां सुखगण्डूषा सवानां सेकेन विकस्वरा विकासिनः केसराः पुन्नाम तरवो यस्मिन् तं तथाभूतं कामिनीवदन मदिरायाः पुन्नागदोहलत्वा दिति भावः । कोमलानि मृदुलानि कङ्केलिताड़ने अशोकताड़ने सतृष्णानि यानि विद्याधर कामिनीनां पाटल चरणाम्बुजानि तेषु जल्पाकानां वाचालानां मणितुलाकोटीनां रत्नमञ्जरीणां निक्वाण झलझलैः शीकरः प्रचुर स्तम् । कामिनी पादताड़नस्य अशोक दोहलत्वादिति भावः । गर्वित गन्धर्वललना तुङ्ग कुच कलसालिङ्गनेन पुलकिताः कुसुमिताः कुरवकाः यस्मिन् तं तथा भूतम् । ललनालिङ्गनस्य कुरवक दोहलत्वादिति भावः । अत्र दोहलत्वे प्रमाण वचनानि तु दोहल शास्त्रे द्रष्टव्यानि विस्तर भयान्न लिखामः ।

उन्नततुङ्ग कनकध्वजदण्डशृङ्ग-
चीनांशुकोल्लिखितकेसरि पुङ्गवाङ्कम् ।
कैलासकूटधवलोन्नत मालुलोके
कात्यायनीभवनसौधमुदात्तकीर्त्तिः ॥

माठ । स्वगतम् । दृष्टचर इवायं प्रदेशः । प्रकाशम् । तस्ततः ।

मन्दा । ततश्च तत्र प्रविश्य प्रणम्य चरणमम्बिकायाः
ो मण्डपैकदेशे स्फाटिकीं वितर्हिं मध्यासीनां कामपि ।
ा विघ्नोपसर्गाऽनपहृतनियमस्थैर्यया मध्यनाड़ी
श्रेणीनिगूढ़ां हृदयसरसिजे व्यक्तमुद्ध्यमाने ।
तानं वीक्षमाणां स्फुटपुलकतनुं शान्तगम्भीरवेषां
ाणीहितस्मिताक्षीविनयनतशिरा वर्णिनीं सिद्धयोगाम् ॥(२२

(२२) बुध्येति । विघ्नोपसर्गैः अनुपहृतं नियमस्थैर्यं यस्यास्तया
ाभूतया बुध्या मध्यनाड्याः सुषुम्णायाः पर्वश्रेणीषु प्रासाद सोपान
रेख क्रमादुपर्युपरि श्रेणी भूत पर्वरन्ध्रेषु इत्यर्थः । निगूढ़ां
हञ्च प्राणां सुषुम्णा मार्गे प्राणनिरोध पूर्वक मनस्थिरी भावात्मिकां
ोन्मनीमपि गता स्थितिभावः । उक्तञ्च हठप्रदीपे । यावद्बद्धो
ाद्देहे यावच्चित्तं निरञ्जनम् । यावच्चक्षुर्भ्रुवोर्मध्ये तावत्कालभयं
ः । विधिवत् प्राणसंयामै र्नाडीचक्रे विशोधिते सुषुम्णावदनं भित्वा
ाविशति मारुते । यो मनः सुस्थिरीभावः सैवावस्था मनोन्मनीति
श्च । सुषुम्णावाहिनि प्राणे शून्यं विशति मानसे । तथा स सुक्तः
ंाणि निर्मूलयति कर्मवित् । इति । अत्र शून्यपदं सुषुम्णा मार्ग-
चकम् । उक्तञ्च । सुषुम्णा शून्यपदवी ब्रह्मरन्ध्रं महापथः । इति ।
ारस्तु । ध्यात्वा सुषुम्णा सम्भेदं कृत्वा वायुञ्च मध्यगम् । छित्वा तु तां

वह्निस्थाने प्राणं रन्ध्रे निरोधयेदिति । अपिच । द्विसप्तति सहस्राणि नाड़ी द्वाराणि पञ्जरे । सुषुम्णाशाम्भवी शक्तिः शेषास्त्वेव निरर्थकाः । वायुः परिचितो यःस्मात् अग्निना सह कुण्डली बोधयित्वा सुषुम्णायां प्रविशेदनिरोधतः । सुषुम्णा वाहिनि प्राणे सिद्धत्येव मनोन्मनी । अन्यथा विविधाभ्यासाः प्रयासा येव योगिनाम् । पवनो बध्यते येन मनस्तेनहि बध्यते । इत्यादिना । मनोयत्र विलीयेत पवन स्तत्र लीयते । दुग्धाम्बुवत् संमिलितौ सदैव तुल्यक्रियौ मानसमारुतौ च । यावन्मनस्तत्र मरुत्प्रवृत्तिः यावन्मरुत्तत्रमनः प्रवृत्तिः तदेक नाशादपरस्य नाशः एक प्रवृत्तेरपरप्रवृत्तिः । अध्वस्तयोश्चेन्द्रिय वर्ग वृत्तिःविध्वस्तयोर्मोक्षपदस्य सिद्धिरिति । अन्यच्च यावन्नैव प्रविशति चलो मारुतो मध्यमार्गे इत्यादि च । मध्यनाड़ी पदेन सुषुम्णैवोच्यते । तदुक्तम् । गङ्गायमुनयोर्मध्ये । वालरण्डा सरस्वती वलात्कारेण गृह्णीयात् तद्विष्णोः परमं पदम् । इडा भगवती गङ्गा पिङ्गला यमुना नदी । तयोर्मध्ये प्रयागन्तु यस्तं वेद स वेदविदित्यादि अनेन हठ योगानुष्ठिति वर्णिता । अतएव व्यक्तं उद्बुध्यमाने विकासं प्राप्नुवन्ति । तदुक्तम् । सुप्ता गुरुप्रसादेन यदा जागर्त्ति कुण्डली तदा सर्वाणि पद्मानि भिद्यन्ते ग्रन्थयोऽपि च । प्राणस्य शून्यपदवी यदा राज पथायते । तदा चित्तं निरालम्बं तदा कालस्य वञ्चनमिति । हृदयसरसिजे हृदयान्तर्वर्त्तिनि पुण्डरीके अष्टदलात्मके अधिकरणे स्थित मिति शेषः । आत्मानं परमात्मानम् । उक्तञ्च पद्मकोश प्रतीकाशं हृदयं चाप्यधोमुखम् । अधोनिष्ट्याविततस्यान्तु नाभ्या मुपरि तिष्ठति । हृदयं तद्विजानीयात् विश्वस्या यतनं महत् । सन्ततं शिराभिस्तु लम्बत्याकोश सन्निभम् । तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् । तस्य मध्ये महानग्निर्विश्वार्चि र्विश्वतोमुखः । सोऽग्रभुग्विभजन् तिष्ठन् आहार मजरः कविः । सन्तापयति स्वन्देहं आपादतल मस्तकम् । तस्य मध्ये वह्निशिखा अणीयोर्द्ध्वा व्यवस्थितः । नीलतोयद मध्यस्था विद्युल्लेखेव भास्वरा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । इति । सु सुष्ठु वीक्षमाणां साक्षात् कुर्वतीं अनेन राज यो-

भारु । ततस्ततः ।

मन्दा । ततश्च । तया सह अहमुत्थाय व्याहृतस्वागतया चिरपरिचितयेव सम्भाव्यमानः क्षणमुपविष्टो नातिदूरभाजि लतामण्डपे दत्तश्रुति (२३) रश्रौषीत् लयच्छिन्नानि द्रुत-मध्यविलम्बितानि ।

रमयन्तिका । जनान्तिकम् । सहि मल्लिए ! किं णु रसा-अणं खु एसा कहा ।

---

गानुष्ठितिः वर्णिता । अतएव स्फुट पुलक तनु व्यक्तीभवत्तद्दर्शना नन्दानुभावभूतरोमोद्गमां शान्तगम्भीरवेशां सिद्धयोगां फलितयोगां ननु फलिष्यमाणयोगा मित्यर्थः । वर्णिनीं ब्रह्मचारिणीमव्यूढ़ां विस्मिताक्षः उत्फुल्लनयनः विनयनतशिराः अद्राक्षीत् ।

( २३ ) दत्तश्रुतिः सन् लयच्छिन्नानि लयैः तालान्तरालवर्त्ती यः कालोऽसौ लयनाह्वय इत्युक्त लक्षणैः कालविशेषैः छिन्नानि परस्परस्पर्श रहितानि द्रुतमध्यविलम्बितानि क्रमात्तत्त्वौघ घनाख्यान् कालविशेषान् इत्यर्थः । अश्रौषीत् अशृणोत् । तथाच नृत्यध्वनिं शुश्रावेतिभावः ।

* लयः दशतालप्राणान्यतमः तालान्तरालवर्त्ती लयनात्मकः काल-विशेषः । उक्तञ्च प्रस्तारे । कालो जातिः क्रियाऽङ्गानि मार्गग्रह कलालयः । यतिः प्रस्तारकश्चेति तालप्राणा दश स्मृताः । तत्र तालान्तरालवर्त्ती यः कालोऽसौ लयनाह्वय इति च । तेन छिन्नानि पृथक् पृथक् त्वेन दर्शितानि द्रुतमध्यविलम्बितानि दक्षिणवार्त्तिक चित्रा-परनामधेयाः क्रमाद्द्विचतुरष्टमात्रात्मकाः तालप्राणान्यतमाः कलाः इत्यर्थः । तत्र ध्रुवाऽपरनाम्नी तुर्याख्या एकमात्रा च कला प्रसिद्धा सा पुनरत्राऽप्रस्तुता । उक्तञ्च । कलाः स्युस्तत्र चत्वारो ध्रुवश्चित्रश्च वार्त्तिकः । दक्षिणश्चेति तत्र स्युर्ध्रुवके मात्रका कला । शेषेषु द्वे चतस्रोऽष्टौ क्रमान्मात्राः कला भवेत् । एवैव कथ्यते लोके विलम्बो मध्यमो द्रुतम् । तुर्यश्चेति तदा कालः संज्ञायां गायकोत्तमैः इति ।

मल्लि। सहि! मह उण अस्सिं कहा सवणे किं वि किं वि उस्सुअं विअ हिअअम ।

मन्दा। अथ तया वर्णिन्या सादरं महाभाग! दिष्ट्या भूषयस्यमुं प्रदेशम् वर्ण्यसे खलु मलयगिरिकटक प्रत्यागतैः सोत्कण्ठं गान्धर्वशौवतैः। अस्ति चात्र विमलयशोराशिवितानित प्रपञ्चस्य विद्याधरामात्य चक्रवर्त्तिनो विश्वावसोर्विलास लावण्यमयी कन्या। किं बहुना। यस्याहं सोपहृतममुं हार मुरसा सम्भावयति महाभागः सैवेयं कन्यका पर्य्यन्तभाजिलता भवने देवीं भवानीं कन्दुक क्रीड़ितेन आराधयति। श्रूयते खलु भूषणध्वनि स्तन्नच्छामो। वयमपीति व्याहृते हर्षविस्मय स्तिमितमति स्तयैव दर्शितमार्गः सह सखिभ्यां तमेव प्रदेश मगमत्।

मारु। सहर्षम्। दिष्ट्या गगनलताम् कामयमानस्य सत्यैव सा जाता ततस्ततः।

मन्दा। ततश्च।

भृङ्गारचामरकलापदुकूलवीटी
क्रीड़ा शुकव्यजन रत्नकलाचि हस्ताः।
आत्मावलोकनकुतूहलयार्पिताक्षीः
गच्छन् ददर्श परितः परिवारकान्ताः॥ (२४)

ततश्च।

---

(२४) भृङ्गारेति। भृङ्गारः सौवर्ण पात्र विशेषः भृङ्गारः कनकालुकेत्यमरः। वीटी ताम्बूली रत्नकलाचिः रत्नमयः ताम्बूल स्थापनपात्र विशेषः भुम्भूर कुसुमाकृतिः।

अत्रालोकय लोचनोत्सवमिति ब्रूतेस्म सा वर्णिनी
यावत्तावदसौ विभूषणभ्रणात्कारानुयातेक्षणः।
तामालोकत लोभनीय सुषमापियूषधारोत्करै
र्वल्गी सद्मनि वामुंचीव कनकस्निग्धां तडिद्वल्लरीम्॥ (२५)

माध। सोत्कण्ठम्। ततस्ततः।

मन्दा। ततश्च। सा त्रिभुवनविजयसमये विरिञ्चदत्ता स्वर्गाभ्यास पाटवशंसिनी हस्तोपायन पुत्रिकेव देवस्य मकरकेतनस्य (२६) विविधविरचितशारी विशेषं आरब्ध विभ्रमभ्रमीवेगशिथिलबन्ध धम्मिल्ला पातिमाल्य कुलं

---

(२५) अत्रेति। विभूषण भ्रणात्कारानुयाते चक्षः सन् वल्गी सद्मनि लोभनीय सुषमापियूष धारोत्करैः उपलक्षितां तां कम्मे वाम्मुचि जलदे कनकस्निग्धां तडिद्वल्लरीमिव इत्युपमा आलोकत अपश्यत्।

(२६) सेति। देवस्य मकरकेतस्य त्रिभुवन विजय समये। सर्गाभ्यासपाटव शंसिनी स्वसृष्टि सामर्थ्य प्रकाशिका विरिञ्चेन ब्रह्मणा दत्ता हस्तोपायनपुत्रिकेव अजस्रकरधारणोपयोग्युपायन भूतशाल भञ्जिकेव स्थितेत्युत्प्रेक्षा। सा कन्या कर्त्री विविधाः विरचिताः शारीर विशेषाः कन्दुकक्रीड़ाव्यवहारादितरव्यवहारविशेषाः इत्यर्थः शारिर्ना-क्षोपकरणे स्त्रियां शकुनिकान्तरे। युद्धार्थगज पर्य्याणे व्यवहारान्तरेऽपि-चेति मेदिनी। खैरालापादिति यावत्। यस्मिन् कर्म्मणि तद्यथा स्यात्तथा अखिल सखीभिर्म्मण्डलेन मण्डलाकारेण विहिताः कृताः विविधाः अनेक प्रकाराः वाटाः मार्गाः यस्मिन् कर्म्मणि तद्यथा स्यात्तथा वाटो मार्गे हतिस्थाने इति मेदिनी। जनिता स्वेन स्वस्मिन्नुत्पादिता क्रीड़ा यस्मिन् कर्म्मणि तद् यथा स्यात् तथा किञ्चिद्व्रीड़या सार्द्ध मित्यर्थः। एवमवशिष्टाना मपि क्रिया विशेषण तयैवान्वयः। अक्रीड़त् चिक्रीड़।

आलोललोचनोत्पलविषयीकृत पतितोत्पतितकन्दुकताड़नाकुलकरकमलपल्लवित पुरोभागं अवनमनोन्नमनवेपितस्तनकुम्भत्रुटितकञ्चुलीकं अनुक्षणाग्रक्षिप्तभङ्गभुग्नमध्यतलं अङ्कुरितघर्मकणसंहति भङ्गीकोमल धवलदुकूलं निविरीसनितम्बवाचालकाञ्चीकलापं अरुणाङ्घ्रि पल्लवनिष्ठ्यूतयावकलवाङ्कितमणिकुट्टिमं अखिलसखीमण्डलविहितविविधचाटुं जनितव्रीड़मक्रीड़त् ।

मारु । ततस्ततः ।

मन्दा । ततश्च । स तूर्णमुपसृत्य विस्मृतनिमेषाभ्यां लोचनाभ्यामापिबन्निव तां उपह्वरे सवयोभ्यां पृष्टोऽकथयत् ।

तद्वदनं ते नयने साभ्रूः सा कन्धरा स बिम्बौष्ठः ।
तौ वक्षोरुह कुम्भौ सा श्रोणी ते पदे च सैवेयम् ॥ (२७)

अथ तदवस्थादर्शन द्विगुणितमन्मथः पुनरप्युपह्वरे ताविदमवादीत् ।

झलं झलितकङ्कणं चलित तुङ्गपीनस्तनं
चलत् कुटिल कुन्तलं चपलनीलनेत्रोत्पलम् ।
श्रमाम्बु लुलिताननं श्रवणपातितोत्तंसकं
निहन्ति मम मानसं नहि नहि ध्रुवं कन्दुकम् ॥

मारु । जनान्तिकम् । सखे कलकण्ठ ! मल्लिकापि द्वीपान्तरजुषा चित्रकारेण हिमगिरि लतागृहे ( २८ ) कन्दुकक्रीड़ाखिन्ना लिखिता । प्रकाशं ततस्ततः ।

---

(२७) तदिति । वदनं तत् प्राक् स्वप्रदृष्टं एवमेव नयने ते भ्रूः सा इत्यादौ च तच्छब्दस्यार्थः ।

(२८) हिमगिरि लतागृहे इति । शैलेन्द्रो हिमवानयं इत्यारभ्य

मन्दा। ततश्च सा।

मूर्त्तं वसन्तमिव साङ्गमिवाङ्गयोनिं
तं वीक्ष्य विस्मयविलासतरङ्गिताक्षी।
तत्तद्भ्रमीबलनदत्त कटाक्षमाला
क्रीड़ाविशेषमभिपूर्य्य शनैर्व्यरंसीत्॥ (२८)

माधु। ततस्ततः।

मन्दा। ततश्च सा।

कन्दुकगर्भेणैवाञ्जलिना प्रणम्य तां वर्णिनीम्।
क्रीड़ावेगविलम्बिनः श्रमकणा कीर्णंत्कपोलस्थला
मुग्धे नाङ्गुलि पल्लवेन शनकैरुत्सारयन्ती कचान्।
पश्यन्ती तमरालतारकरुचिस्निग्धैर्दृशोरञ्चलै
र्लीला बालसमीरकम्पितलतालीला मधत्त क्षणे॥(३०)

ततश्च सः।

मुक्ताहारैरिव हरिमणिसूत्रतचित्रान्तरालैः
ज्योत्स्नाजालैरिव निपतितैः साकमङ्कप्रभाभिः।
गङ्गापूरैरिव च यमुनावेणिसम्भेदहृद्यै
राकीर्णोऽभूदसितधवलैरायताक्ष्याः कटाक्षैः॥ (३१)

---

क्लान्ता कन्दुक खेलनेन लिखिता सञ्जीवितं मल्लिका इति प्रागुक्त प्रकारेणेति भावः।

(२९)तत्तद्भ्रमी बलन दत्त कटाक्षमाला। तासां तासां भ्रमीणां कन्दुकखेलन भ्रमीणां वलनेषु परिवृत्तिषु दत्ता कुमाराय प्रेरिता कटाक्ष माला यया सा तथा भूता सतीत्यर्थः।

(३०) बालसमीर कम्पित लतायाः लीलेव लीला तां इति पदार्थ वृत्तिर्निदर्शना।

(३१) मुक्ताहारैरिति। हरिमणि रिन्द्रनीलः तेन स्यूत-

तस्मिन् हि समये ।

द्राघीयांसश्वसितमरुतो घर्मलेशा मुखेन्दौ

गात्रे सादो दृशि मुकुलता वेपथु रूरुकाण्डे ।

कृत्स्ना स्ता स्ता स्मरविकृतयः केलिखेदेऽपि तुल्याः

सर्वाङ्गीणस्तदपि सदृशो भेदको रोमभेदः ॥ (२२)

नवमा । जनान्तिकम् । सहि मल्लिए ! कीस उम्मणा-अंती विअ दीससि ।

मल्लिका । वाष्पायते ।

मन्दा ।

सस्वेदसङ्कलितसुन्दरेषु गात्रेषु तस्याः प्रतिबिम्बमानः ।

---

चित्रान्तरालैः मुक्ताहारैरिव, तथा अङ्गप्रभाभिः श्यामरूपाभिः साकं निपतितैः ज्योत्स्ना जालैरिव, तथा यमुनावेण्याः सम्भेदः सम्पर्कस्तेन रूढैः गङ्गापूरैरिवच स्थितैरितिशेषः । आयताक्ष्याः अमितधवलैः कटाक्षै राकीर्णोऽभूत् । अत्र वर्णनीयानां अमितधवल कटाक्षाणां विशेषण विशिष्ट मुक्ताहारादि बहूपमानदानात् बहूपमालङ्कारः ।

(२२) द्राघीयांस इति । ऊरुकाण्डे वेपथुः कम्पश्च आसन् इत्य-ध्याहारेणान्वयः ऊरुकाण्डे वेपथुरित्यनेन वक्ष्यमाणस्मरविकृतेः साफल्यं सूच्यते तदुक्तं निमित्त निदाने ऊरोः स्पन्दादुरति विन्द्यात् ऊर्वोः स्पन्दात् सुवाससः इति । कृत्स्नाः समस्ताः तास्ताः दीर्घश्वास घर्म-लेशादयः केलिखेदेऽपि क्रीड़ाजन्य श्रमेऽपि । तुल्याः समानाः स्मरविकृतयः मन्मथविकाराः तदपि तथापि सदृशः सर्वाङ्गीणः सर्वाण्य-ङ्गानि व्याप्नुवन् रोमभेदः रोमाञ्चः कर्त्ता भेदकः केलिखेदान्यत्व प्रकाशकः । दीर्घनिश्वसित स्वेदादीनां श्रमस्मर विकारोभयानुभावत्वे ऽपि तयोः श्रमस्य पुलकोद्गमो नानुभाव इत्यतः केलिखेदभिन्नत्वेन स्मर-विकारत्वं निश्चीयत इति भावः ।

लावण्यदुग्धाब्धितरङ्ग मध्ये तरन्निवेन्दुः चण मोचतेस्म ॥ (२२)

मारु। ततस्ततः।

मन्दा। अथ तां सा वर्णिनी वत्से ! सोऽयम्।

वासन्तिकस्य मरुतो दयितः कुमारः
कुम्भोद्भवेन मुनिना स्वयमेधिताङ्गः।
त्वामालिलोकयिषु रागमदस्य हि त्वं
आकर्ण्य किन्नरनुतं गुणमुत्सुकाशीः॥
अथ स्वागतेन सम्भावयेत्य कथयत्।

मारुत कलकण्ठौ। सश्लाघम्। भगवति ! सापि भगवती युष्मत्तो गुणैरन्यूनेति मन्यामहे। कथ्यतां अपि स्वागतमप्राचीत् सा कन्या।

मन्दा। न तावदसौ वाचनिकी (२४)

अपि तु। प्रागेव सा श्रवणजातदृढ़ानुरागा
तं प्राप्तवन्तमभिगम्य विमोहनाङ्गम्।
भूयोऽपि मन्मथविलासजुषः कटाचान्
माह्नोत्पलैः स्रजइवामुचदस्य गात्रे॥

मल्लि। जुज्जइ एदं। कहंणु णिसग्ग सालीण सहावो (२५)

---

(२२) लावण्य दुग्धाब्धितरङ्गमध्ये तरन् इन्दुरिवेत्युत्प्रेक्षा। चणं चणकालं प्रतिफलन समये इत्यर्थः।

(२४) न तावदसौ वाचनिकी। असौ स्वागत वार्त्ता वाचनिकी वचनसम्बन्धिनी न तावत्त वाचा स्वागत मपृच्छ दितिभावः।

(२५) निसर्गेण स्वभावेन शालीनः अधृष्टः स्वभावोयस्य स तथोक्तः स्यादधृष्टे तु शालीन इत्यमरः।

कुलकस्स आजणो सागमं वा हरदु। कहेहि देण महाभा-
एण तदो किं पड़िवस्सम् ।

मन्दा । अथ सः ।

लोभयन् भ्रमरमण्डलमारात्
सौरभेण मधुरस्य मुखेन्दोः ।
व्याहरद्दशनदीधिति पुञ्जैः
आकिरन्निव घनं घनसारम् ॥ (२६)

मारु । सकौतुकम् । कथमिव ।

मन्दा । भगवति ! किं स्वागतसम्भावनेन पश्य ।
सौहार्द्दमालिहृदयं सन्तोषस्मेर मेदुरा दृष्टिः ।
सम्भावना सतामियमन्यस्त्वाचारडम्बरः कथितः ॥ इति

मारु । साधु विदग्ध मधुरं वचनम् । ततस्ततः ।

मन्दा ॥ ततश्च । तयोरन्यतरेण सख्या हारोऽयं अत्र भवत्याः हंसमुखात् पतितो गृहीतोऽस्माभिः जरो क्रियतां भूयोऽपीति व्याहृते सखी पुनस्तस्याः महाभाग तारावलीव गगने हारावलीयं विराजतु महाभागस्यैव दोरन्तरे। दीयतां पुनरियं दिव्यपरिमला माला (२७) कुतूहलिनी खलु नो भर्त्तृदारिकेति सस्मितमकथयत् ।

---

(२६) घनसारं कर्पूरं घनसारश्चन्द्रसंज्ञ इत्यभिधानम् ।

(२७) दीयतामिति । दिव्य परिमला इयं माला पुनः मारुत कण्ठगता माला तावदित्यर्थः । दीयतामित्यन्वयः । अत्र हेतुमाह । कुतूहलिनीति । कुतूहलिनी खलु मारुतकण्ठगतमालाप्रेक्षिणी किल इत्यर्थः ।

मारु। ततस्ततः।

मन्दा। ततश्च सा सखी।

तेन प्रहृष्टमनसा स्वकरेण दत्ता
मादाय भृङ्गकलगीतगुणां स्रजं ताम्।
अग्राम्य काकुवचनतपमाण्य दृष्टे
रस्याः सली तमवसज्जयतिस्म कण्ठे ॥ (१८)

कल। किं तत्रापि हारमाल्ययोर्व्यत्ययः।

मन्दा।

अत्रान्तरे झटिति कञ्चुकिभिः समेत्य
विद्याधरेन्द्र सचिवस्य पितुर्निदेशात्।
दूता गृहानगमदङ्गजपीड़िताङ्गी
बाला मुहुर्वलितकन्धरमीक्षमाणा ॥

मारु। ततस्ततः।

मन्दाकिनी। गृहं गता च।

तमहीनभुजङ्गभोगबाहुं सुकुमारे वत मानसे वहन्ती।
विवशा शयनीविसीददङ्गं शयनीतसङ्गमसेवत श्वसन्ती ॥१८

अचिन्तयच्च।

अस्य खलु कस्याश्चिदतिशयालुपुण्यायामासक्तं हृदयम्।

---

(१८) न विद्यते ग्राम्यं अश्लीलं यासां तास्तथाभूताः काकवः ध्वनि-विकाराः येषां तानि अग्राम्य काकूनि तानि च तानि वचनानि च तैस्त्रपमाणा दृष्टिर्यस्यास्तस्यास्तथाभूताया इत्यर्थः।

(१९) अहीनौ अल्पौ यौ भुजङ्गौ तयोर्भोगवत् बाहू यस्य स तथोक्तस्तम्।

तथाहि । वर्णान्तरेण बिसकाण्डमहोदरेण
स्पृष्टं शरीरमकठोरकरीरमुग्धम् ।
प्रम्लायतीव किमपि श्वसितानिलेन
बिम्बाधरोऽपि कुरुविन्ददलाभिरामः ॥

नवमालिका कालिन्दी । जनान्तिकम् । सहि ! तुएवि उत्तरिज्जञ्चले महाभाअ पड़िच्छन्दं दट्ठूण एसो एव्व सुलोओ कहिओ ।

मन्दा । इति चिन्तयन्तीमिव तां विलम्बयाऽऽगता ताम्बूलकरङ्कवाहिनी तत् स्वयोभ्यामुपवर्णितं स्वप्न वृत्तान्तमखिलमकथयत् ।

मारु । ततस्ततः ।

मन्दा ।

बुध्वा तस्य चिरोपगूढ़निविड़ं प्रेमाणमात्माश्रयं
सा प्रत्यागत जीविता द्विगुणितानङ्गापि निह्नुवती ।(४०)
तद्रूपं (४१) विरहावपाण्डु मधुरं न्यस्तोत्तरीयाञ्चले
दोर्मूलेऽलिखताऽस्य चन्द्रधवलां तामेव हारावलिम् ॥

मल्लि । स्तनांशुकं दृष्ट्वा । स्वगतम् । एत्थ वि हार सहिदो अज्जउत्तस्स पड़िच्छन्दो ।

मन्दा । सोऽपि पुनः ।

---

(४०) द्विगुणितानङ्गापि द्विगुणीभूतस्मर विकारापि निह्नुवती तथाभूतत्वमाच्छादयन्ती सतीत्यर्थः ।

(४१) तद्रूपं तस्य कुमारस्य रूपं आकृतिमित्यर्थः ।

तस्याः स्मरन्नुदमनायत सद्म यान्त्या
सम्भ्रान्त भृङ्गगणवारण कैतवेन।
मध्ये सखि! त्रिकविवर्त्ति विलोकितैक
वक्षोजमर्द्धनयनाञ्चलवीक्षितायाः॥ (४२)

मार। ततस्ततः।

मन्दा। ततश्च।

उत्कण्ठा विनोदनाय चित्रफलके।
तं शैलं तां सरितं तद् वल्लीसद्म तां चकोराक्षीम।
कन्दुकखेलनखिन्नां अलिखत् कण्ठे च तां मालाम॥

नवमालिका कालिन्द्यौ॥ जनान्तिकम्। सहि मल्लिए!
तस्सिं वसन्तवणुज्जाणो लग्गाणि जहाहिं अह्नेहिं दिट्ठं
तुमं वि चित्त फलए एव्वं लिहिस्सामि (४३)

---

(४२) तस्या इति। सद्म यान्त्याः मध्ये सखि सखीनां मध्ये सम्भ्रान्त भृङ्गगणवारण कैतवेन अर्द्धं नयनाञ्चलवीक्षितं कटाक्षवीक्षणं यस्यास्तस्यास्तथाभूतायाः। वलगित कन्धर मीक्ष माणाया इत्यर्थः। तस्याः कन्यकायाः त्रिकविवर्त्ति यथा तथा विलोकितो। य एक वक्षोजः (वलित कन्धर वीक्षणकाले वीक्षण पार्श्व भिन्न वक्षोजसहितैक पार्श्वपरावृत्तेः सम्भवात् त्रिकविवर्त्त्यैक वक्षोजस्य वीक्षितत्वोक्तिः) तं स्मरन् सन् उद्मनायत उत्सुको बभूव। अभूत तद्भाव विषयात् भृशादिगणीयात् उन्मनः शब्दात् भवत्यर्थे क्यङ् सलोपश्च। सू। भृशादिभ्यो भुव्यच्वेर्लोपश्च हल इति। ततोङित्त्वात् कर्त्तर्यात्मनेपदे लङि उपसर्गसमानाकारं पूर्व्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियतेति ज्ञापितत्वात् उत्पदस्य पृथक्करणेन मनः शब्दात् प्रागटि प्रथमपुरुषैक वचनम्।

(४३) शैलेन्द्रो हिमावानयं प्रतितटं विद्याधरैराश्रित इत्याद्युक्तप्रकारेणेति भावः।

मन्दा। ततश्च। तत्सञ्चारसुभगे (४४) तस्मिन्नेवो-द्याने कथञ्चित् अतिवाहितदिवसशेषो विरहिजनाऽसुक-वलनकालभुजङ्ग्यां प्रवृत्तायां शर्वर्य्यां उदिते च पुरन्दर-हरिदङ्गनाश्रवणमौक्तिकताटङ्के भगवति पियूषभानौ दुःसहविरहानलदह्यमानः सखिभ्यां कल्पिते मृणालतल्पे पतिताङ्गः तामेव विद्याधरकन्यामनुस्मरन् असञ्जातनिद्रः कथमपि क्षपार्द्धमक्षपयत्॥

मारु। ततस्ततः।

मन्दा। ततश्च।

अदूरवर्त्तिनश्चन्द्रकान्तघटितस्य क्रीड़ापर्वतस्य शिखरे दत्तकर्णः।

निद्राविमूकसत्वे (४५) समये तस्मिन् धृताश्रुरश्रौषीत्।
करुणं कमपि विलापं कर्णायुष्यञ्च धैर्य्यमथनञ्च॥

मारु। कीदृशः स विलापः।

मन्दा। हा चूत! हा चम्पक! हा लवङ्ग!
हा मल्लि! हा मालति! हा कुरङ्गि!
हा हंसि! हा केकिनि! हा चकोरि!
स्मर्त्तव्यतामस्मि गता सखी वः॥ (४६)

---

(४४) तत्सञ्चारसुभगे तस्याः विश्वावसुनन्दनायाः सञ्चारेण सुभगे मनोहरे।

(४५) निद्रया विमूकाः वाग्व्यापारशून्याः सत्वाः जन्तवः यस्मिन् इति विग्रहः। सत्वं द्रव्ये पिशाचादौ व्यवसायस्वभावयोः गुणप्राणबलस्वान्तसत्ता स्वस्त्रीतु जन्तुषु इति नानार्थरत्नमाला। कर्णायुष्यं स्वविषयत्वेन मधुरत्वेन वा श्रवणेन्द्रिय तर्पकमित्यर्थः। धैर्य्यमथनं अतिकरुणत्वात् धार्य्यलुम्पकञ्चेत्यर्थः।

(४६) वः सखी युष्मदुपमेय भूततत्तदवयवशौभाशालित्वेन

अपिच।

देवि! प्रसूत भुवने! भगवति! भक्तानुकम्पिनि! भवानि!।
अन्यस्मिन् जन्मनि मे भर्त्ता भूयात् स मारुतकुमारः॥ इति

मारु। ससम्भ्रमम्। ततस्ततः।

मन्दा। तत् श्रुत्वा च साशङ्कमुत्थाय सह सखिभ्या-मारूढ़ क्रीड़ा पर्वतो ददर्श तामेव कन्याम्।

एकाकिनी सुरभि लम्बितदिव्यमालां
वाष्पायमाणवदनां मदनास्त्रभीताम्।
ध्यायन् मृणाललुलितालसकोमलाङ्गीं
बालां लतावलयवेष्टितकण्ठनालाम्॥

अथ झटिति उपसृत्य।

सुन्दरि! मा मा साहस माचर नन्वेष दासोऽहम्।
अन्यस्मिन् जन्मनि यं प्रार्थयसे भीरु कमितारम्॥

इति वदन्नेव लतावलयं छित्त्वा कण्ठमानयत्।

मारु। सहर्षम्। ततस्ततः।

मन्दा। ततश्च सा।

कन्याविरुद्धमभिसारमवेत्य मुग्धा
गौर्य्याः पुरो व्रत जिहासुरसूनवासम्।
तं वीक्ष्य वेपथु मती नमितानेनेन्दुः
व्रीडात् लिलेख चरणाग्रनखेन भूमिम्॥

मारु। ततस्ततः।

---

वयस्या अहं इत्यर्थः। अर्त्तव्यतां अत्तुं योग्यत्वं गता प्राप्ता अस्मि इत्यत्वहानिं प्रापयत्यस्मि इति भावः।

मन्दा । सबाष्पं निश्वस्य । हन्त कोऽपि नाम दैवमति वर्त्तेत । यतस्तस्मिन् सम्भ्रमे लतापाशच्छेदव्यापृतादस्य करात् च्युतं चित्रफलकं तत इतःस्खलनक्रमेण अधस्ता त्तरुमूले काकतालन्यायेन४६* तत्कालागतस्य सुलभमन्यु नाम्नो महर्षेः शिरसि न्यपतत् ।

सर्वे । विषादं नाटयन्ति ।

मारु । निश्वस्य । नह्यनन्तरायाः उत्सवाः । ततस्ततः ।

मन्दा । ततश्च ।

आबद्धभ्रुकुटीकरालवदनः स मुनि राः दुरात्मन् ! कन्याकामुक ! यतो रागजसत्त्व(४७)मनागसो मम शिरस्य- पोपतत् दारुफलकम् । अतः पत एव मानुषीं योनिं इयमपि कुलटा प्राप्य मानुषीभावं उपेत्य जन्मान्तरेऽपि प्रथम एव त्वत्सङ्गमे मूर्च्छत्विति अशनिमिव जलदः शापमसृजत् ।

मल्लि । वेपते ।

सर्व्वे । वाष्पं नाटयन्ति ।

---

(४६) * चित्रफलकं कर्त्तृ तत इतःस्खलनक्रमेण अधस्तात् तरु- मूले तत्कालागतस्य स्खलनकाले सम्प्राप्तस्य सुलभमन्युनाम्नो महर्षेः शिरसि काकतालन्यायेन काकागमनमिव तालपतनमिवेति समासे काकतालं तद्रूपोन्यायः काकतालन्याय स्तेन न्यपतत् पपातेत्यर्थः । यथा काकागमनसमये तालफलपतनं तथा महर्ष्यागमनसमये तच्छिरसि चित्र- फलकपतनमित्यर्थः । तथाच काकागमनसदृशं महर्ष्यागमनं ताल- फलपतनसदृशं तच्छिरसि चित्रफलकपतनमिति भावः ।

(४७) रागजसत्वं अनुरागजव्यवसायभूतं दारुफलकं चित्रफलकमित्यर्थः ।

मारु। हन्त महान् प्रमादः। ततस्ततः।

मन्दा। सवाष्पगद्गदं। तत स्तच्छाप दहन दग्धाङ्गाभ्यां ताभ्यां तत्क्षण एव विलिल्ये। (४८)

मारु। ततः। इत्यर्द्धोक्ते वाष्परुद्ध कण्ठस्तूष्णीं भवति।

मन्दा। अथ तौ सखायौ शाप श्रवण भय निमीलिते लोचने कथञ्चित् उन्मील्य।

नावैक्षेतामग्रे प्रियमित्रं नापि तां कन्याम्।
अपितु स्रस्तं तस्याश्चूड़ारत्नं तदुत्तरीयञ्च॥

मारु। ततस्ततः।

मन्दा। ततश्च। तयो रन्यतरः सुहृत् विरह जायमानं शोकं धारयितुं अपारयन् भगवति कात्यायनि प्रसीद जननान्तरे प्रियसुहृद एवानुचरो भूयासमिति प्रार्थयमानस्तस्यैव केलिपर्वतस्य भृगौ निपत्य सुहृद्गतामेव गतिं अयासीत्।

मारु। सनिर्वेदं। हन्त सर्वनाशोऽयमुपस्थितः।

कल। सश्लाघं। सौहार्द्दं सदृश माचेष्टितं तेन।

मन्दा। इतरः पुनः सखुर रात्तिं दर्शनेनाप्यधिक सञ्जात शोक मन्युस्तं चूड़ामणिं तञ्च सुहृत् प्रतिच्छन्द सुभगं दुकूलं तदपि चित्रफलकं सत्वरं गृहीत्वा धिक् त्वां मूर्ख नृशंस मुनिपाश कथं सर्वेषां नः सञ्जात मृत्यु-रसीति वाष्परुद्धनयनः पुनःपुन रनिन्दत्।

(४८) ताभ्यां कुमारकन्यकाभ्यां विलिल्ये लयनमभाजि इत्यर्थः। लीङ् श्लेषण इति दिवादिगणीयात् धातोर्विपूर्व्वात् आत्मनेपदिनो भावे लिट्।

मारु। सनिर्वेदं। सेयं ज्वलतोऽग्ने र्घृतवृष्टिः। ततस्ततः।

मन्दा। ततश्च। भूयः। प्रकुपितः स मुनिः यतः सुहृत् स्नेहेन राक्षस इव व्याहरसि तेन राक्षस एव भव। अयमिव ते मित्रं प्रत्युभेवत्विति उत्कीर्णं शापः स्वच्छन्द मगच्छत्।

मारु। दुर्लङ्घ्यं खलु विधातुर्वैशसं। (४८)

मन्दा। ततश्च तस्मिन्नपि सख्यौ दुकूलादि हस्त एव प्राप्त मुनि शापोचित वपु स्त्रासित सकल भूते जाते यातुधाने। कात्यायनी भवनवर्त्तिनो ध्यायन्नयन दृष्ट सकलार्थां।

तत्र हाहेति सम्भ्रान्ता वर्णिनी सा समागमत्।

गौर्य्याश्च स्निग्ध मधुरा गगने गो रजृम्भत।

मारु। सोच्छ्वासं। कीदृशी सा गीः।

मन्दा।

पुत्रीयतो रपत्ये स्यातां मङ्गलयो रिमौ भूमौ

तावितरेतर दत्तौ माला हारौ च सहजौ स्तां॥(५०)॥

अपिच।

दृतोऽपि सविशेष सौन्दर्य्यशालि विग्रह परिग्रहयो रनयो र्भविता परस्पर वर्द्धमानराग रमणीयः समागमः। सा पुन र्मुनि शाप प्रयुक्ता प्रथमसङ्गमे मूर्च्छा मूर्च्छाहर स्यास्य चूडामणेः स्पर्शमात्रेण शाम्यत्विति।

---

(४८) विधातुः वैशसं दैववैषम्यमित्यर्थः।

(५०) पुत्रीयतोः पुत्रकामयोरित्यर्थः।

मारुतः। सहर्षं। हन्त भगवत्यनुग्रहेण स्वतोऽयमजनि विशापः। अथ तयोः सख्योः का प्रवृत्तिः।

मन्दा। पुनश्च सा गौ रुद्चलत् योऽयं भृगौ निपतितः। सोऽपि एष इव सविशेष सुन्दर वपुर्विशिष्ट एव जातो भूयाद्दिवमेवमेवास्य परमं मित्रं। अन्यः पुनर्यातुधानो भूतः मित्रेणैव शत्रुणा निहतस्तत्क्षण प्रत्यापन्न स्वरूपो भूयात् भूयोऽपि स्निग्धः सखेति।

कल। दिष्ट्या तावप्यनुगृहीतौ।

मारु। भगवति! क्व ते महापुरुषाः किं प्रेयस्या समगमत्तरुणः।

मन्दा। विलोक्य। सहर्षं।

या सा कन्या स्मरजय रमा।

सवाष्पं मल्लिकामालिङ्ग्य। सा पुनर्मल्लिकेयं।

सर्वे विस्मयं नाटयन्ति।

मन्दा। योऽस्याः प्रेम्णः परमसि पदं मारुतस्त्वं स एव॥

नवमालिका रमयन्तिका कालिन्द्यः। सहर्षं। एत्थ णो संशयो।

मन्दा। एकं मित्रं कलय कलकण्ठाख्यं।

मारु। कलकण्ठमालिङ्ग्य। सखे! दिष्ट्या त्वामस्मिन्नपि जन्मनि पश्यामि।

मन्दा।

अन्यत् पुनस्तं माकन्दं यो रजनिचरतां त्याजितोऽभूत्त्वयैव॥(५१)

---

(५१) अन्यत् पुनः इतरन्मित्रं तु तं शम्बरक वञ्चकं माकन्दं

मल्लिकामारुत कलकण्ठाः मन्दाकिनी च हर्षातिशयेन मूर्च्छन्ति ।

इतराः । सविस्मयं ससम्भ्रमञ्च । हद्धि मुच्छिदा एदे । हन्त सोओ विअ हरिसो वि णिमित्तं एव्व मुच्छाए । ता सीअलेहिं आसासेह्म ।

मल्लिका । सत्वरं प्रबुध्यते ।

नवमा । सहर्षं । कालिन्दि ! सीमन्तमणिप्पहावेण तह णलं घिआ विअ सही मुच्छाए ।

मल्लि । सोत्कण्ठा स्मरणं । हन्त पसुत्तप्पडि बुद्धा विअ अज्ज सव्वं जाणामि तं तं वुत्तन्दं । सहर्षं । अम्महे भअवदि वि सा एव्व । मूर्च्छितान् तान् दृष्ट्वा सावेगं । हद्धि हद्धि किं मुच्छिदा एदे ।

कालिन्दी । मन्दाकिनीं धारयति ।

मल्लि । सहि रमअंतिए ! तुमंअ कलअण्ठं धारेहि ।

नव । सस्मितं । मल्लिए तुमं वि मारुअं ।

मल्लि । सहर्ष लज्जं । उत्सङ्गेन धारयन्ती मारुतं विलोक्य सवाष्पं स्वगतं । हन्त सिविणआदो आरहिअ एत्तिअं समअं महकिदे तह दुव्विसहं मअणसन्दावं अणुभूद वन्दो अज्जउत्तो । सगद्गदं । अज्जउत्त ! उट्ठेहि । तयोऽपि प्रबुध्यन्ते ।

मारु । मल्लिकामालिङ्गन् । सोच्छ्वासं । अयि मल्लिके !

तथागतं परां काष्ठां प्रेम त्वद्गोचरं प्रिये !

---

कर्म कलयेत्यनुषङ्गः । यो माकन्दः रजनीचरतां राक्षसत्वं तयैव त्याजितः इति योजना ।

साचाद्भूतमिवा भाति प्रागजन्म स्मरतोऽद्य मे ॥

मन्दाकिनीं प्रति। भगवति! अवगीत प्रभावे! (५२) भवतीमपि जानामि तामप्येतामिव व्यवहरन्तीम्!

अपिच।

अवगच्छामि साचात् सम्प्रति युष्माभिर्निवेदितं जननान्तरीदन्तम्।

एतानि पुनर्विशेषतो न मुञ्चन्ति हृदयं॥ (५३)॥

मल्लिकां विलोक्य।

यत् तत् कन्दुक खेलनं भ्रमिचलन्नेत्रांशुनीलाम्बरं
यत्तत्तात नियोगतो मयि मुहुर्दत्तेचणं प्रस्थितं।
किञ्चोद्बन्धन साहसे निशि मया छिन्ने लताबन्धने
व्रीड़ा साध्वस हर्ष शंसि वदनं यत्तच्च तन्वत्रा स्थितं॥(५४)

---

(५२) अवगीत प्रभावे। अवगीतः प्रभावो यस्या इति विग्रहः। पुनः पुनर्दृष्ट प्रभावे इत्यर्थः। मुहुर्दृष्टेऽवगीतं स्यादिति नानार्थरत्नमाला।

(५३) एतानि पुनः अनुपदं वच्यमाणानि तु इत्यर्थः। हृदयं न मुञ्चति।

(५४) अद्यापि हृदयाऽपरित्यागीनि कानि तानीत्यत आह। यत्तदिति भ्रमिषु कन्दुकभ्रमणेषु चलतोः नेत्रयोः अंशुभिः नीलं नीलवर्णं अम्बरं गगनं यस्मिन् कर्म्मणि तद्यथा भवति तथा कन्दुकखेलनमिति यत् तत्। तथा मयि दत्तेचणं यथा तथा तातनियोगतः प्रस्थितं इति यत् तत्। किञ्च निशि रात्रौ उद्बन्धनसाहसे लताबन्धने छिन्ने सति व्रीड़ा साध्वस हर्षशंसि वदनं यस्मिन् कर्म्मणि तद्यथा भवति तथा तन्वत्रा कत्रा स्थितमिति यत् तच्च। एतानि पुनर्न मुञ्चति हृदयमिति पूर्व्वेण सम्बन्धः। अथवा भ्रमिचलन्नेत्रांशुनीलाम्बरं इतीदं कन्दुकखेलनमित्यस्य विशेषणं एवमेव शेषमपि।

मन्दा । वत्स मारुत ! एवं खलु देव्याः कात्यायन्याः गौः । एतदवधिरेव शापजन्मा दोषः । यो हि विस्मृत वीज संस्कारं तिरोधात् ।

सारसिका । स्वगतं । पुढ़मं एव्व एसो सव्वो वुत्तन्दो कहिश्रो मह कसे भअवदीए ।

कलकण्ठः । ऊर्द्ध मवलोक्य सविस्मयं । पश्याश्चर्य्यं ।

किं चन्द्रमा भुव मुपैति विसर्प दंशुः निर्वर्ण्य ।

किं रूढ़पच्च पटलो रजताद्रि रुचैः । पुनर्निर्वर्ण्य ।

ज्ञातं चलध्वज शिखोल्लिखिताम्बुवाहं

खेतं विमान मधि सिन्धु सितेव नौका ॥

सर्वे सविस्मयं पश्यन्ति ।

मन्दा । विलोक्य । वत्स कलकण्ठ ! सत्यं विमान मेतत् । पुनर्निर्वर्ण्य । अत्र च अपरिमित परिवारः कोऽपि दिव्यपुरुषः ।

सितातपत्री चलरत्नकुण्डलः

सचापपाणिश्च सुवर्णविग्रहः । स प्रत्यभिज्ञं (५५)

निर्वर्ण्य सानन्दम् । प्रियं नः प्रियं नः ।

सुतां वरं चेचितुमुत्सुकः स्वयं

समेति विश्वावसुरेष मे सखा ॥

मल्लि । विलोक्य सहर्षं सवाष्पञ्च । अंमहे तादो आअदो ।

मारु । भगवति ! पश्य माकन्दोऽपि दक्षिणे भागे ।

ससम्भ्रम मुत्तिष्ठन्ति ॥

---

(५५) स प्रत्यभिज्ञं साभिज्ञानमित्यर्थः ।

ततः प्रविशति अम्बरयानेन विमानस्थः सह माकन्देन यथोद्दिष्टो विश्वावसुः ।

अधस्ताद्विलोक्य । अप्येतदेव जामातुर्मे मारुतस्य कुसुमपुरस्कन्दनिविष्टं स्कन्दावारपदम् । (५६)

माकन्दः । हस्तेन दर्शयन् । ननु वदामि सख्युर्मे निवासभवनमपि एतदेवेति निर्वर्ण्य सहर्षम् । एष खलु सह भगवत्या मन्दाकिन्या मल्लिका सखो मारुतः सम्भ्रमविमुक्तासनः सम्भावयत्यत्र भवतः समागममहोत्सवम् ।

विश्वावसुः । तथा ससम्भ्रमं मारुतं विलोक्य सहर्षम् । स्वगतम् । अद्यैव मे प्रसीदति हृदयम् ।

तथाहि । जायते सह कन्याभिः शोकशङ्कुः कुटुम्बिनाम् ।
भज्यते च स्वयं तासां लब्धे सुसदृशे वरे ॥

निर्वर्ण्य सप्रत्यभिज्ञम् ।

स एषदोरन्तरे मुक्ताहारः योहि मया वत्साया मल्लिकायाः कण्ठे स्वयमामुक्तः ।

स्मृत्वा ।

अयं हि । शेषेण पुरुहूताय पुरुहूतेन सादरम् ।
विद्याधराधिराजाय तेन मह्यं समर्पितः ॥

---

(५६) स्कन्धावारपदम् । स्कन्धावारस्य सेनायाः पदं स्थानमित्यर्थः। शिविरमिति यावत् । केचित्तु कटकस्कन्धाधारशब्दौ नगरार्थक तथैव दृष्टचरौ न पुनः सेनार्थकत्वेनेति । तन्न अत्र कुसुमपुरस्कन्धनिविष्टं स्कन्धावार पदं इत्युक्त्या नगरप्रान्तनिविष्टं नगरमित्यर्थे असाङ्गत्यापातात् किन्तु सेनार्थकत्व मनुमतं पुरुषोत्तमेन । स्कन्धावारः स्यात् कटकः शिविरं बलसंस्थितिरिति ।

माकन्दः । विलोक्य ।

सन्नमति विमानं संस्प्रष्टुं भुवम् । तदवतरतु तत्र भवान् ।

विश्वावसुः । माकन्द हस्तावलम्ब्य विमानावतारणं नाटयति ।

मन्दा । सहर्षमुपसृत्य । सगद्गदम् । स्वागतं विद्याधरामात्यस्य ।

विश्वावसुः । अये भगवति मन्दाकिनि ! नमोऽस्तु निगमव्याजोपकारनिरतायै भवत्यै ।

मारु । सविनयं प्रणमति ।

विश्वावसुः । सपुलकाभ्यां दोर्भ्यां प्रणमन्तमेव परिरभ्यते ।

परिजनः । काञ्चनासनमुपक्षेपयति ।

विश्वावसुः । उपविशति । मारुतकलकण्ठौ माकन्दमालिङ्ग्य ।

सखे ! दिष्ट्या सर्वे वयं सङ्गताः स्मः ।

सर्व्वे यथोचितमुपविशन्ति ।

मल्लि । सबाष्पमुपसृत्य । हा ताद !

विश्वावसुः । बाष्परुद्धनयनः करतलेनालम्ब्य परिरभ्योत्सङ्गेन धारयन् अस्तिमितहृदयः क्षणं तूष्णीं भवति ।

मल्लि । पितुः कण्ठलग्ना भवति ।

विश्वावसुः । मल्लिकां निर्वर्ण्य स्वगतम् । अहो ! भगवत्याः कात्यायन्याः प्रसादेन प्रागवस्थातो न हीयते अङ्गानां संस्थानविशेषः । सवात्सल्यातिशयम् ।

(५७) गात्रं शिरीषदलकोमलतास्पदं तद्

वर्णस्तु हेमकदली नवकन्दलश्रीः ।

---

(५७) गात्रमिति । हेमकदल्याः नवकन्दलस्य नूतनाङ्कुरस्य

संरक्त कोमल कुङ्कमधुरःस्वरःसः

निर्वर्ण्य। सौगन्ध्यमाङ्गमवधीरित पुण्डरीकम्॥

सौमित्यं नाटयति।

मल्लिका। पत्रविलज्जमाना उत्सङ्गादुत्थाय पार्श्वे तिष्ठति।

मारु। सानन्दं सानुरागञ्च।

हर्षनिश्चलविलोचनोन्मिषत्

पक्ष्मपालिगलदश्रुमन्थरम्।

मल्लिकां नमयति त्रपावती

फुल्लकोकनदतुल्यमाननम्॥

मल्लि। विश्वावसुं पश्यन्ती सक्षोभम्। स्वगतम्। दुवे सु वि-
तादेस् सरिसो एव्व मह हिअ आवत्था।

विश्वावसुः। विहस्य। भगवति मन्दाकिनि! अनुग्रहा-
येव परं तव भवतो महर्षेः सुलभमन्योः शापः। येन पावनो-
ज्ज्वलचरितौ ब्रह्मदत्त विश्वावसू अपि वयमिव अपत्यवतां
धुरमारोपितौ। (५८)

मन्दाकिनी। सश्लाघम्। अति मनोहरमभिहितम्। चतु-
र्णामपि वां परस्पर तुल्यानां सदृशाविव वत्सौ।

विहस्य। देवस्य मारुतस्यैव ब्रह्मदत्तस्य नन्दनम्।

विश्वावसौ यथेयं ते तथा विश्वावसोरपि॥

विश्वाव। मल्लिका मारुतौ दृष्ट्वा। सत्यं मन्यते।

---

श्रीरिव श्रीः शोभेव शोभा यस्य इति विग्रहः कन्दलन्तु नवाङ्कुरे इति
नानार्थरत्नमाला।

(५८) येन शापेन अपत्यवतां प्रथमापत्यशालिनामित्यर्थः।
प्रशंसायां सतृप्।

रमयन्तिका नवमालिका कालिन्द्यः । परस्परं जनान्तिकम् । अम्महे भअवदीए मन्दाइणीए पहावो । पुढमं संवरअस्स वञ्चणम् तह तह कुणन्तीए वि महाणंदजणणं एक्कं णिव्वूढं पअरणम् । अह उण कहा कहणेण असो पबन्धो दंसिओ ।

विश्वावसुः । परिवृत्य रमयन्तिकादीन्विलोक्य । भगवति ! का पुनरेताः ।

मल्लि । शनैः पितुः स्कन्धावलम्बिनी कर्णे । एदाओ सव्वाओ मह पिअसहीओ । पृथक् पृथक् निर्दिश्य । एसा मह बहु पंसु कीलणादो आरद्धिअ अप्प णिव्विसेसा पिअसही णोमालिआ णाम ।

विश्वावसुः । स्वयमपि शनैरेव । अपरे पुनः के ।

मल्लि । एदाओ भअवदीए मन्दाइणीए सारसिआ कालिन्दीओ णाम महाभाआओ अन्ते वासिणीओ ।

विश्वावसुः । वत्से ! अन्यामपि कथय ।

मल्लि । एसा अमच्च विह्णुराअ उत्तिया रमअन्तिआ णाम पिय सहस्स कलअण्ठस्स वल्लहा ।

विश्वावसुः । सबहुमानम् । स्वगतम् । कथितं छत्वमेतमाकन्देन युज्यत एसा विशुद्धोदाररूपा अव्याकृतपराभिजात्या कलकण्ठस्य ।

प्रकाशम् । स्मयमानः वत्से ! कस्य प्रियसखः कलकण्ठः ।

मल्लि । सलज्जमपक्रामति ।

विश्वावसुः । सानन्दम् ।

...ढ़ो मनोरथो मेऽद्य सम्पूर्ण
...व्यसंप... (स...) वार्त्ताग्रहणव्रीड़ा गुरु यदि म
...नुप...
...न्दा । विदितलज्जाहेतुः सस्मितम् । किमिति लज्जते वत्सा ।

विश्वावसुः । न मया ज्ञायते । केवलं रमयन्तिकां
...यसखस्य वल्लुतेति निवेदयन्ती कस्य प्रियसख इति पृष्टा
...ज्जते । सर्वे स्तिमितगर्भा भवन्ति ।

रमयन्तिका मल्लिकया सह अपलपते ।

मारुत । तथाभूतां प्रियां दृष्ट्वा साभिलाषम् । स्वगतम् । हन्त
...जन समक्षमिति न पारयामि । वाञ्छामि परिरब्धुम् ।

प्रविश्य पटाक्षेपेण भ्रमरकः । प्रणम्य । भअवदि ! अमच्च वीस-
वसु विह्लुराअ सहिएण महाराएण पेसिदा एसा पत्तिआ ।

मन्दाकिनी । गृहीत्वा वाचयति ।

विश्वानन्द मृगाङ्क वत्स ! भवता व्यूढ़ा भवन्मल्लिका !
यत् तंशम्बरकं निबध्य विटपे तत् केन न स्मर्य्यते ।
यच्चोवाह सविष्णुराततनयां मन्दाकिनी वेषवान्
मित्रं ते कलकण्ठ ऊर्जितमतिस्तच्चानुमोदामहे । इति ॥

सर्वे हर्षं नाटयन्ति ।

विश्वा । सश्लाघम् । अहो ! महानयं भगवत्याः नय
प्रभावः । ज्ञातं मे सर्वमेतन्माकन्दस्य मुखात् ।

नवमालिका । सहि रमअन्तिए ! पेच्छ महुअरिआ
पड़िहार भूमिम्मि पाचइ ।

मन्दा । वत्स मारुत ! किन्ते भूयः प्रियमुपहरामि ।

मारुतः ।

कल्याणीश्चिरकाङ्क्षितां मसुलभां दिष्ट्या। परस्परं जनानि-
सन्तुष्ट्येव तथैव बन्धव इमे जम्मदयासादिते प्रेमं संवर-
प्रियान् मे कलकण्ठ एष दयितासङ्गेन सम्वर्द्धते
माकन्दं पुनरप्यवैमि सुहृदं किं मेऽस्त्यतोऽपि प्रियम्॥

तथापीदमस्तु भरतवाक्यम्।

भद्रं भजन्तु विश्वे भक्तिर्विष्णौ नृणां शिवे वास्तु।
धर्म्मे रमन्तु भूपाः श्रीमन्तः सन्तु विद्वांसः॥

इति निष्क्रान्ताः सर्वे।

इति श्रीमदुद्दण्डकवीन्द्रकृते मल्लिकामारुते प्रकरणरत्ने
दशमोऽङ्कः समाप्तः।

उद्दण्डं रङ्गनाथः सुत मलभत यं रङ्गदेवी तथाम्बा
व विधेयो महर्षिर्निरवधि महिमा यद्गिरि जागरूकः।
तस्य श्रीविक्रमाम्ना बहुमतिरचिते मल्लिकामारुतेऽस्मिन्
मूर्द्धन्योऽगात् नवानां(५९)प्रकरणतिलके निष्कलङ्कोऽयमङ्कः॥६०

---

(५९) नवानां मूर्द्धन्यः दशम इत्यर्थः।
(६०) प्रकरण तिलके प्रकरण श्रेष्ठे इत्यर्थः।

पण्डितकुलतिलकस्य बि, ए, उपाधिधारिणः श्रीजीवानन्दविद्या-
सागरभट्टाचार्य्यस्य आज्ञया श्रीमद्रङ्गनाथ कविना विरचिते
श्रीमदुद्दण्डकवीन्द्रकृतमल्लिकामारुतव्याख्याने
परिमलाख्याने दशमोऽङ्कः
समाप्तः।



